


श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# अणुभाष्यम्

श्री छलारीशेषाचार्यविरचितया
तत्त्वप्रकाशिकाव्याख्यया
समलङ्कृतम्

# AṆUBHĀṢYA

OF

SRĪ MADHVĀCĀRYA

WITH

THE COMMENTARY TATTVAPRAKĀSIKĀ

OF

SRĪ CHALĀRĪSEṢĀCĀRYA

*General Editor* :

VIDWAN DR. H. P. MALLEDEVARU, M.A., Ph.D.

*Editor* :

VIDWAN R. G. MALAGI, M.A.

प्राच्यविद्यासंशोधनालयः

ORIENTAL RESEARCH INSTITUTE, MYSORE
1985

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES No-154

मैसूरु विश्वविद्यानिलयः

प्राच्यविद्यासंशोधनालयग्रन्थमाला—१५४

# AṆUBHĀṢYA

OF

SRI MADHVACHARYA

WITH

THE COMMENTARY, TATTVA PRAKASHIKA

OF

SRI CHALARI SESHACHARYA

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# अणुभाष्यम्

THE ORIENTAL RESEARCH INSTITUTE
MYSORE

1985

UNIVERSITY OF MYSORE

ORIENTAL RESEARCH INSTITUTE SERIES-154

# ANUBHĀSYA

OF

SRI MADHVACHARYA

WITH

THE COMMENTARY, TATTVA PRAKASHIKA

OF

SRI CHALARI SESHACHARYA

General Editor :

Vidwan Dr. H. P. MALLEDEVARU, M.A., Ph.D.
Director, Oriental Research Institute, Mysore and
Professor and Head, Department of P. G. Studies and
Research in Sanskrit, Manasagangotri, MYSORE

ORIENTAL RESEARCH INSTITUTE, MYSORE-5

1985

मैसूरु विश्वविद्यानिलयः

प्राच्यविद्यासंशोधनालयग्रन्थमाला—१५४

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# अणुभाष्यम्

श्री छलारी शेषाचार्यविरचितया
तत्त्वप्रकाशिकाव्याख्यया
समलङ्कृतम्

प्रधानसम्पादकः
विद्वान् डा. हेच्. पि. मल्लेदेवरु, एम.ए., पिहेच्.डि.
निर्देशकः प्राच्यविद्यासंशोधनालयः
स्नातकोत्तरसंस्कृताध्ययनसंशोधनविभागस्य
प्राध्यापकः, मुख्यश्च
मानसगङ्गोत्री, मैसूरु विश्वविद्यानिलयः,
मैसूरु.

प्राच्यविद्यासंशोधनालयः, मैसूरु
1985

ORIENTAL RESEARCH INSTITUTE SERIES-154

# AṆUBHĀṢYA

OF

SRI MADHVACHARYA

WITH

THE COMMENTARY, TATTVA PRAKASHIKA

OF

SRI CHALARI SESHACHARYA

*Edited by*

R. G. MALAGI, M.A.

Nyaya, Vedanta Vidvan

Deputy Director

Oriental Research Institute, Mysore.

ORIENTAL RESEARCH INSTITUTE, MYSORE-5

1985

प्राच्यविद्यासंशोधनालयग्रन्थमाला — १५४

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# अणुभाष्यम्

श्री छलारीशेषाचार्यविरचितया
तत्त्वप्रकाशिकाव्याख्यया
समलङ्कृतम्

सम्पादकः
आर्. जि. माळगि, एम्.ए.
न्याय—वेदान्त विद्वान्
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः
मैसूरु

प्राच्यविद्यासंशोधनालयः मैसूरु
1985

## FOREWORD

The Oriental Research Institute, Mysore is happy to present the Anubhashya of Sri Madhvacharya with the commentary 'Tattvaprakashika' of Chalari Seshacharya. This rare commentary hitherto unpublished, is seeing the light of the day for the first time now. We hope that it will be received warmly by Sanskrit lovers in general and admirers of Dvaita Philosophy in particular.

*Anubhashya :* Sri Madhvacharya, the illustrious philosopher of Karnataka in the 13th Cen. A.D., propagated the Dvaita (Dualism) philosophy with 37 remarkable works. He was a scholar par excellence in the Vedas, Puranas, Vedanta and Indian Logic. He wrote commentaries on the Brahamasutras viz., Brahmasutra Bhasya, Brahmasutra anuvyakhyana, Brahmasutranyayavivarana and Brahmasutra-anubhashya. The fact that Sri Madhva wrote four commentaries on the Brahmasutras and that there is novelty of ideas and matter in all the four commentaries is a testimony to his vast and deep knowledge. Each of these commentaries has again given scope to numerous subcommentaries. The present edition contains one such subcommentary 'Tattvaprakashika on the Anubhashya.

*The Commentator:* The author of the commentary 'Tattvaprakasika' is Chalari Seshacharya. He was a disciple of Chalari Narasimhacharya & obtained initiation (Mantropadesha) from Sri Satyanidhi Tirtha of Uttaradi Matha. These facts are evident from the words of the author (Seshacharya) himself. There cannot be any doubt that our author belonged to Karnataka. His son Sankarshanacharya wrote a work called 'Jayatirthavijaya'. All these facts lead us to conclude that Seshacharya belonged to the second half of the seventeenth century.

*Tattvaprakashika :* The Anubhashya of Sri Madhvacharya is very pithy and brief. Most of the passages need elucidation

even from the point of view of pundits. The present commentary fulfills this need ably. The author, who was a great scholar of his times, utilises his intellectual sharpness and mastery of several shastras to clear the doubts. He has about sixteen works to his credit, some of which have yet to be published. We believe that the scholars of Madhva school will benefit very much by the study of the present work. The speciality of the work is that the quintessense of each Adhikarana (Topic) is succinctly stated before the exposition of the Bhashya thereon starts. This helps the scholars in understanding Madhva's point of view on every topic.

Vidvan R. G. Malagi, M.A. Deputy Director, Oriental Research Institute, Mysore has endeavoured to make this edition very reliable. He has utilized two manuscripts of our Institute as well as other two manuscripts obtained from outside. He has given the sources of quotations at the bottom of each page and elucidatory notes wherever necessary.

The present edition provides the Brahmasutrapatha also separately at the beginning to facilitate its parayana (recitation)

The Ford Foundation has been giving generous financial aid to the Oriental Research Institute to acquire the latest Microfilm Equipment and to conduct a Manuscript Conservation Programme. I wish to express our gratitude to the benevolent authorities of the Ford Foundation, New Delhi. So far the Institute has acquired the Dokumator Microfilm Camera from West Germany and the Hirakawa 35 Portable Microfilm Camera from Japan with the Ford Foundation's aid. Other equipments will also be acquired shortly and the Institute will have a well-equipped Microfilm Section which will enable us to microfilm precious manuscripts and to meet the demand of the scholars of both India and abroad for microfilm copies of valuable manuscripts.

The munificent grant from the Government of India and Government of Karnataka has made it possible to bring out the

following publications :—

1. Shivatattva Ratnakara (Vol. III)
2. Nyayamanjari (Vol. I)
3. Descriptive Catalogue (Vol. IX)
4. Vatulashuddhagama (Vol. I)
5. Yogashataka
6. Vatulashuddhagama (Vol. II)
7. Brahmasutrabhasya (Vol. I)
8. Madhaviyadhatuvrutti (Vol. I)
9. Brahmasutrabhasya (Vol. II)
10. Bodhayanagrihyasutra
11. Raghunathavijaya
12. Shivanamakalpalatalavala
13. Descriptive Catalogue (Vol. X)
14. Descriptive Catalogue (Vol. 7A)
15. Anubhasya with commentaries

and the following books are in the press :—

1. Siddhanta Siddhanjana
2. Trivenika
3. Tarkatandava (Vol. I)
4. Viragama (Vol. I)
5. Arthashastra of Kautilya
6. Vruttaratnavali
7. Apastamba Grihyasutra
8. Pancatantrasangraha
9. Descriptive Catalogue (Vol. XI)
10. Viragama (Vol. II)
11. Descriptive Catalogue (Vol XII)
12. Apastamba Srautasutra

The grant is greatefully acknowledged.

The Vice-Chancellor, The Registrar and other authorities of the University of Mysore, Mysore have been encouraging us in

our endeavour to bring out Sanskrit classics. The members of the University Syndicate and the Advisory Committee of the Oriental Research Institute have been extending valuable advice. M/s. Malik Printers, Mysore, have neatly printed this volume. It is my pleasant duty to thank all of them.

H. P. MALLEDEVARU

# अनुक्रमणिका

# प्रस्तावना

**सूत्रकारः—**

श्रीपतिः श्रीमन्नारायणः ब्रह्मादिदेवैः अर्थितः सत्यवत्यां पराशरात् वेदव्यासनाम्नाऽवततार । आसीत् खलु तस्यावतारस्यावश्यकता यतः तदानीं सर्वेऽपि जनाः ज्ञानपिपासवः ज्ञानार्थं योग्यं उपदेष्टारं अन्विच्छवश्च । अवतीर्य च भगवान् वेदव्यासः उत्सन्नं वेदं व्यञ्जयन् चतुर्धा व्यभजत् । वेदानां विभागकरणादेव च तस्य वेदव्यासः इति अन्वर्थं नाम । वेदव्यवस्थां कृत्वा वेदार्थनिर्णयाय ब्रह्मसूत्राणि चकार । अत एव "[1]वेदार्थनिर्णायकन्यायग्रथनात्मकत्वं सूत्रत्वम्" इति सूत्रलक्षणं कथितम् । यदप्युक्तं सूत्रलक्षणम्—

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" ॥ इति,

तदप्यत्र सम्यक् सङ्गच्छते । एवं ब्रह्मसूत्राणि तथा महाभारतादीतिहासग्रन्थान् तथा अष्टादशपुराणादीनि च विरचय्य मनुष्यपितृपक्षिषु ज्ञानं संस्थाप्य निर्लिप्तः स भगवान् व्यासः विराजते । अस्मिन् विषये प्रमाणं तु,

[2]स्कान्दे—

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरस्सराः ॥
शरण्यं शरणं जग्मुः नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः

---

[1] न्यायसुधा । (१—१—१)
[2] ब्रह्मसूत्रभाष्यम् । (१—१—१)
*

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदान् उज्जहार हरिस्स्वयम् ॥

चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ॥

चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ॥

ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ॥ इति ।

**भाष्यकारः —**

वर्तन्ते खल्वनेके व्याख्यातारः तथा भाष्यकाराश्चैतेषां सूत्राणाम् । तेष्वन्यतमः द्वैतमतप्रतिष्ठापनाचार्य इति लोके प्रसिद्धः श्रीमान आचार्यमध्वः। स तु वायोरवतारभूतः । वेदवत्यां मध्यगेहोपाह्वयभट्टात् वासुदेव इति नाम्ना अवततार । पित्रा प्राप्तोपनयनसंस्कारः, अच्युतप्रेक्षाचार्यात् स्वीकृतसंन्यासाश्रमश्च । तथा तेनैव वेदान्तसाम्राज्यसिंहासने पट्टाभिषिक्तश्च । ततः मध्वाचार्य इति गुरुदत्तनामा स्वावतारमुख्यकार्यपरोऽभवत । भारतदेशे आसेतुहिमाचलं सञ्चार्य द्वैतमतं प्रसार्य द्वैतमताचार्य इति प्रसिद्धिमवाप्नोत् । प्रसिद्धानि खलु नवरत्नानीति माध्वमतस्य नवतत्त्वानि एकेनैव श्लोकेन सङ्गृहीतानि ।

तथाहि—"[1]श्रीमन्मध्वमते हरिः परतरः, सत्यं जगत्तत्त्वतो
भेदो, जीवगणा हरेरनुचरा नीचोच्चभावं गताः ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥"

---

[1] अयं च श्लोकः श्रीव्यासतीर्थैः विरचित इति प्रसिद्धिः वर्तते ॥

(१) विष्णुः सर्वोत्तमः ।

(२) जगत् सत्यम् ।

(३) 1. जीवब्रह्मणोः भेदः । 2. जीवजीवयोः भेदः ।
3. जडजडयोः भेदः । 4. जीवजडयोः भेदः ।
5. ब्रह्मजडयोः भेदः । एवं पञ्चविधः भेदः तात्त्विकः ।

(४) जीवाः भगवत्सेवकाः ।

(५) तारतम्ययुक्ताः । (नीचोच्चभावयुताः)

(६) स्वस्वरूपानन्दाविर्भाव एव मोक्षः ।

(७) निर्मला भक्तिः मोक्षसाधनीभूता ।

(८) प्रत्यक्षानुमानागमाः प्रमाणानि ।

(९) सदागमैकवेद्यः भगवान् नारायणः ॥

इत्येवं द्वैतसिद्धान्तमूलभूतानि तत्त्वानि लोके प्रसारयन् सः मध्वः तत्त्वज्ञानानुकूल्यार्थं सप्तत्रिंशदधिकसंख्याकान् ग्रन्थान् रचयामास । ते च ग्रन्थाः सूत्रप्रस्थानम्, उपनिषत्प्रस्थानं गीताप्रस्थानं, दशप्रकरणं, आचारग्रन्थाः, पुराणप्रस्थानं, स्तोत्रग्रन्थाः, वेदव्याख्यानम् इति वर्गीकर्तुं शक्यन्ते ।

## सूत्रप्रस्थानम्

### अणुभाष्यम्—

ब्रह्मसूत्रमधिकृत्य आचार्यमध्वेन व्याख्यानचतुष्टयं लिखितम् । प्रथमं ब्रह्मसूत्रभाष्यम् । द्वितीयं ब्रह्मसूत्रानुव्याख्यानम् । तृतीयं ब्रह्मसूत्रन्यायविवरणम् । चतुर्थं ब्रह्मसूत्राणुभाष्यम् । ' संक्षेपविस्तराभ्यां च प्रवदन्ति मनीषिणः " इति अभियुक्तवाक्यानुसारेण आचार्यः ब्रह्मसूत्राणां विस्तृतं भाष्यं गद्यात्मकं विरचय्य, भाष्यमनुसृत्यैव श्लोकात्मकं व्याख्यानान्तरं अनुव्याख्याननामकं व्यरचयत् । भाष्यार्थविस्ताररूपत्वादेव तस्य अनुव्याख्यानमिति सार्थकं नाम । तस्यैवानुव्याख्यानस्य श्रीजयतीर्थः " श्रीमन्न्याय-

**

सुधा " इति नामकं व्याख्यानमलिखत् । अनुव्याख्यानं विरचय्य ततोऽपि संक्षेपतः व्याचिख्यासुः आचार्यमध्वः न्यायविवरणं व्यरचयत् । ततः अणुभाष्यम् इति प्रसिद्धम् अतिसंक्षिप्तं व्याख्यानान्तरमलिखत् । भक्तानां नित्यं पारायणार्थम् अत्युपयुक्तोऽयं ग्रन्थः । एकैकस्याधिकरणस्यार्थः एकेनैव शब्देन निरूपितः । यथा विष्णुरेव विजिज्ञास्यः इति शब्देन ' ओम् अथातो ब्रह्मजिज्ञासा ओम् ' इत्यस्य जिज्ञासाधिकरणस्य तात्पर्यम् उक्तम् । एवम् एकेनैव शब्देन अनेकेषाम् अधिकरणानां तात्पर्यमपि क्वचिदुच्यते । यथा द्वितीयाध्यायस्य चतुर्थपादे ' मुख्यप्राणश्चेन्द्रियाणि" इति शब्देन त्रयाणाम् अधिकरणानां तात्पर्यम् उपवर्णितम् । अत एवास्य ग्रन्थस्य अणुभाष्यम् इति सार्थकं नाम । समस्तानामपि सूत्राधिकरणानाम् अर्थसर्वस्वं ३० श्लोकैरेव संगृहीतमिति महत् कौशलं भाष्यकारस्य । नारायणपण्डिताचार्या अपि "[4]अनन्तोऽर्थः प्रकटितः त्वयाऽणौ भाष्यसङ्ग्रहे ॥ " इत्यत्र यथा कृष्णः स्वानने समस्तं जगत् दर्शयामास एवमेवाचार्योऽपि अणौ भाष्ये अनन्तार्थान् प्रकटीचकार इति अणुभाष्यस्य नामसार्थक्यम् अवदन् । "[5]अधिकरणार्थसङ्ग्रहव्याजेन सर्वशास्त्रार्थसंग्रहरूपम् अणुभाष्यम् कर्तुकामः " इत्यत्र छलारी आचार्याः " अणुभाष्यम् " इति नाम निर्दिष्टवन्तः ।

अस्यैवाणुभाष्यस्य (१) सर्वशास्त्रार्थसंग्रहः (२) संक्षेपभाष्यम् (३) भाष्यसंग्रहः, (४) संग्रहभाष्यम् इति अनेकानि नामानि वर्तन्ते । तथाहि—

(१) "[6]पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः " इति आनन्दतीर्थभगवत्पादाचार्याः ।

---

[4] सुमध्वविजयः । (१५—८२)

[5] तत्त्वप्रकाशिका । (१—१—१)

[6] अणुभाष्यम् । (४—८)

" [7]विष्णोः प्रसादैकबलात् सर्वशास्त्रार्थसंग्रहम् ।" इति च त्रैविक्रमार्यदासः ।

(२) "भगवानानन्दतीर्थमुनिः यथावद्व्याचिख्यासुः भाष्यानुभाष्ये विधाय **संक्षेपभाष्यमपि** विधित्सुः" इति तत्त्वमञ्जर्यां श्रीराघवेन्द्रतीर्थाः ।

(३) " [8]अनन्तोऽर्थः प्रकटितः त्वयाऽणौ **भाष्यसंग्रहे** ।" इति नारायणपंडिताचार्यः ।

(४) " [9]अथेदानीमेव परिसमापितं संग्रहभाष्यं भगवानाचार्यः ।" इति त्रैविक्रमार्यदासः ।

इत्येवमादिप्रकारेण अणुभाष्यव्याख्यातारैः अनेकान्यस्य भाष्यस्य नामानि संगृहीतानि वर्तन्ते ।

अणुभाष्यव्याख्यानानि--

| | | | |
|---|---|---|---|
| १) | [10]अणुभाष्यटीका | | नारायणपण्डिताचार्यः |
| २) | [11]अणुभाष्यटीका | | [12]जयतीर्थः |
| ३) | [13]अणुभाष्यटीका | (सिद्धान्तदीपिका) | अनन्तभट्टः |
| ४) | [14]अणुभाष्यटीका | (तत्त्वप्रकाशिका) | छलारी शेषाचार्यः |

---

[7] आनन्दमाला ।

[8] सुमध्वविजयः । (१५—८२)

[9] आनन्दमालान्ते ।

[10] जयतीर्थाचार्यकृतहस्तलिखितग्रन्थालये वर्तते ।

[11] O.R.I. P 1107/2.

[12] ग्रन्थस्यास्य मङ्गलपद्ये जयमुनेः नमस्कृतत्वात् अयं जयतीर्थः प्रसिद्धजयतीर्थादन्य इति भाति ।

[13] O.R.I. P 2980.

[14] O.R.I. B 310+O.R.I. C 1278.

| | | | |
|---|---|---|---|
| ५) | [15]अणुभाष्यटीका | (तत्त्वमञ्जरी) | राघवेन्द्रतीर्थः |
| ६) | [16]अणुभाष्यटिप्पणी | | — |
| ७) | [17]अणुभाष्यटिप्पणी | | — |
| ८) | [18]अणुभाष्यटिप्पणी | | — |
| ९) | [19]अणुभाष्यटिप्पणी | | — |
| १०) | [20]अणुभाष्यटीका | (आनन्दमाला) | त्रैविक्रमार्यदासः |
| ११) | [21]अणुभाष्यटीका | (भावप्रकाशिका) | नरसिंहाचार्यः |
| १२) | [22]अणुभाष्यटिप्पणी | | श्रीनिवासाचार्यः |
| १३) | [23]अणुभाष्यटिप्पणी | | बिदरहल्ली श्रीनिवासतीर्थः |
| १४) | [24]अणुभाष्यविवृतिः | | आनन्दतीर्थार्यसूनुः |
| १५) | [25]अणुभाष्यप्रपञ्चनम् | | पैठणी नारायणाचार्यः |

इत्येवं भाष्यस्यास्य पंचदशाधिकव्याख्यानान्युपलब्धानि ।

एतेषां व्याख्यानानां मध्ये श्रीराघवेन्द्रयतिविरचितं "[26]तत्त्वमञ्जरी"—

---

[15] O.R.I. C 339 + C 278 मुद्रितम् ।

[16] O.R.I. C 1338.

[17] जयतीर्थसंस्कृतहस्तलिखितग्रन्थालये वर्तते ।

[18] जयतीर्थसंस्कृतहस्तलिखितग्रन्थालये वर्तते ।

[19] जयतीर्थसंस्कृतहस्तलिखितग्रन्थालये वर्तते ।

[20] O.R.I. C 2088 + C 2185 मुद्रितम् ।

[21] O.R.I. C 2163

[22] O.R.I. C 2124

[23] जयतीर्थसंस्कृतहस्तलिखितग्रन्थालये वर्तते ।

[24] O.R.I. C 2245

[25] O.R.I. C 2380

[26] मुम्बय्यां निर्णयसागरमुद्रणालये टि. आर. कृष्णाचार्येण शके १८२३. अब्दे मुद्रापितम् ।

नामकं व्याख्यानं तथा त्रैविक्रमार्यदासविरचितं "[27]आनन्दमाला" नामकं व्याख्यानं च मुद्रिते । वेणुपल्ली श्रीनिवासतीर्थकृतव्याख्यानमपि मुद्रितमस्ति–'विद्या' पत्रिकायाम् । मया त्विदानीं "तत्त्वप्रकाशिका-नामिका अणुभाष्यटीका सम्पादिता वर्तते ।

**ग्रन्थकर्ता** — अस्याः टीकायाः रचयिता छलारी नरसिंहाचार्यशिष्यः छलारी शेषाचार्यः ।

"छलारिनरसिंहार्यशिष्यशेषविनिर्मिता ।
अणुभाष्यस्य टीका स्यात् सतां सन्तोषकारिणी ॥

इति ग्रन्थस्यान्ते स्वयमेव स्वगुरोः, स्वस्य, तथा स्वकृतग्रन्थस्य च नाम ग्रन्थकर्ता निर्दिष्टवान् । अयं तु धर्मपुरी–पुरुषोत्तमाचार्यस्य सुतः । छलारीनृसिंहाचार्यस्य तथा श्रीसत्यनिधितीर्थाख्ययतेश्च शिष्यः । (श्रीमद्धर्मपुरीवासि-पुरुषोत्तमसंज्ञिनाम् । आचार्याणामात्मजेन निवृत्तिक्षेत्रवासिनाम् ॥ इति तन्त्रसारसंग्रहटीकायाम् ।) मन्त्रोपदेष्टा गुरुः उत्तरादिमठाधीशः श्रीसत्य-निधितीर्थः (1638–1660 A.D.) अयं च विषयः -

"[28]सत्यनिध्याख्ययतिराट् छलारी नृहरी गुरू ।
मन्त्रविद्योपदेष्टारौ वन्देऽभिमतसिद्धये ॥"

इति शेषाचार्यैरेव स्वगुरुनमस्कारस्य कृतत्वात् अवगम्यते । अयं कर्णाटक-देशीयः । जयतीर्थविजयस्य कर्ता सङ्कर्षणाचार्यः शेषाचार्यस्य सुतः ।

**ग्रन्थकर्तृकालः** — १६३८–१६६० कालवासी श्रीसत्यनिधियतिः तथा छलारी नरसिंहाचार्यश्च शेषाचार्यस्य गुरू । नरसिंहाचार्यस्य कालस्तु

---

[27] दशप्रमतिप्रकाशनगर्मित्या क्रि.श. १९७० तमे अब्दे रजतपीठपुरे मुद्रापितम् ॥
[28] तन्त्रसारटीकारम्भे ॥

प्राय: १६१०–१६९० A.D. तस्य शिष्य: शेषाचार्य: गुरो: पितुश्च समकालिक: । अत: तस्य काल: प्राय: सप्तदशशतकस्योत्तरार्ध: इति वक्तुं शक्यते ।

**ग्रन्थकर्तुः इतराः कृतयः—**

अयं शेषाचार्य: उद्दामपण्डित: प्रतिभाशाली च । तस्य ग्रन्थावलोकनेनैव ज्ञायते तस्य पाण्डित्यम् । अनेकेषां ग्रन्थानां व्याख्याता रचयिता चायम् । अस्य कृतयः—

| | | |
|---|---|---|
| १) | सुमध्वविजयटीका | (प्रकटिता) |
| २) | प्रमाणचन्द्रिका | ,, |
| ३) | तन्त्रसारटीका | ,, |
| ४) | वायुस्तुतिटीका | ,, |
| ५) | नखस्तुतिटीका | ,, |
| ६) | अणुभाष्यटीका | (अप्रकटिता) |
| ७) | तत्त्वसंख्यानटीका-टिप्पणी | ,, |
| ८) | मणिमञ्जरीटीका | ,, |
| ९) | निर्णयरत्नम् । | ,, |
| १०) | लघुतिथिनिर्णय: । | ,, |
| ११) | सुशब्दप्रदीप: । (पाणिनीयसूत्रव्याख्या) | ,, |
| १२) | छलारी नरसिंहाचार्यस्तुति: । | ,, |
| १३) | कर्मनिर्णयटीकाटिप्पणी । | (अनुपलब्धा) |
| १४) | षट्प्रश्नभाष्यटीकाटिप्पणी । | ,, |
| १५) | भागवततात्पर्यटीका (अष्टमस्कन्दमात्रम्) | (प्रकटिता) |
| १६) | भागवतश्रुतिगीताव्याख्यानम् । | (अनुपलब्धा) |

एवं षोडशग्रन्थकर्तायं शेषाचार्य: । एषु ग्रन्थेषु प्रकटिता: केचन,

केवनाप्रकटिताः मैसूरु प्राच्यविद्यासंशोधनालये तथा व्यासनकेरे जयतीर्थ-पुस्तकसंग्रहालये तथा बेंगलूरु उत्तरादिमठीयग्रन्थालये चोपलभ्यन्ते। ग्रन्थद्वयं नोपलब्धम्।

## एतद्व्याख्यानवैशिष्ट्यम् —

षोडशग्रन्थमध्ये अणुभाष्यस्य टीका गूढार्थप्रकाशिकाख्या मया सम्पादिता। पूर्वमेव लिखितं मया, वर्तन्तेऽणुभाष्यस्यानेकानि व्याख्यानानीति। तन्मध्ये इयं व्याख्या सुन्दरी सरला मन्दोपकारिणी च। प्रत्यधिकरणसूत्रार्थोपवर्णनं ग्रन्थस्यास्य वैशिष्ट्यम्। अधिकरणारम्भे एव अधिकरणार्थज्ञाने सति अध्येतॄणां अध्ययनसौकर्यं भवति। अपि च प्रत्यधिकरणं पूर्वपक्षसिद्धान्तोपवर्णनपूर्वकं तदधिकरणतात्पर्यसूचकाणुभाष्यशब्दानां तत्र सङ्क्रमनद्वारा ब्रह्मसूत्राणां तथा भाष्यस्य च सुस्पष्टोऽर्थः अत्रोपलभ्यते। ब्रह्मसूत्रभाष्यस्य तथा तत्त्वप्रकाशिकायाः एवम् अभिनवचन्द्रिकायाश्च भावः अस्यां टीकायां संगृहीतः। अपि च ब्रह्मसूत्रभाष्यरीत्या प्रथमाध्याये चतुर्थपादे "समाकर्षात्" इति सूत्रं समाकर्षाधिकरणसूत्रत्वेन परिगृहीतम्। एतद्व्याख्यानरीत्या तु "कारणत्वेन चेति" आकाशाधिकरणावयवसूत्रतया परिगृहीतम्, इत्यन्यत् वैशिष्ट्यम्।

एतद्व्याख्याविषयः—ब्रह्ममीमांसाशास्त्रे ५६४ सूत्राणि २२३ अधिकरणानि च सन्ति॥

अस्त्यत्राध्यायचतुष्टयम्। प्रत्यध्यायमपि वर्तन्ते चत्वारः पादाः। तेषु षोडशपादेषु प्रतिपाद्यमानः विषयः संक्षेपेणात्रोपवर्ण्यते।

## प्रथमः समन्वयाध्यायः।

अस्मिन्नध्याये सर्वेषां शब्दानां भगवति समन्वयः क्रियते। तथा च भगवान् विष्णुः सकलशब्दवाच्यः इति साध्यते।

समन्त्रेतव्यशब्दास्तावत्—

१) (भगवतः) अन्यत्र प्रसिद्धनामात्मकशब्दाः ।

२) अन्यत्र प्रसिद्धलिङ्गात्मकशब्दाः ।

३) उभयत्र प्रसिद्धनामात्मकशब्दाः ।

४) उभयत्र प्रसिद्धलिङ्गात्मकशब्दाः ।

५) अन्यत्रैव प्रसिद्धनामात्मकशब्दाः ।

६) अन्यत्रैव प्रसिद्धलिङ्गात्मकशब्दाः ।

७) तत्र प्रसिद्धनामात्मकशब्दाः ।

८) तत्र प्रसिद्धलिङ्गात्मकशब्दाः ।

इति अष्टविधा वर्तन्ते ॥ तत्र अन्यत्र प्रसिद्धनामात्मकानां प्रथमपादे समन्वयः । अन्यत्र प्रसिद्धलिङ्गात्मकानां द्वितीयपादे समन्वयः । उभयत्र प्रसिद्धनामात्मकानां लिङ्गात्मकानां च शब्दानां तृतीयपादे समन्वयः । अन्यत्रैव प्रसिद्धनामात्मकानां लिङ्गात्मकानां च चतुर्थपादे समन्वयः । अत एवाद्याध्यायः समन्वयाध्याय इति व्यवह्रियते । तत्र (भगवति) प्रसिद्धानां शब्दानां समन्वयस्यानावश्यकत्वात् तेषां समन्वयो न कृतः ।

**द्वितीयः अविरोधाध्यायः ।**

"अथातो ब्रह्मजिज्ञासा" इत्यनेन भगवतः जिज्ञास्यत्वमुक्त्वा, किं-लक्षणकं तद्ब्रह्म इत्याकाङ्क्षायां "जन्माद्यस्य यतः" इति सूत्रेण, ब्रह्मणः जगज्जन्मादिकर्तृत्वरूपं लक्षणमुक्त्वा अध्यायशेषेण ब्रह्मणः सकलशब्दवाच्यत्वसमर्थनपूर्वकं जगत्कारणत्वं दृढीकृतम् । तत्र यः युक्ति-समयश्रुत्यादीनां विरोधः, तस्य परिहारः अस्मिन्नध्याये क्रियते । न विरोधः अविरोधः, श्रुत्यादिविरोधाभावः अस्मिन्नध्याये निरूप्यते अत एवास्याध्यायस्याविरोधाध्याय इति सार्थकं नाम ।

१) तत्र प्रथमपादे युक्तीनाम् अनुमानानां विरोधपरिहारः ।

२) द्वितीयपादे समयानां (दर्शनानां) विरोधपरिहारः ।

३) तृतीयपादे श्रुतीनाम् अन्योन्यविरोधपरिहारः ।

४) चतुर्थपादे श्रुतीनां युक्तिसहितश्रुतिविरोधपरिहारः ।

एवं पादचतुष्टयेऽपि विरोधपरिहारः क्रियते ।

**तृतीयः साधनाध्यायः ।**

प्रथमाध्याये समन्वये प्रतिपादिते द्वितीयाध्याये च विरोधे परिहृते ततः किम् इत्याकाङ्क्षापरिहाराय तृतीयाध्यायः प्रवृत्तः । अयं च साधनाध्यायः । "अथातो ब्रह्मजिज्ञासे"त्यत्र अथ–ब्रह्मजिज्ञासापदाभ्यां यानि साधनानि विहितानि तेषां विचारः अस्मिन्नध्याये निरूप्यते ।

१) तत्र प्रथमपादे वैराग्यरूपं साधनमुच्यते ।

२) भक्तिदार्ढ्यार्थं वैराग्यं पूर्वपादे निरूप्य, उपासनाङ्गभूता भक्तिः द्वितीयपादे विव्रियते ।

३) भक्तिसाध्या या उपासना तस्या निरूपणं तृतीयपादे ।

४) भगवदपरोक्षज्ञानस्य सामर्थ्यं चतुर्थपादे निरूप्यते ॥

**चतुर्थः फलाध्यायः ।**

वैराग्यभक्त्यादिसाधनैः भगवदपरोक्षज्ञानं प्राप्यम् इत्युक्तं तृतीयाध्याये, तज्ज्ञानस्य किं फलं इत्याकाङ्क्षापरिहाराय ब्रह्मज्ञानफलं चतुर्थाध्याये निरूप्यते ।

१) तत्र कर्मनाशाख्यं फलं प्रथमपादे निरूप्यते ।

२) ज्ञानभोगाभ्यां क्षीणकर्मणां देहलयः द्वितीयपादे निरूप्यते ।

३) ब्रह्मनाड्या नाड्यन्तरेण वा उत्क्रान्तानां मार्गः, तेन मार्गेण गतानां गम्यं कार्याकार्यब्रह्मरूपं फलं तृतीयपादे विव्रियते ।

४) चतुर्थपादे च, चतुर्मुखब्रह्मणा सह परब्रह्म प्राप्तानां मुक्तानां, मुक्तौ भोगप्रकारः निरूप्यते ॥

**ओङ्कारविषयः —**

अत्र ग्रन्थे प्रतिसूत्रमाद्यन्तयोरोङ्कारघटितः पाठः स्वीकृतः । विषयेऽस्मिन् किञ्चिदिव लिख्यते । शङ्करभास्कररामानुजवल्लभविज्ञानभिक्ष्वादिभिः 'अथातो ब्रह्मजिज्ञासे 'ति पाठस्य स्वीकृतत्वेन, ' ओम् अथातो ब्रह्मजिज्ञासा ओम्' इति पाठः असाम्प्रदायिक इति चेदुच्यते—'स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते ' इति निन्दार्थवादबलेन प्रतिसूत्रमादावन्ते चोङ्कारस्याध्याह्रियमाणत्वात् । न चात्र विध्यभाव । ' श्रवणविशरणाऽभावकामः आद्यन्तयोरों कुर्यात् ' इति कल्पितविधिवाक्यस्य सद्भावात् । कल्पितविधिवाक्यस्यार्थप्रत्यायकत्वं मानता च, लिङ्गादीनाम् अङ्गत्वे प्रामाण्यवादिनां मीमांसकानां मंगलस्य समाप्तिकारणत्वे ' समाप्तिकामो मङ्गलमाचरेते 'ति शिष्टाचारानुमितश्रुतिकल्पकानां तत्प्रामाण्यवादिनां नैयायिकानामपि सम्मतमेव ।

अथास्तु नामोङ्कारस्योहः, तथाऽपि कथं तस्य सूत्रावयवत्वम् इति चेत्, किं तदूह्यमानं वाक्यात्पृथगित्यनवयवत्वं साध्यते वा? बाढमिति चेत्, तर्हि मन्त्रेष्वप्यूह्यमानस्य वाक्यार्थप्रतीतिरूपैककार्यकारित्वरूपम्, अदृष्टरूपककार्यकारित्वरूपं वा मन्त्रावयवत्वं न स्यात् । न चेष्टापत्तिः । ' सं यज्ञपतिराशिषा ' इत्यादावध्याहृतस्य ' गच्छताम् ' इत्यस्य तेन सहैककार्यकारित्वं न स्यात् । किञ्चाध्याहृतस्यानवयवत्वे ' व्यवायान्नानुषज्जते ' इति जैमिनेः, ' व्यवहारो विशिंषन्तीति ब्रह्मसूत्रकर्तुश्च अध्याहारोक्तिरयुक्ता स्यात् । तस्मादिहापि अध्याहृतस्योङ्कारस्य सूत्रावयवत्वं विद्यत एव ।

नन्वथापि ओङ्कारस्य सूत्रावयवत्वमनुपपन्नम् अन्यथा ओङ्कारम-

स्य व्याख्याय, अथशब्दव्याख्यानपरभाष्यस्य 'अथशब्दो मङ्गलार्थो' इत्यादि रूपस्य, टीकायामथेति प्रतीकग्रहणस्य चानुपपत्तिप्रसङ्गात्। "तत्र व्याख्येयस्य शास्त्रस्येदमादिमं सूत्रम् 'अथातो ब्रह्मजिज्ञासे'ति। तत्र ओङ्कारश्चाथशब्दश्च मङ्गलार्थत्वादादितः प्रयुक्तौ। ओङ्कारस्तु 'स्रवत्यनोंकृत'मित्यादिवचनात् प्रत्यधिकरणमनुवर्तमानत्वात् पृथगुच्चरितो वेदितव्यः नाऽथशब्दवत्सूत्रोपनिबद्धः" इत्यादि प्राचीनटीकाकारीयं (सन्न्यायरत्नावलीकृतो) वचनमपीममेवार्थं गमयतीति चेत्, अत्र ज्ञापयामो संप्रदायविदां मतम्—व्याख्येयशास्त्रस्यादिमसूत्रस्य पाठद्वैविध्यं ह्यभिमतं प्राचीनानाम्। एकं 'अथातो ब्रह्मजिज्ञासे'ति। अपरं ॐ अथातो ब्रह्मजिज्ञासा इति। आद्यानुरोधेन सन्यायरत्नावली प्रवृत्ता। द्वितीयमतानुरोधेन च न्यायसुधा। यतस्तत्र 'तत्र ताराथमूलत्व' मित्येतद्व्याख्यानावसरे 'तारश्चाथश्च ताराथौ। तयं मूलत्वं क्रमेणादित्वम्,' इति तथा 'सूत्रयामास भगवानाचार्य. ॐ अथातो ब्रह्मजिज्ञासे'ति इति, एवं यदुक्तं जीवव्यतिरिक्त ईश्वर एव नास्ति इति' तत्परिहाराय, सूत्रकृता ओङ्कारब्रह्मशब्दौ प्रयुक्तौ" इत्याद्यभिधानाच्च ज्ञायते ओङ्कारब्रह्मशब्दोपेतसूत्रपाठोऽभिमत इति। न च प्राचीनटीकाकाराणामनभिमतोऽयमर्थः। अन्यथा, 'नाऽथशब्दवत्सूत्रोपनिबद्ध इत्यनुक्त्वा' न सूत्रोपनिबद्ध इत्येवावक्ष्यत्। तेन ज्ञायते पाठद्वयेऽप्यथशब्द इव न सूत्रावयवत्वमोङ्कारस्यापि त्वन्यादृशमेवेति। इममेवाभिप्रायमनुरुध्य भाष्यकारीयम् 'अथशब्दो मङ्गलार्थ' इत्यादि भाष्यं, टीकाकारीयम् 'अथे'ति प्रतीकग्रहणं चोपपन्नम्।

"सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिस्सृतौ।
ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात्॥

......अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः।" इत्यादिगारुडवचनमेवोङ्कारस्य सूत्रादित्वेन, ओमथातो ब्रह्मजिज्ञासेति पाठस्य गमकम्।

'नाथशब्दवत्सूत्रोपनिबद्ध' इति अथशब्दतुल्यतया सूत्रोपनिबन्धानुपगमेऽपि सूत्रोपनिबद्धत्वमङ्गीकर्तॄणां प्राचीनटीकाकाराणां सम्मतश्चायमर्थः इति प्रागेवोपपादितम् ।

यद्वा 'स्रवती'त्यादिविधिनिन्दार्थवादबलात् प्राप्तोङ्कारस्य आद्यसूत्रावयवत्वप्रतिषेधपरतया सन्न्यायरत्नावल्यस्तु । ततश्च प्राचीनटीका 'स्रवती'त्यादिश्रुतिप्रापितसाधारणोङ्कारविषया, सुधा तु 'ओङ्कारश्चे'त्यादिस्मृतिप्रापिताऽसाधारणविषयेति वाऽस्तु । यद्वा प्राचीनटीकोक्तं 'पृथक्त्वं' वाक्यान्वयाऽविरोधि ऊह्यमानत्वरूपं वेत्यस्तु । तथा चायमोङ्कारः नैतत्सूत्रमात्रसंबद्धोऽपि तु प्रतिसूत्रमूह्य इत्यनुगतिसूचनार्थः ।

अत्र च सूत्रावयवत्वं सूत्रेण सहैककार्यकारित्वरूपं विवक्षितम् । आद्यसूत्रगतोङ्कारस्य वाक्यार्थप्रतीतिजनकत्वरूपकार्यकारितामादाय तदवयवत्वोक्तिरुपपन्ना । 'स्रवत्यनोंकृत'मिति निन्दार्थवादलब्धस्य द्वितीयादिसूत्रगतस्याप्योङ्कारस्य अदृष्टरूपैककार्यकारित्वेन तदवयवत्वमपि सुस्थमेव । तस्मात्प्रमाणशरणैस्साम्प्रदायिकैस्सर्वैरपि अयमर्थो आदरणीय एवेति प्रतिसूत्रमाद्यन्तयोरोङ्कारघटितपाठः प्रामाणिक एवेति सिद्धम् ॥

**ग्रन्थसम्पादनम्—**

वर्तते खलु हस्तलिखितप्रतिद्वयं मैसूरु–प्राच्यविद्यासंशोधनालये । तत्प्रतिद्वयं संशोधनकर्मणि उपयुक्तम् अस्ति । एकस्य "[29]क" इति अन्यस्य "[30]ख" इति संकेतः प्रदत्तः । 'क' प्रतिः समग्रतया वर्तते ।

---

[29] अणुभाष्यटीका—S.B. 310, Size 19.5 × 16 cms. pages 1–284, Lines per page 13, Letters per page 24, Script Devanagari.

[30] अणुभाष्यटीका—S.C. 1278, Size 32 × 14.5 cms. pages 1–34, Lines per page 12, Letters per page 42, Script Devanagari.

सुन्दराक्षरैः लिखिता च। तथापि लिपिकारदोषाः बहवो वर्तन्ते। व्याकरण-दोषा अपि तत्र तत्र दृश्यन्ते। देवनागरीलिप्यात्मिकेयं प्रतिः। कानि-चन पत्राणि भग्नानि। तथापि पठितुं शक्यन्ते। अन्या मातृका देवनागरीलिप्यात्मिका, असमग्रा च। प्रथमाध्यायमात्रपरिमिता। देव-नागरीलिप्यात्मिका च। सर्वाण्यपि पत्राणि क्रिमिदष्टानि। क्वचित् पठितुमपि न शक्यते।

अन्ये द्वे मातृके "श्री प्रभञ्जन व्यासनकेरे" नामकविदुषः सका-शात् आनीते। एकस्याः 'ग' इति अन्यस्याः 'घ' इति च सङ्केतः प्रदत्तः। "ग" मातृकायाम् आद्यपत्रं तथा (६२-६४) पत्रत्रयं च लुप्तम्। प्रायः परिशुद्धेयं प्रतिः संशोधनकर्मणि पाठान्तरविषये अतीवोपयुक्ता च। चतुर्थी 'घ' मातृका। एषा मातृका चतसृषु मातृकासु अत्यन्तं परिशुद्धा सम्पादनकर्मणि अतीव उपकारिणी च। अन्यश्च विशेषः अस्यां मातृकायां सर्वेषामप्यधिकरणसूत्राणामर्थः नोपलभ्यते। तथापि उपयुक्तानि अनेकानि पाठान्तराण्यत्रोपलभ्यन्ते। एते उभे अपि मातृके देवनागरीलिप्यात्मिके॥

एवं मातृकाचतुष्टयसाहाय्येन अशुद्धपाठः संशोधितः। सर्वत्र शुद्धपाठं उपरि निक्षिप्य अपपाठः अधः निर्दिष्टः। क्वचित् यत्र उभावपि शुद्धपाठौ तत्र प्रसङ्गानुकूलं पाठं उपरि निर्दिश्य अन्यः पाठः अधो निर्दिष्टः। ग्रन्थे निर्दिष्टानां प्रमाणानाम् आकरः प्रत्यधिकरणसूत्राधोभागे निर्दिष्ट। यत्र कश्चन संशयः तत्र अधोभागे टिप्पणी लिखिता। यत्र मूलमातृका-सम्बन्धः समीचीनतया न प्रतीयते तत्र स्वकीयवाक्यानि सम्पादकेन लिखितानि। तत्र [ ] एतच्चिह्नं निर्दिष्टम्। तादृशस्थले मूलमातृका अधो निर्दिष्टा।

पारायणानुकूल्याय सर्वाण्यपि ब्रह्मसूत्राणि आदौ निर्दिष्टानि अणुभाष्यं च सटिप्पणं लिखितम्।

**कृतज्ञतासमर्पणम् ।**

संशोधनकर्मणि समुचितनिर्देशनादिभिः उपकृत्य प्रोत्साहं प्रदत्तवद्भ्यः भूतपूर्वनिर्देशकेभ्यः दि० विद्वान् डा० जि. मरुळसिद्धय्यमहोदयेभ्यः कृतज्ञोऽहम् ।

समयोचितनिर्देशनादिभिः सम्पादितमिमं ग्रन्थं संवीक्ष्य ग्रन्थस्यास्य बाह्याभ्यन्तरसौन्दर्यसमेधने महोपकारं कृतवद्भ्यः निर्देशकेभ्यः विद्वान् डा० एच्. पि. मल्लेदेवरुमहाभागेभ्यः विशेषतः कृतज्ञतां समर्पयामि ।

संशोधनार्थं, स्वसंगृहीतपरिशुद्धमातृकाद्वयप्रदानेन महान्तं उपकारं कृतवतां विदुषां विमर्शकानां, श्री व्यासनकेरे प्रभञ्जन, एम्. ए, इत्येतेषां सौहार्दं विशेषतः स्मरामि ।

संशोधनावसरे इमं ग्रन्थं आमूलाग्रं परिवीक्ष्य सिद्धान्तविषये विशेषबोधनादिभिः अनुग्रहं कृतवतां श्री फलिमारु–भण्डारकेरिमठयो धीशानां श्री श्रीविद्यामान्यतीर्थगुरुचरणानां चरणकमलयोः, तथा मम विद्यागुरूणां श्री पेजावरमठाधीशानां श्री श्री विश्वेशतीर्थश्रीपादानां पादपद्मयोः सभक्तिं भूयांसि नमांसि समर्पयामि ॥

**उपसंहारः—**

मया सम्पादितस्य ग्रन्थस्यास्य अध्ययनेन विद्वांसः परितुष्टा भवेयुरिति मम मनीषा वर्तते । यदीय कृतिः विद्वत्तोषकारिणी तथा महाजनोपकारिणी च भवेत् तदा सार्थकोऽयं मम श्रमः इत्युक्त्वा विरमामि ॥

मैसूरु
१९८५

इति सज्जनविधेयः
**आर्. जि. माळगि**
सम्पादकः

# विषयानुक्रमणिका

## प्रथमाध्यायस्य प्रथमः पादः



## प्रथमाध्यायस्य द्वितीयः पादः

## प्रथमाध्यायस्य तृतीयः पादः

## द्वितीयाध्यायस्य द्वितीयः पादः

## द्वितीयाध्यायस्य चतुर्थः पादः

## तृतीयाध्यायस्य प्रथमः पादः

## तृतीयाध्यायस्य द्वितीयः पादः

| संख्या | विषयाः | अधिकरणम् | पृष्ठम् |
|---|---|---|---|

## तृतीयाध्यायस्य तृतीयः पादः

## तृतीयाध्यायस्य चतुर्थः पादः

## चतुर्थाध्यायस्य प्रथमः पादः

## चतुर्थाध्यायस्य द्वितीयः पादः

# श्रीमत्कृष्णद्वैपायनप्रणीतानि ब्रह्मसूत्राणि

## अथ प्रथमाध्यायस्य प्रथमः पादः

१. जिज्ञासाधिकरणम् ।

१. ओं अथातो ब्रह्मजिज्ञासा ओं

२. जन्माधिकरणम् ।

२. ओं जन्माद्यस्य यतः ओं

३. शास्त्रयोनित्वाधिकरणम् ।

३. ओं शास्त्रयोनित्वात् ओं

४. समन्वयाधिकरणम् ।

४. ओं तत्तु समन्वयात् ओं

५. ईक्षत्यधिकरणम् ।

५. ओं ईक्षतेर्नाशब्दम् ओं

६. ओं गौणश्चेन्नात्मशब्दात् ओं

७. ओं तन्निष्ठस्य मोक्षोपदेशात् ओं

८. ओं हेयत्वावचनाच्च ओं

९. ओं स्वाप्ययात् ओं

१० ओं गतिसामान्यात् ओं

११. ओं श्रुतत्वाच्च ओं

६. आनन्दमयाधिकरणम् ।

१२. ओं आनन्दमयोऽभ्यासात् ओं

१३. ओं विकारशब्दान्नेति चेन्न प्राचुर्यात् ओं
१४. ओं तद्धेतुव्यपदेशाच्च ओं
१५. ओं मान्त्रवर्णिकमेव च गीयते ओं
१६. ओं नेतरोऽनुपपत्तेः ओं
१७. ओं भेदव्यपदेशाच्च ओं
१८. ओं कामाच्च नानुमानापेक्षा ओं
१९. ओं अस्मिन्नस्य च तद्योगं शास्ति ओं

७. **अन्तस्थत्वाधिकरणम् ।**

२०. ओं अन्तस्तद्धर्मोपदेशात् ओं
२१. ओं भेदव्यपदेशाच्चान्यः ओं

८. **आकाशाधिकरणम् ।**

२२. ओं आकाशस्तल्लिङ्गात् ओं

९. **प्राणाधिकरणम् ।**

२३. ओं अत एव प्राणः ओं

१०. **ज्योतिरधिकरणम् ।**

२४. ओं ज्योतिश्चरणाभिधानात् ओं

११. **छन्दोऽभिधानाधिकरणम् । (गायत्र्यधिकरणम्)**

२५. ओं छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ओं
२६. ओं भूतादिपादव्यपदेशोपपत्तेश्चैवम् ओं
२७. ओं उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ओं

१२. पादान्त्यप्राणाधिकरणम् ।

२८. ओं प्राणस्तथानुगमात् ओं

२९. ओं न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा-
ह्यस्मिन् ओं

३०. ओं शास्त्रदृष्ट्या तूपदेशो वामदेववत् ओं

३१. ओं जीवमुख्यप्राणलिङ्गान्नेति चेन्न उपासात्रैविध्यादा-
श्रितत्वादिह तद्योगात् ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु प्रथमाध्यायस्य प्रथमः पादः ॥

श्रीः

## अथ प्रथमाध्यायस्य द्वितीयः पादः

१. सर्वगतत्वाधिकरणम् ।

१. ओं सर्वत्र प्रसिद्धोपदेशात् ओं

२. ओं विवक्षितगुणोपपत्तेश्च ओं

३. ओं अनुपपत्तेस्तु न शारीरः ओं

४ ओं कर्मकर्तृव्यपदेशाच्च ओं

५. ओं शब्दविशेषात् ओं

६. ओं स्मृतेश्च ओं

७. ओं अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं
व्योमवच्च ओं

८. ओं सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ओं

२. अत्तृत्वाधिकरणम् ।

९. ओं अत्ता चराचरग्रहणात् ओं

१०. ओं प्रकरणाच्च ओं

३. गुहाधिकरणम् ।

११. ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ओं
१२. ओं विशेषणाच्च ओं

४. अन्तराधिकरणम् ।

१३. ओं अन्तर उपपत्तेः ओं
१४. ओं स्थानादिव्यपदेशाच्च ओं
१५. ओं सुखविशिष्टाभिधानादेव च ओं
१६. ओं श्रुतोपनिषत्कगत्यभिधानाच्च ओं
१७. ओं अनवस्थितेरसम्भवाच्च नेतरः ओं

५. अन्तर्याम्यधिकरणम् ।

१८. ओं अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ओं
१९. ओं न च स्मार्तमतद्धर्माभिलापात् ओं
२०. ओं शारीरश्चोभयेऽपि हि भेदेनैवमधीयते ओं

६. अदृश्यत्वाधिकरणम् ।

२१. ओं अदृश्यत्वादिगुणको धर्मोक्तेः ओं
२२. ओं विशेषणभेदव्यपदेशाभ्यां च नेतरौ ओं
२३. ओं रूपोपन्यासाच्च ओं

७. वैश्वानराधिकरणम् ।

२४. ओं वैश्वानरः साधारणशब्दविशेषात् ओं
२५. ओं स्मर्यमाणमनुमानं स्यादिति ओं

२६. ओं शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा
दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ओं
२७. ओं अत एव न देवता भूतं च ओं
२८. ओं साक्षादप्यविरोधं जैमिनिः ओं
२९. ओं अभिव्यक्तेरित्याश्मरथ्यः ओं
३०. ओं अनुस्मृतेर्बादरिः ओं
३१. ओं सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ओं
३२. ओं आमनन्ति चैनमस्मिन् ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु प्रथमाध्यायस्य द्वितीयः पादः ॥

श्रीः

## अथ प्रथमाध्यायस्य तृतीयः पादः

१. द्युभ्वाद्यधिकरणम् ।

१. ओं द्युभ्वाद्यायतनं स्वशब्दात् ओं
२. ओं मुक्तोपसृप्यव्यपदेशात् ओं
३. ओं नानुमानमतच्छब्दात् ओं
४. ओं प्राणभृच्च ओं
५. ओं भेदव्यपदेशात् ओं
६. ओं प्रकरणात् ओं
७. ओं स्थित्यदनाभ्यां च ओं

२. भूमाधिकरणम् ।

८. ओं भूमा सम्प्रसादादध्युपदेशात् ओं
९. ओं धर्मोपपत्तेश्च ओं

३. अक्षराधिकरणम् ।

१०. ओं अक्षरमम्बरान्तधृतेः ओं

११. ओं सा च प्रशासनात् ओं

१२. ओं अन्यभावव्यावृत्तेश्च ओं

४. सदधिकरणम् ।

१३. ओं ईक्षतिकर्मव्यपदेशात्सः ओं

५. दहराधिकरणम् ।

१४. ओं दहर उत्तरेभ्यः ओं

१५. ओं गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ओं

१६. ओं धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ओं

१७. ओं प्रसिद्धेश्च ओं

१८. ओं इतरपरामर्शात्स इति चेन्न असम्भवात् ओं

१९. ओं उत्तराच्चेदाविर्भूतस्वरूपस्तु ओं

२०. ओं अन्यार्थश्च परामर्शः ओं

२१. ओं अल्पश्रुतेरिति चेत्तदुक्तम् ओं

६. अनुकृत्यधिकरणम् ।

२२. ओं अनुकृतेस्तस्य च ओं

२३. ओं अपि स्मर्यते ओं

७. वामनाधिकरणम् ।

२४. ओं शब्दादेव प्रमितः ओं

२५. ओं हृद्यपेक्षया तु मनुष्याधिकारत्वात् ओं

८. देवताधिकरणम् ।

२६. ओं तदुपर्यपि बादरायणस्सम्भवात् ओं

२७. ओं विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ओं
२८. ओं शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ओं
२९. ओं अत एव च नित्यत्वम् ओं
३०. ओं समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ओं
३१. ओं मध्वादिष्वसम्भवादनधिकारं जैमिनिः ओं
३२. ओं ज्योतिषि भावाच्च ओं
३३. ओं भावन्तु बादरायणोऽस्ति हि ओं

९. अपशूद्राधिकरणम् ।

३४. ओं शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ओं
३५. ओं क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ओं
३६. ओं संस्कारपरामर्शात्तदभावाभिलापाच्च ओं
३७. ओं तदभावनिर्धारणे च प्रवृत्तेः ओं
३८. ओं श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ओं

१०. कम्पनाधिकरणम् ।

३९. ओं कम्पनात् ओं

११. ज्योतिरधिकरणम् ।

४०. ओं ज्योतिर्दर्शनात् ओं

१२. आकाशाधिकरणम् ।

४१. ओं आकाशोऽर्थान्तरत्वादिव्यपदेशात् ओं

१३. सुषुप्त्यधिकरणम् ।

४२. ओं सुषुप्त्युत्क्रान्त्योर्भेदेन ओं

१४. ब्राह्मणाधिकरणम् ।

४३. ओं पत्यादिशब्देभ्यः ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु प्रथमाध्यायस्य तृतीयः पादः ॥

श्रीः

## अथ प्रथमाध्यायस्य चतुर्थः पादः

१. आनुमानिकाधिकरणम् ।

१. ओं आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ओं

२. ओं सूक्ष्मन्तु तदर्हत्वात् ओं

३. ओं तदधीनत्वादर्थवत् ओं

४. ओं ज्ञेयत्वावचनाच्च ओं

५. ओं वदतीति चेन्न प्राज्ञो हि ओं

६. ओं प्रकरणात् ओं

७. ओं त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ओं

८. ओं महद्वच्च ओं

९. ओं चमसवदविशेषात् ओं

२. ज्योतिरुपक्रमाधिकरणम् ।

१०. ओं ज्योतिरुपक्रमात्तु तथाह्यधीयत एके ओं

११. ओं कल्पनोपदेशाच्च मध्वादिवदविरोधः ओं

३. न सङ्ख्योपसङ्ग्रहाधिकरणम् ।

१२. ओं न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ओं

१३. ओं प्राणादयो वाक्यशेषात् ओं

१४. ओं ज्योतिषैकेषामसत्यन्ने ओं

४. आकाशाधिकरणम् ।

१५. ओं कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ओं

५. समाकर्षाधिकरणम् ।

१६. ओं समाकर्षात् ओं

१७. ओं जगद्वाचित्वात् ओं

१८. ओं जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ओं

१९. ओं अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ओं

२०. ओं वाक्यान्वयात् ओं

२१. ओं प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ओं

२२. ओं उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ओं

२३. ओं अवस्थितेरिति काशकृत्स्नः ओं

६. प्रकृत्यधिकरणम् ।

२४. ओं प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ओं

२५. ओं अभिध्योपदेशाच्च ओं

२६. ओं साक्षाच्चोभयाम्नानात् ओं

२७. ओं आत्मकृतेः परिणामात् ओं

२८. ओं योनिश्च हि गीयते ओं

७. ऐतेन सर्वे व्याख्याताधिकरणम् ॥

२९. ओं एतेन सर्वे व्याख्याताः व्याख्याताः ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु प्रथमाध्यायस्य चतुर्थः पादः ॥

प्रथमाध्यायः समाप्तः ।

॥ श्री कृष्णार्पणमस्तु ॥

श्रीः

## अथ द्वितीयाध्यायस्य प्रथमः पादः

### १. स्मृत्यधिकरणम् ।

१. ओं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ओं

२. ओं इतरेषाञ्चानुपलब्धेः ओं

३. ओं एतेन योगः प्रत्युक्तः ओं

### २. न विलक्षणत्वाधिकरणम् ।

४. ओं न विलक्षणत्वादस्य तथात्वं च शब्दात् ओं

५. ओं दृश्यते तु ओं

### ३. अभिमान्यधिकरणम् ।

६. ओं अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ओं

७. ओं दृश्यते च ओं

### ४. असदधिकरणम् ।

८. ओं असदिति चेन्न प्रतिषेधमात्रत्वात् ओं

९. ओं अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ओं

१०. ओं न तु दृष्टान्तभावात् ओं

११. ओं स्वपक्षदोषाच्च ओं

१२. ओं तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ओं

१३. ओं एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ओं

५. भोक्त्रधिकरणम् ।

१४. ओं भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ओं

६. आरम्भणाधिकरणम् ।

१५. ओं तदनन्यत्वं आरम्भणशब्दादिभ्यः ओं

१६. ओं भावे चोपलब्धेः ओं

१७. ओं सत्वाच्चावरस्य ओं

१८. ओं असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ओं

१९. ओं युक्तेः शब्दान्तराच्च ओं

२०. ओं पटवच्च ओं

२१. ओं यथा प्राणादिः ओं

७. इतरव्यपदेशाधिकरणम् ।

२२. ओं इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ओं

२३. ओं अधिकन्तु भेदनिर्देशात् ओं

२४. ओं अश्मादिवच्च तदनुपपत्तिः ओं

२५. ओं उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ओं

२६. ओं देवादिवदपि लोके ओं

२७. ओं कृत्स्नप्रसक्तिः निरवयत्वशब्दकोपो वा ओं

८. श्रुतेस्तु शब्दमूलत्वाधिकरणम् ।

२८. ओं श्रुतेस्तु शब्दमूलत्वात् ओं

२९. ओं आत्मनि चैव विचित्राश्च हि ओं

३०. ओं स्वपक्षदोषाच्च ओं

३१. ओं सर्वोपेता च तद्दर्शनात् ओं

३२. ओं विकरणत्वान्नेति चेत्तदुक्तम् ओं

९. न प्रयोजनाधिकरणम् ।

३३. ओं न प्रयोजनवत्त्वात् ओं

३४. ओं लोकवत्तु लीलाकैवल्यम् ओं

१०. वैषम्यनैर्घृण्याधिकरणम् ।

३५. ओं वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ओं

३६. ओं न कर्माविभागादिति चेन्नानादित्वात् ओं

३७. ओं उपपद्यते चाप्युपलभ्यते च ओं

११. सर्वधर्मोपपत्त्यधिकरणम् ।

३८. ओं सर्वधर्मोपपत्तेश्च ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु द्वितीयाध्यायस्य प्रथमः पादः ॥

श्री·

## अथ द्वितीयाध्यायस्य द्वितीयः पादः

१. रचनानुपपत्त्यधिकरणम् ।

१. ओं रचनानुपपत्तेश्च नानुमानम् ओं

२. ओं प्रवृत्तेश्च ओं

३. ओं पयोम्बुवच्चेत्तत्रापि ओं

४. ओं व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ओं

२. अन्यत्राभावाधिकरणम् ।

५. ओं अन्यत्राभावाच्च न तृणादिवत् ओं

३. अभ्युपगमाधिकरणम् ।

६. ओं अभ्युपगमेऽप्यर्थाभावात् ओं

४. पुरुषाश्माधिकरणम् ।

७. ओं पुरुषाश्मवदिति चेत्तथापि ओं

८. ओं अङ्गित्वानुपपत्तेः ओं

५. अन्यथानुमित्यधिकरणम् ।

९. ओं अन्यथानुमितौ च ज्ञशक्तिवियोगात् ओं

१०. ओं विप्रतिषेधाच्चासमञ्जसम् ओं

६. वैशेषिकाधिकरणम् ।

११. ओं महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ओं

१२. ओं उभयथापि न कर्मातस्तदभावः ओं

१३. ओं समवायाभ्युपगमाच्च साम्यादनवस्थितेः ओं

१४. ओं नित्यमेव च भावात् ओं

१५. ओं रूपादिमत्वाच्च विपर्ययो दर्शनात् ओं

१६. ओं उभयथा च दोषात् ओं

१७. ओं अपरिग्रहाच्चात्यन्तमनपेक्षा ओं

७. समुदायाधिकरणम् ।

१८. ओं समुदाय उभयहेतुकेऽपि तदप्राप्तिः ओं

१९. ओं इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ओं

२०. ओं उत्तरोत्पादे च पूर्वनिरोधात् ओं

२१. ओं असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ओं

२२. ओं प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ओं

२३. ओं उभयथा च दोषात् ओं

२४. ओं आकाशे चाविशेषात् ओं

२५. ओं अनुस्मृतेश्च ओं

८. असदधिकरणम् ।

२६. ओं नासतोऽदृष्टत्वात् ओं

२७. ओं उदासीनानामपि चैवं सिद्धिः ओं

२८. ओं नाभाव उपलब्धेः ओं

२९. ओं वैधर्म्याच्च न स्वप्नादिवत् ओं

९. अनुपलब्ध्यधिकरणम् ।

३०. ओं न भावोऽनुपलब्धेः ओं

३१. ओं क्षणिकत्वाच्च ओं

३२. ओं सर्वथानुपपत्तेश्च ओं

१०. नैकस्मिन्नधिकरणम् ।

३३. ओं नैकस्मिन्नसम्भवात् ओं

३४. ओं एवञ्चात्माकार्त्स्न्यम् ओं

३५. ओं न च पर्यायादप्यविरोधो विकारादिभ्यः ओं

३६. ओं अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ओं

११. पत्युरधिकरणम् ।

३७. ओं पत्युरसामञ्जस्यात् ओं

३८. ओं सम्बन्धानुपपत्तेश्च ओं

३९. ओं अधिष्ठानानुपपत्तेश्च ओं

४०. ओं करणवच्चेन्न भोगादिभ्यः ओं

४१. ओं अन्तवत्त्वमसर्वज्ञता वा ओं

१२. उत्पत्त्यधिकरणम् ।

४२. ओं उत्पत्त्यसम्भवात् ओं

४३. ओं न च कर्तुः करणम् ओं

४४. ओं विज्ञानादिभावे वा तदप्रतिषेधः ओं

४५. ओं विप्रतिषेधाच्च ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु द्वितीयाध्यायस्य द्वितीयः पादः ॥

श्रीः

## अथ द्वितीयाध्यायस्य तृतीयः पादः

१. वियदधिकरणम् ।

१. ओं न वियदश्रुतेः ओं

२. ओं अस्ति तु ओं

३. ओं गौण्यसम्भवात् ओं

४. ओं शब्दाच्च ओं

५. ओं स्याच्चैकस्य ब्रह्मवत् ओं

६. ओं प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ओं

७. ओं यावद्विकारन्तु विभागो लोकवत् ओं

२. मातरिश्वाधिकरणम् ।

८. ओं एतेन मातरिश्वा व्याख्यातः ओं

३. असम्भवाधिकरणम् ।

९. ओं असम्भवस्तु सतोऽनुपपत्तेः ओं

४. तेजोऽधिकरणम् ।

१०. ओं तेजोऽतः तथाह्याह ओं

५. अबधिकरणम् ।

११ ओं आपः ओं

६. पृथिव्यधिकरणम् ।

१२. ओं पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ओं

७. तदभिध्यानाधिकरणम् ।

१३. ओं तदभिध्यानादेव तु तल्लिङ्गात्सः ओं

८. विपर्ययाधिकरणम् ।

१४. ओं विपर्ययेण तु क्रमोऽत उपपद्यते च ओं

९. अन्तराधिकरणम् ।

१५. ओं अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ओं

१६. ओं चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ओं

१०. आत्माधिकरणम् ।

१७. ओं नात्माऽश्रुतेः नित्यत्वाच्च ताभ्यः ओं

११. ज्ञाधिकरणम् ।

१८. ओं ज्ञोऽत एव ओं

१९. ओं युक्तेश्च ओं

१२. उत्क्रान्त्यधिकरणम् ।

२०. ओं उत्क्रान्तिगत्यागतीनाम् ओं

२१. ओं स्वात्मना चोत्तरयोः ओं

२२. ओं नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ओं

२३. ओं स्वशब्दोन्मानाभ्यां च ओं

२४. ओं अविरोधश्चन्दनवत् ओं

२५. ओं अवस्थितिवैशेष्यादिति चेन्न अभ्युपगमात् हृदि हि ओं

२६. ओं गुणाद्वाऽऽलोकवत् ओं

१३. व्यतिरेकाधिकरणम् ।

२७. ओं व्यतिरेको गन्धवत्तथा च दर्शयति ओं

१४. पृथगधिकरणम् ।

२८. ओं पृथगुपदेशात् ओं

२९. ओं तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ओं

१५. यावदधिकरणम् ।

३०. ओं यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ओं

१६. पुंस्त्वाधिकरणम् ।

३१. ओं पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ओं

३२. ओं नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ओं

१७. कर्तृत्वाधिकरणम् ।

३३. ओं कर्ता शास्त्रार्थवत्त्वात् ओं

३४. ओं विहारोपदेशात् ओं

३५. ओं उपादानात् ओं

३६. ओं व्यपदेशाच्च क्रियायां न चेत् निर्देशविपर्ययः ओं

३७. ओं उपलब्धिवदनियमः ओं

३८. ओं शक्तिविपर्ययात् ओं

३९. ओं समाध्यभावाच्च ओं

४०. ओं यथा च तक्षोभयथा ओं

४१. ओं परात्तु तच्छ्रुतेः ओं

४२. ओं कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ओं

१८. अंशाधिकरणम् ।

४३. ओं अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ओं

४४. ओं मन्त्रवर्णात् ओं

४५ ओं अपि स्मर्यते ओं

४६. ओं प्रकाशादिवन्नैवं परः ओं

४७. ओं स्मरन्ति च ओं

४८. ओं अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत् ओं

४९. ओं असन्ततेश्चाव्यतिकरः ओं

५०. ओं आभास एव च ओं

१९. अदृष्टाधिकरणम् ।

५१. ओं अदृष्टानियमात् ओं

५२. ओं अभिसन्ध्यादिष्वपि चैवम् ओं

५३. ओं प्रदेशादिति चेन्न अन्तर्भावात् ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु द्वितीयाध्यायस्य तृतीयः पादः ॥

श्रीः

## अथ द्वितीयाध्यायस्य चतुर्थः पादः

१. प्राणोत्पत्त्यधिकरणम् ।

१. ओं तथा प्राणाः ओं

२. ओं गौण्यसम्भवात् ओं
३. ओं प्रतिज्ञानुपरोधाच्च ओं

२. तत्प्रागधिकरणम् ।
४. ओं तत्प्राक् श्रुतेश्च ओं

३. तत्पूर्वकत्वाधिकरणम् ।
५. ओं तत्पूर्वकत्वाद्वाचः ओं

४. सप्तगत्यधिकरणम् ।
६. ओं सप्त गतेर्विशेषितत्वाच्च ओं
७. ओं हस्तादयस्तु स्थितेऽतो नैवम् ओं

५. अण्वधिकरणम् ।
८. ओं अणवश्च ओं

६. श्रेष्ठाधिकरणम् ।
९. ओं श्रेष्ठश्च ओं
१०. ओं न वायुक्रिये पृथगुपदेशात् ओं

७. चक्षुराद्यधिकरणम् ।
११. ओं चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्यः ओं
१२. ओं अकरणत्वाच्च न दोषः तथा हि दर्शयति ओं

८. पञ्चवृत्त्यधिकरणम् ।
१३. ओं पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ओं

९. अण्वधिकरणम् ।
१४. ओं अणुश्च ओं

१०. ज्योतिराद्यधिकरणम् ।

१५. ओं ज्योतिराद्यधिष्ठानं तु तदामननात् ओं

१६. ओं प्राणवता शब्दात् ओं

१७. ओं तस्य च नित्यत्वात् ओं

११. त इन्द्रियाधिकरणम् ।

१८. ओं त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ओं

१९. ओं भेदश्रुतेः ओं

२०. ओं वैलक्षण्याच्च ओं

१२. संज्ञाधिकरणम् ।

२१. ओं संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ओं

१३. मांसाधिकरणम् ।

२२. ओं मांसादिभौमं यथाशब्दमितरयोश्च ओं

२३. ओं वैशेष्यात्तु तद्वादस्तद्वादः ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु द्वितीयाध्यायस्य चतुर्थः पादः ॥

द्वितीयाध्यायः समाप्तः ।

॥ श्री कृष्णार्पणमस्तु ॥

श्री:

## अथ तृतीयाध्यायस्य प्रथमः पादः

१. तदन्तराधिकरणम् ।

१. ओं तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ओं

२. त्र्यात्मकत्वाधिकरणम् ।

२. ओं त्र्यात्मकत्वातु भूयस्त्वात् ओं

३. प्राणगत्यधिकरणम् ।

३. ओं प्राणगतेश्च ओं

४. अग्न्याद्यधिकरणम् ।

४. ओं अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ओं

५. प्रथमाधिकरणम् ।

५. ओं प्रथमे अश्रवणदिति चेन्न ता एव ह्युपपत्तेः ओं

६. अश्रुतत्वाधिकरणम् ।

६. ओं अश्रुतत्वादिति चेन्न इष्टादिकारिणां प्रतीतेः ओं

७. भाक्ताधिकरणम् ।

७. ओं भाक्तं वा अनात्मवित्त्वात्तथाहि दर्शयति ओं

८. कृतात्ययाधिकरणम् ।

८. ओं कृत्यायनेऽनुशयवान् दृष्टस्मृतिभ्याम् ओं

९. यथेताधिकरणम् ।

९. ओं यथेतमनेवं च ओं

१०. चरणाधिकरणम् ।

१०. ओं चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ओं

११. ओं आनर्थक्यमिति चेन्न तदपेक्षत्वात् ओं

१२. ओं सुकृतदुष्कृते एवेति तु बादरिः ओं

११. अनिष्टाधिकरणम् ।

१३. ओं अनिष्टादिकारिणामपि च श्रुतम् ओं

१४. ओं संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ओं

१५. ओं स्मरन्ति च ओं

१२. अपि सप्ताधिकरणम् ।

१६. ओं अपि सप्त ओं

१३. तत्राप्यधिकरणम् ।

१७. ओं तत्रापि तद्व्यापारादविरोधः ओं

१४. विद्याधिकरणम् ।

१८. ओं विद्याकर्मणोरिति तु प्रकृतत्वात् ओं

२५. तृतीयाधिकरणम् ।

१९. ओं न तृतीये तथोपलब्धेः ओं

२०. ओं स्मर्यतेऽपि च लोके ओं

२१. ओं दर्शनाच्च ओं

२२. ओं तृतीये शब्दावरोधः संशोकजस्य ओं

२३. ओं स्मरणाच्च ओं

१६. तत्स्वाभाव्याधिकरणम् ।

२४. ओं तत्स्वाभाव्यापत्तिरुपपत्तेः ओं

१७. नातिचिरेणाधिकरणम् ।

२५. ओं नातिचिरेण विशेषात् ओं

१८. अन्याधिकरणम् ।

२६. ओं अन्याधिष्ठिते पूर्ववदभिलापात् ओं

२७. ओं अशुद्धमिति चेन्न शब्दात् ओं

१९. रेतोऽधिकरणम् ।

२८. ओं रेतः सिग्योगोऽथ ओं

२०. योन्यधिकरणम् ।

२९. ओं योनेः शरीरम् ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु तृतीयाध्यायस्य प्रथमः पादः ॥

श्रीः

## अथ तृतीयाध्यायस्य द्वितीयः पादः

१. सन्ध्याधिकरणम् ।

१. ओं सन्ध्ये सृष्टिराह हि ओं

२. ओं निर्मातारं चैके पुत्रादयश्च ओं

३. ओं मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तिस्वरूपत्वात् ओं

४. ओं सूचकश्च हि श्रुतेराचक्षते च तद्विदः ओं

२. पराभिध्यानाधिकरणम् ।

५. ओं पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ओं

३. देहयोगाधिकरणम् ।

६. ओं देहयोगाद्वासोऽपि ओं

४. तदभावाधिकरणम् ।

७. ओं तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ओं

५. प्रबोधाधिकरणम् ।

८. ओं अतः प्रबोधोऽस्मात् ओं

६. कर्मानुस्मृत्यधिकरणम् ।

९. ओं स एव च कर्मानुस्मृतिशब्दविधिभ्यः ओं

७. सम्पत्त्यधिकरणम् ।

१०. ओं मुग्धेऽर्धसम्पत्तिः परिशेषात् ओं

८. न स्थानतोऽप्यधिकरणम् ।

११. ओं न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ओं

१२. ओं न भेदादिति चेन्न प्रत्येकमतद्वचनात् ओं

१३. ओं अपि चैवमेके ओं

९. अरूपाधिकरणम् ।

१४. ओं अरूपवदेव हि तत्प्रधानत्वात् ओं

१५ ओं प्रकाशवच्चावैयर्थ्यम् ओं

१६. ओं आह च तन्मात्रम् ओं

१७. ओं दर्शयति चाथो अपि स्मर्यते ओं

१०. उपमाधिकरणम् ।

१८. ओं अत एव नोपमा सूर्यकादिवत् ओं

११. अम्बुवदधिकरणम् ।

१९. ओं अम्बुवदग्रहणात्तु न तथात्वम् ओं

१२. वृद्धिह्रासाधिकरणम् ।

२०. ओं वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ओं

२१. ओं दर्शनाच्च ओं

१३. पालकत्वाधिकरणम् ।

२२. ओं प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति
च भूयः ओं

१४. अव्यक्तत्वाधिकरणम् ।

१३. ओं तदव्यक्तमाह हि ओं

२४. ओं अपि संराधने प्रत्यक्षानुमानाभ्याम् ओं

२५. ओं प्रकाशवच्चावैशेष्यम् ओं

२६. ओं प्रकाशश्च कर्मण्यभ्यासात् ओं

२७. ओं अतोऽनन्तेन तथाहि लिङ्गम् ओं

१५. अहिकुण्डलाधिकरणम् ।

२८. ओं उभयव्यपदेशात्त्वहिकुण्डलवत् ओं

२९. ओं प्रकाशाश्रयवद्वा तेजस्त्वात् ओं

३०. ओं पूर्ववद्वा ओं
३१. ओं प्रतिषेधाच्च ओं

१६. परमताधिकरणम् ।
३२. ओं परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ओं
३३. ओं दर्शनात् ओं
३४. ओं बुध्यर्थः पादवत् ओं

१७. स्थानबिशेषाधिकरणम् ।
३५. ओं स्थानविशेषात् प्रकाशादिवत् ओं
३६. ओं उपपत्तेश्च ओं

१८. तथान्यत्वाधिकरणम् ।
३७. ओं तथान्यत्प्रतिषेधात् ओं

१९. सर्वगतत्वाधिकरणम् ।
३८. ओं अनेन सर्वगतत्वमायामयशब्दादिभ्यः ओं

२०. फलाधिकरणम् ।
३९. ओं फलमत उपपत्तेः ओं
४०. ओं श्रुतत्वाच्च ओं
४१. ओं धर्मं जैमिनिरत एव ओं
४२. ओं पूर्वन्तु बादरायणो हेतुव्यपदेशात् ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु तृतीयाध्यायस्य द्वितीयः पादः ॥

श्री·

## अथ तृतीयाध्यायस्य तृतीयः पादः

### १. सर्ववेदाकधिरणम् ।

१. ओं सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ओं

२. ओं भेदान्नेति चेदेकस्यामपि ओं

३. ओं स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ओं

४. ओं सलिलवच्च तन्नियमः ओं

५. ओं दर्शयति च ओं

### २. उपसंहाराधिकरणम् ।

६. ओं उपसंहारोऽर्थाभेदात् विधिशेषवत्समाने च ओं

७. ओं अन्यथात्वं चशब्दादिति चेन्नाविशेषात् ओं

८. ओं न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ओं

९. ओं संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ओं

### ३. प्राप्त्यधिकरणम् ।

१०. ओं प्राप्तेश्च समञ्जसम् ओं

### ४. सर्वाभेदाधिकरणम् ।

११. ओं सर्वाभेदादन्यत्रेमे ओं

### ५. आनन्दाधिकरणम् ।

१२. ओं आनन्दादयः प्रधानस्य ओं

### ६. प्रियशिरस्त्वाधिकरणम् ।

१३. ओं प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ओं

७. इतराधिकरणम् ।

१४. ओं इतरे त्वर्थसामान्यात् ओं

८. आध्यानाधिकरणम् ।

१५. ओं आध्यानाय प्रयोजनाभावात् ओं

१६. ओं आत्मशब्दाच्च ओं

९. आत्मगृहीत्यधिकरणम् ।

१७. ओं आत्मगृहीतिरितरवदुत्तरात् ओं

१०. अन्वयाधिकरणम् ।

१८. ओं अन्वयादिति चेत्स्यादवधारणात् ओं

११. कार्याधिकरणम् ।

१९. ओं कार्याख्यानादपूर्वम् ओं

१२. समानाधिकरणम् ।

२०. ओं समान एवञ्चाभेदात् ओं

२१. ओं सम्बन्धादेवमन्यत्रापि ओं

१३. नवाधिकरणम् ।

२२. ओं न वा विशेषात् ओं

२३. ओं दर्शयति च ओं

१४. सम्भृत्यधिकरणम् ।

२४. ओं सम्भृतिद्युव्याप्त्यपि चातः ओं

१५. पुरुषाधिकरणम् ।

२५. ओं पुरुषविद्यायामपि चेतरेषामनाम्नानात् ओं

१६. वेधाधिकरणम् ।

२६. ओं वेधाद्यर्थभेदात् ओं

१७. हान्यधिकरणम् ।

२७. ओं हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्यु-
पगानवत्तदुक्तम् ओं

२८. ओं साम्पराये तर्तव्याभावात्तथा ह्यन्ये ओं

१८. छन्दाधिकरणम् ।

२९. ओं छन्दत उभयविरोधात् ओं

३०. ओं गतेरर्थवत्वमुभयथाऽन्यथा हि विरोधः ओं

३१. ओं उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ओं

१९. अनियमाधिकरणम् ।

३२. ओं अनियमः सर्वेषामविरोधात् शब्दानुमानाभ्याम् ओं

२०. यावदधिकरणम् ।

३३. ओं यावदधिकारमवस्थितिराधिकारिकाणाम् ओं

३४. ओं अक्षरधियान्त्वविरोधः सामान्यतद्भावा
भ्यामौपसदवत्तदुक्तम् ओं

२१. इयदामननाधिकरणम् ।

३५. ओं इयदामननात् ओं

३६. ओं अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ओं

३७. ओं अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ओं

२२. व्यतिहाराधिकरणम् ।

३८. ओं व्यतिहारो न विशिंषन्ति हीतरवत् ओं

२३. सत्याधिकरणम् ।

३९. ओं सैव हि सत्यादय: ओं

२४. कामाधिकरणम् ।

४०. ओं कामादितरत्र तत्र चायतनादिभ्य: ओं

४१. ओं आदरादलोप: ओं

४२. ओं उपस्थितेस्तद्वचनात् ओं

२५. निर्धारणाधिकरणम् ।

४३. ओं तन्निर्धारणार्थनियमस्तद्दृष्टे: पृथग्ध्यप्रतिबन्ध-
फलम् ओं

२६. प्रदानाधिकरणम् ।

४४. ओं प्रदानवदेव हि तदुक्तम् ओं

२७. लिङ्गभूयस्त्वाधिकरणम् ।

४५. ओं लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ओं

२८. पूर्वविकल्पाधिकरणम् ।

४६. ओं पूर्वविकल्प: प्रकरणात् स्यात् क्रियामानसवत् ओं

४७. ओं अतिदेशाच्च ओं

२९. विद्याधिकरणम् ।

४८. ओं विद्यैव तु निर्धारणात् ओं

४९. ओं दर्शनाच्च ओं

३०. श्रुत्यधिकरणम् ।

५०. ओं श्रुत्यादिबलीयस्त्वाच्च न बाधः ओं

३१. अनुबन्धाधिकरणम् ।

५१. ओं अनुबन्धादिभ्यः ओं

३२. प्रज्ञान्तराधिकरणम् ।

५२. ओं प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ओं

३३. न सामान्याधिकरणम् ।

५३. ओं न सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः ओं

३४. परेणाधिकरणम् ।

५४. ओं परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ओं

३५. एकाधिकरणम् ।

५५. ओं एक आत्मनः शरीरे भावात् ओं

५६. ओं व्यतिरेकस्तद्भावभावित्वात् न तूपलब्धिवत् ओं

३६. अङ्गावबद्धाधिकरणम् ।

५७. ओं अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ओं

५८. ओं मन्त्रादिवद्वाऽविरोधः ओं

३७. भूमाधिकरणम् ।

५९. ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ओं

३८. नानाशब्दाधिकरणम् ।

६०. ओं नानाशब्दादिभेदात् ओं

३९. विकल्पाधिकरणम् ।

६१. ओं विकल्पो विशिष्टफलत्वात् ओं

४०. काम्याधिकरणम्।

६२. ओं काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ओं

४१. अङ्गाधिकरणम् ।

६३. ओं अङ्गेषु यथाऽऽश्रयभावः ओं

६४. ओं शिष्टेश्च ओं

६५. ओं समाहारात् ओं

६६. ओं गुणसाधारण्यश्रुतेश्च ओं

४२. नवाधिकरणम् ।

६७. ओं न वाऽतत्सहभावश्रुतेः ओं

६८. ओं दर्शनाच्च ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु तृतीयाध्यायस्य तृतीयः पादः ॥

श्रीः

## अथ तृतीयाध्यायस्य चतुर्थः पादः

१. पुरुषार्थाधिकरणम् ।

१. ओं पुरुषार्थोऽतः शब्दादिति बादरायणः ओं
२. ओं शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ओं
३. ओं आचारदर्शनात् ओं
४. ओं तच्छ्रुतेः ओं
५. ओं समन्वारम्भणात् ओं
६. ओं तद्वतो विधानात् ओं
७. ओं नियमाच्च ओं
८. ओं अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ओं
९. ओं तुल्यन्तु दर्शनम् ओं

२. असार्वत्रिकाधिकरणम् ।

१०. ओं असार्वत्रिकी ओं
११. ओं विभागः शतवत् ओं
१२. ओं अध्ययनमात्रवतः ओं

३. अविशेषाधिकरणम् ।

१३. ओं नाविशेषात् ओं

४. स्तुत्यधिकरणम् ।

१४. ओं स्तुतयेऽनुमतिर्वा ओं
१५. ओं कामकारेण चैके ओं
१६. ओं उपमर्दं च ओं

१७. ओं ऊर्ध्वरेतस्तु च शब्दे हि ओं

१८. ओं परामर्शं जैमिनिरचोदना चापवदति हि ओं

१९. ओं अनुष्ठेयं बादरायणः साम्यश्रुतेः ओं

२०. ओं विधिर्वा धारणवत् ओं

२१. ओं स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ओं

२२. ओं भावशब्दाच्च ओं

२३. ओं पारिप्लवार्था इति चेन्न विशेषितत्वात् ओं

२४. ओं तथाचैकवाक्योपबन्धात् ओं

२५. ओं अत एव चाग्नीन्धनाद्यनपेक्षा ओं

२६. ओं सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ओं

२७. ओं शमदमाद्युपेतः स्यात्तथापि तु तद्विधेः तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ओं

२८. ओं सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ओं

२९. ओं अबाधाच्च ओं

३०. ओं अपि स्मर्यते ओं

३१. ओं शब्दश्चातोऽकामचारे ओं

३२. ओं विहितत्वाच्चाश्रमकर्मापि ओं

३३. ओं सहकारित्वेन च ओं

५. उभयलिङ्गाधिकरणम् ।

३४. ओं सर्वथापि तु त एवोभयलिङ्गात् ओं

३५. ओं अनभिभवं च दर्शयति ओं

३६. ओं अन्तरा चापि तु तद्दृष्टेः ओं
३७. ओं अपि स्मर्यते ओं
३८. ओं विशेषानुग्रहश्च ओं
३९. ओं अतस्त्वितरज्ज्यायो लिङ्गाच्च ओं
४०. ओं तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ओम्

६. आधिकारिकाधिकरणम् ।
४१. ओं न चाधिकारिकमपि पतनानुमानात्तदयोगात् ओं
४२. ओं उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ओं
४३. ओं बहिस्तूभयथापि स्मृतेराचाराच्च ओं

७. फलश्रुत्यधिकरणम् ।
४४. ओं स्वामिनः फलश्रुतेरित्यात्रेयः ओं
४५. ओं आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रियते ओं
४६. ओं सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ओं

८. कृत्स्नभावाधिकरणम् ।
४७. ओं कृत्स्नभावात्तु गृहिणोपसंहारः ओं
४८. ओं मौनवदितरेषामप्युपदेशात् ओं

९. अनाविष्काराधिकरणम् ।
४९. ओं अनाविष्कुर्वन्नन्वयात् ओं

१०. ऐहिकाधिकरणम् ।
५०. ओं ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ओं

११. मुक्तिफलाधिकरणम् ।

५२. ओं एवं मुक्तिफलानियमः तदवस्थावधृतेः
तदवस्थावधृतेः ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु तृतीयाध्यायस्य चतुर्थः पादः ॥

तृतीयाध्यायः समाप्तः ।

॥ श्री कृष्णार्पणमस्तु ॥

श्रीः

## अथ चतुर्थाध्यायस्य प्रथमः पादः

१. आवृत्त्यधिकरणम् ।

१. ओं आवृत्तिरसकृदुपदेशात् ओं

२. ओं लिङ्गाच्च ओं

२. आत्माधिकरणम् ।

३. ओं आत्मेति तूपगच्छन्ति ग्राहयन्ति च ओं

३. न प्रतीकाधिकरणम् ।

४. ओं न प्रतीके न हि सः ओं

४. ब्रह्माधिकरणम् ।

५. ओं ब्रह्मदृष्टिरुत्कर्षात् ओं

५. आदित्याधिकरणम् ।

६. ओं आदित्यादिमतयश्चाङ्ग उपपत्तेः ओं

६. आसीनाधिकरणम् ।

७. ओं आसीनः सम्भवात् ओं

८. ओं ध्यानाच्च ओं

९. ओं अचलत्वं चापेक्ष्य ओं

१०. ओं स्मरन्ति च ओं

११. ओं यत्रैकाग्रता तत्राविशेषात् ओं

७. आप्रायणाधिकरणम् ।

१२. ओं आप्रायणात्तत्रापि हि दृष्टम् ओं

८. तदधिगमाधिकरणम् ।

१३. तदधिगम उत्तरपूर्वाघयोः अश्लेषविनाशौ
तद्व्यपदेशात् ओं

१४. ओं इतरस्याप्येवमसंश्लेषः पाते तु ओं

१५. ओं अनारब्धकार्ये एव तु पूर्वे तदवधेः ओं

१६. ओं अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ओं

१७. ओं अतोऽन्यदपीत्येकेषामुभयोः ओं

१८. ओं यदेव विद्ययेति हि ओं

१९. ओं भोगेन त्वितरे क्षपयित्वाथ सम्पत्स्यते ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु चतुर्थाध्यायस्य प्रथमः पादः ॥

श्रीः

## अथ चतुर्थाध्यायस्य द्वितीयः पादः

१. वाङ्मनसाधिकरणम् ।

१. ओं वाङ्मनसि दर्शनाच्छब्दाच्च ओं

२. ओं अत एव च सर्वाण्यनु ओं

२. मनः प्राणाधिकरणम् ।

३. ओं तन्मनः प्राण उत्तरात् ओं

३. अध्यक्षाधिकरणम् ।

४. ओं सोऽध्यक्षे तदुपगमादिभ्यः ओं

४. भूताधिकरणम् ।

५. ओं भूतेषु तच्छ्रुतेः ओं

५. नैकस्मिन्नधिकरणम् ।

६. ओं नैकस्मिन् दर्शयतोहि ओं

६. समनाधिकरणम् ।

७. ओं समना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ओं

८. ओं तदपीतेः संसारव्यपदेशात् ओं

९. ओं सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ओं

१०. ओं नोपमर्देनातः ओं

११. ओं अस्यैव चोपपत्तेरूष्मा ओं

१२. ओं प्रतिषेधादिति चेन्न शारीरात् ओं

१३. ओं स्पष्टो ह्येकेषाम् ओं

१४. ओं स्मर्यते च ओं

७. पराधिकरणम् ।

१५. ओं तानि परे तथाह्याह ओं

८. अविभागाधिकरणम् ।

१६. ओं अविभागो वचनात् ओं

९. तदोकोऽधिकरणम् ।

१७. ओं तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ओं

१८. ओं रश्म्यनुसारी ओं

१९. ओं निशि नेति चेन्न सम्बन्धात् ओं

२०. ओं यावद्देहभावित्वात् दर्शयति च ओं

२१. ओं अतश्चायनेऽपि हि दक्षिणे ओं

१०. योग्यधिकरणम् ।

२२. ओं योगिनः प्रति स्मर्यते स्मार्ते चैते ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु चतुर्थाध्यायस्य द्वितीयः पादः ॥

श्रीः

## अथ चतुर्थाध्यायस्य तृतीयः पादः

१. अर्चिराद्यधिकरणम् ।

१. ओं अर्चिरादिना तत्प्रथितेः ओं

२. वायुशब्दाधिकरणम् ।

२. ओं वायुशब्दादविशेषविशेषाभ्याम् ओं

३. तटिदधिकरणम् ।

३. ओं तटितोऽधि वरुणः सम्बन्धात् ओं

४. आतिवाहिकाधिकरणम् ।

४. ओं आतिवाहिकस्तल्लिङ्गात् ओं

५. ओं उभयव्यामोहात् तत्सिद्धेः ओं

५. वैद्युताधिकरणम् ।

६. ओं वैद्युतेनैव ततस्तच्छ्रुतेः ओं

६. कार्याधिकरणम् ।

७. ओं कार्यं बादरिरस्य गत्युपपत्तेः ओं

८. ओं विशेषितत्वाच्च ओं

९. ओं सामीप्यात्तु तद्व्यपदेशः ओं

१०. ओं कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ओं

११ ओं स्मृतेश्च ओं

१२. ओं परं जैमिनिर्मुख्यत्वात् ओं

१३. ओं दर्शनाच्च ओं

१४. ओं न च कार्ये प्रतिपत्त्यभिसन्धिः ओं

१५. ओं अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ओं

१६. ओं विशेषं च दर्शयति ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु चतुर्थाध्यायस्य तृतीयः पादः ॥

श्री

## अथ चतुर्थाध्यायस्य चतुर्थः पादः

१. सम्पद्याधिकरणम् ।

१. ओं सम्पद्याविर्भावः स्वेन शब्दात् ओं

२. मुक्ताधिकरणम् ।

२. ओं मुक्तः प्रतिज्ञानात् ओं

३. आत्माधिकरणम् ।

३. ओं आत्मा प्रकरणात् ओं

४. अविभागाधिकरणम् ।

४. ओं अविभागेन दृष्टत्वात् ओं

५. ब्राह्माधिरणम् ।

५. ओं ब्राह्मेण जैमिनिः उपन्यासादिभ्यः ओं

६. ओं चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ओं

७. ओं एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ओं

६. सङ्कल्पाधिकरणम् ।

८. ओं सङ्कल्पादेव च तच्छ्रुतेः ओं

७. अनन्याधिपत्यधिकरणम् ।

९. ओं अत एव च अनन्याधिपतिः ओं

८. अभावाधिकरणम् ।

१०. ओं अभावं बादरिराह ह्येवम् ओं

११. ओं भावं जैमिनिः विकल्पाम्नानात् ओं

१२. ओं द्वादशाहवदुभयविधं बादरायणोऽतः ओं

१३. ओं तन्वभावे सन्ध्यवदुपपत्तेः ओं

१४. ओं भावे जाग्रद्वत् ओं

१५. ओं प्रदीपवदावेशस्तथाहि दर्शयति ओं

१६. ओं स्वाप्ययसम्पत्योरन्यतरापेक्षमाविष्कृतम् ओं

९. जगद्व्यापाराधिकरणम् ।

१७. ओं जगद्व्यापारवर्जम् ओं

१८. ओं प्रकरणादसन्निहितत्वाच्च ओं

१९. ओं प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ओं
२०. ओं विकारावर्ति च तथाहि दर्शयति ओं

१०. स्थित्यधिकरणम् ।

२१. ओं स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ओं
२२. ओं भोगमात्रसाम्यलिङ्गाच्च ओं

११. अनावृत्त्यधिकरणम् ।

२३. ओं अनावृत्तिः शब्दादनावृत्तिः शब्दात् ओं

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रेषु चतुर्थाध्यायस्य चतुर्थः पादः ।

चतुर्थोऽध्यायः समाप्तः ॥

ग्रन्थश्चायं सम्पूर्णः ॥

श्रीवेदव्यासाय नमः

# श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# श्रीमदणुभाष्यम् ॥

## अथ प्रथमोऽध्यायः

[1]नारायणं गुणैस्सर्वैः उदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥ १ ॥

विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदितः ।
समन्वयादीक्षतेश्च पूर्णानन्दोऽन्तरः खवत् ॥ २ ॥

प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ।
उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः ॥ ३ ॥

सर्वगोऽत्ता नियन्ता च दृश्यत्वाद्युज्झितः सदा ।
विश्वजीवान्तरत्वाद्यैः लिङ्गैस्सर्वैर्युतस्स हि ॥ ४ ॥

[1] हृषीकेशतीर्थीयपाठानुसारेण, आनन्दमालाव्याख्यानुसारेण, तथा प्राचीनमूलकोशानुसारेण च " नारायणं " इति पद्यं अणुभाष्यस्याद्यपद्यत्वेन न दृश्यते । आनन्दमालाव्याख्यानरीत्या ' विष्णुरेव ' इति पद्यमेव आदौ मङ्गलश्लोकतया परिगृहीतम् । तथाहि—" मध्वदेवोऽनेनैव भाष्यवाक्येन स्वात्मनोऽभीष्टदेवतां प्रणम्य प्रसादयन् अभिष्टुवन् ध्यायति ' इति ॥

तथापि " विशिष्टेष्टदेवतागुरुनतिपूर्वं चिकीर्षितं प्रतिजानीते नारायणं इति " इति तत्त्वमञ्जर्यनुसारेण तथा " इष्टदेवतां नारायणं प्रणमन् चिकीर्षितं प्रतिजानीते नारायणं इति " इति छलारीव्याख्यानुसारेण च नारायणं इति मङ्गलपद्यं अत्रानुसन्धेयम् ॥

सर्वाश्रयः पूर्णगुणः सोऽक्षरः सन् हृदब्जगः ।
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ॥
ज्ञेयो न वेदैः शूद्राद्यैः कम्पकोऽन्यश्च जीवतः ॥ ५ ॥

पतित्वादिगुणैर्युक्तस्तन्दन्यत्र च वाचकैः ।
मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ॥ ६ ॥

अव्यक्तः [1]कर्मवाक्यैश्च वाच्य एकोऽमितात्मकः ।
अवान्तरं कारणं च प्रकृतिः शून्यमेव च ॥ ७ ॥

इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः ।
शब्दैरतोऽनन्तगुणा यच्छब्दा योगवृत्तयः ॥ ८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदणुभाष्ये प्रथमोऽध्यायः ॥

---

[1] हृषीकेशतीर्थसम्मतपाठस्तु " कर्मवाच्यैश्च " इति । " कर्म वाच्यं येषां तैः" इति तत्त्वमञ्जरी । पेजावरमठीयमूलकोशे कर्मवाक्यैः इत्येव पाठः । " वसन्तादिभिः अन्यैश्च वाक्यैः " इति- आनन्दमाला । छलारीव्याख्यानुसारेण तु उभयथापि पाठः साधुः । तथा सविसर्गनिर्विसर्गाव्यक्तपदपाठश्च साधुः । तथाहि । " अव्यक्तं कर्म वाच्यं येषां शब्दानामिति बहुव्रीहिः । तथाच अव्यक्तादिप्रतिपादकाशेषशब्दः ज्योतिष्टो-मादिकर्म तदङ्गवाचकाशेषशब्दैश्च वाच्य इत्यर्थः ॥ —क ख.

द्वन्द्वान्ते श्रूयमाणो वाक्यशब्दः प्रत्येकमभिसम्बध्यते । वाक्यशब्दश्च शब्दपरः । तथाचाव्यक्तादिप्रतिपादकाशेषशब्दैः ज्योतिष्टोमादिकर्मतदङ्गवाचकाशेषशब्दैश्च वाच्य इत्यर्थः । सविसर्गाव्यक्तशब्दपाठे अव्यक्त इत्यनेनैव पृथक् प्रथमाधिकरणतात्पर्यं उक्तमिति ज्ञातव्यम् । कर्मवाक्यैश्च वाच्य इत्यनेन प्रत्येकं द्वितीयाधिकरणतात्पर्यं उक्तमिति ज्ञेयम् ॥

अव्यक्तः कर्मवाच्यैश्च इति पाठे तु कर्म वाच्यं येषां शब्दानां इति बहुव्रीहिः " ॥— ग.घ.

श्रीवेदव्यासाय नमः

## अथ द्वितीयोऽध्यायः

श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः ।
निषेद्धुं शक्नुयुर्वेदाः नित्यत्वान्मानमुत्तमम् ॥ १ ॥

[1]देवतावचनादापो वदन्तीत्यादिकं वचः ।
नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ॥ २ ॥

असज्जीवप्रधानादिशब्दाः ब्रह्मैव नापरम् ।
वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ॥ ३ ॥

स्वातन्त्र्या[2]त्सर्वकर्तृत्वान्नायुक्तं तद्वदेच्छ्रुतिः ।
भ्रान्तिमूलतया [3]सर्वसमयानामयुक्तितः ॥ ४ ॥

न तद्विरोधाद्वचनं वैदिकं शङ्क्यतां व्रजेत् ।
आकाशादिसमस्तं च तज्जं तेनैव लीयते ॥ ५ ॥

सोऽनुत्पत्तिलयः कर्ता जीवः तद्वशगस्सदा ।
तदाभासो हरिः सर्वरूपेष्वपि समस्सदा ॥ ६ ॥

मुख्यप्राणश्चेन्द्रियाणि देहश्चैव [4]तदुद्भवः ।
मुख्यप्राणवशे सर्वं स विष्णोर्वशगस्सदा ॥ ७ ॥

---

[1] हृषीकेशतीर्थसम्मतपाठस्तु
"देवतावचनाच्चापो वदन्तीत्यादिना वचः" इति ।

[2] सर्वकर्तृत्वं—क. [3] सर्वं—क. [4] 'तदुद्भवाः' हृषीकेशतीर्थीयपाठः ।

सर्वदोषोज्झितस्तस्मात् भगवान् पुरुषोत्तमः ।
उक्ता गुणाश्चाविरुद्धाः तस्य वेदेन [1]सर्वशः ॥ ८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदणुभाष्ये द्वितीयोऽध्यायः ॥

[1] 'सर्वथा' हृषीकेशीयपाठः ।

श्रीवेदव्यासाय नमः

## अथ तृतीयोऽध्यायः

शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा ।
[1]मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ॥ १ ॥

याति तस्माद्विरक्तस्सन् ज्ञानमेव समाश्रयेत् ।
सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् ॥ २ ॥

सर्वदेशेषु कालेषु स एकः परमेश्वरः ।
तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ॥ ३ ॥

सच्चिदानन्द आत्मेति [2]मानुषैस्तु [3]सुरेश्वरैः ।
यथाक्रमं बहुगुणैः ब्रह्मणा त्वखिलैर्गुणैः ॥ ४ ॥

उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम् ।
ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम् ॥ ५ ॥

सर्वेऽपि पुरुषार्थास्स्युः ज्ञानादेव न संशयः ।
न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ॥ ६ ॥

गुणदोषैस्सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ।
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदणुभाष्ये तृतीयोऽध्यायः ॥

[1] 'मिथ्याज्ञानेन तु' इति क्वचित्पाठः । [2] "मानुषैश्च" इति प्रचलितपाठः । "तुशब्दात् पूर्णत्वं नाम वैलक्षण्यं गुणानां स्मर्तव्यम् ।" इति आनन्दमाला ।
[3] सुरादिकैः (Belgaum Edition) (1811 शकाब्दाः)

श्रीवेदव्यासाय नमः

## अथ चतुर्थोऽध्यायः

विष्णुर्ब्रह्म तथाऽऽदातेत्येवं नित्यमुपासनम् ।
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ॥ १ ॥

प्रारब्धकर्मणोऽन्यस्य [1]ज्ञानादेव परिक्षयः ।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥ २ ॥

[2]उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा ॥ ३ ॥

वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम् ।
उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः ॥ ४ ॥

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात्सहामुना ॥ ५ ॥

यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः ।
जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते ॥ ६ ॥

यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान ।
अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः ॥
दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् ॥ ७ ॥

---

[1] 'ज्ञानेन स्यात् परिक्षयः' इति हृषीकेशतीर्थीयपाठः । आनन्दमालापाठश्च ॥

[2] 'उत्तरेषूत्तरेष्वेव' इति हृषीकेशतीर्थीयपाठः । आनन्दमालानुसारिपाठश्च ।

[3] 'जगत्सृष्ट्यादिविषयं' इति हृषीकेशतीर्थीयपाठः । आनन्दमालानुसारिपाठश्च ॥

पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसङ्ग्रहः ।
कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः ॥ ८ ॥

नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ।
विरिञ्चिशर्वपूर्वेड्यवन्द्याय श्रीवराय ते ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्री[1]मदणुभाष्ये चतुर्थोऽध्यायः ॥
समाप्तोऽयं ग्रन्थः ॥

---

[1] अस्य ग्रन्थस्य अणुभाष्यं, सर्वशास्त्रार्थसङ्ग्रहः, संक्षेपभाष्यं, भाष्यसङ्ग्रहः, सङ्ग्रहभाष्यं इति नामानि वर्तन्ते । तथाहि—

१) "अधिकरणार्थसङ्ग्रहव्याजेन सर्वशास्त्रार्थसङ्ग्रहरूपं अणुभाष्यं कर्तुकामः" इति तात्पर्यप्रकाशिकायाम् ।

२) "पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः" ॥ इति आनन्दतीर्थभगवत्पादाः ।

३) "भगवानानन्दतीर्थमुनिः यथावद्व्याचिख्यासुः भाष्यानुभाष्ये विधाय सङ्क्षेपभाष्यमपि विधित्सुः" इति तत्त्वमञ्जर्यां श्रीराघवेन्द्रतीर्थाः ॥

४) "अनन्तोऽर्थः प्रकटितः त्वयाणौ भाष्यसंग्रहे" ॥ (सुमध्वविजयः, १५–८२) इति नारायणपण्डिताचार्याः ।

५) "विष्णोः प्रसादैकबलात् सर्वशास्त्रार्थसंग्रहम्" । इति आनन्दमालायाम् ।

६) "अथेदानीमेव परिसमापितं संग्रहभाष्यं भगवानाचार्यः" इति आनन्दमालान्ते ॥

श्रीरस्तु

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमदणुभाष्यम्

श्री छलारी शेषाचार्यविरचिततात्पर्यप्रकाशिकासमलङ्कृतम्

श्री गुरुभ्यो नमः ।

**नारायणं गुणैस्सर्वैः उदीर्णं दोषवर्जितम् ।**
**ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥**

---

हरिः ॐ

लक्ष्मीनारायणं [1]देवं व्यासमध्वजयादिकान् ।
गुरून् [१]मूलादिपरमान् वन्दे विद्यागुरूंश्च मे ॥ १ ॥
[2]बहुज्ञाननिबन्धेभ्यः बुद्ध्यारोहार्थमञ्जसा ।
ब्रह्मसूत्राणुभाष्यस्य तात्पर्यं सम्प्रकाश्यते ॥ २ ॥

अथ भगवान् आचार्यवर्यः —

''सङ्क्षेपविस्तराभ्यां च प्रवदन्ति मनीषिणः ।
बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात् ॥''

इति वचनात्, अन्यैः अन्यथा व्याख्यातानि ब्रह्मसूत्राणि भाष्यानुव्याख्यानन्याय[3]विवरणप्रस्थानत्रये संक्षेपविस्तराभ्यां यथाव[4]द्व्याख्या[5]य तेषां अतिविस्तृतत्वेन मन्दबुद्धीनां अनुदिनं पठनादावशक्तत्वात् तदर्थं अधिकरणार्थसङ्ग्रह-

---

[१]''स्मृत्वा गुरुं पूर्वगुरुं आदिमूलगुरुं तथा ।
देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ॥''
—इति तन्त्रसारोक्तरीत्या अस्यार्थो ध्येयः ॥

[1]वन्दे— ख. [2]बहुज्ञाना— घ. [3]विवरणलक्षण— ख.घ. [4]द्व्याचिख्या— क
[5]य पुनरधिकरणानां अनुदिनं पठनाद्यर्थं— क. यपुनरधिकारिणां पठनार्थं— ख.

व्याजेन सर्वशास्त्रार्थसङ्ग्रहरूपं अणुभाष्यं कर्तुकामः क्रमेण अध्यायचतुष्टय-प्रतिपाद्यविशेषणविशिष्टदे[1]वतात्वेन गुरुत्वेनोपाधिना च [2]इष्टदेवतां श्रीनारायणं प्रणमन् चिकीर्षितं प्रतिजानीते ॥ **नारायणमिति** ॥ गुरून्, [3]व्यासान् अत्र गुरुत्वादेव बहुवचनम्। उक्तं च गीताभाष्यटीकायां "बहुवचनं गौरवादेवेति"। अपिपदेन स्वस्य गुरुदे[4]वताभेदे अरुचिं सूचयति। [5]यद्यपि गुरुः न देवताभिन्नः तथापि विशेषानुग्रहार्थं पृथङ्नतिरिति। [6]अनेनैव विषयादिकं सूचितमिति ज्ञातव्यम्। प्रेक्षावत्प्रवृत्त्यङ्गत्वात्, तत्स्मरणस्य महाफलहेतुत्वाच्च। तदुक्तम्—

१"अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत्।
स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम् ॥"

इति। [7]तथाहि—ज्ञेयत्वगम्यत्वयोः ज्ञातृगन्तृसापेक्षत्वात् तद्योग्यः तदिच्छुरेवाधिकारी सूचितः। नारायण एव विषयः। ज्ञानगमने [8]प्रयोजने। [9]यथायोगं सम्बन्धः इति [10]विशेषण[11]चतुष्ट[येन] निरूपितम्। एतत्पद्यविवरणन्तु तत्त्वप्रकाशिकायां श्रीमज्जयतीर्थश्रीमच्चरणैः निपुणतरं कृतमिति तदेवानुसन्धेयम्। विस्तरभयात्[12]नास्माभिः प्रपञ्च्यत इत्यवधेयम्।

---

१श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते भागवततात्पर्यनिर्णये प्रथमस्कन्धस्य प्रथमाध्याये उदाहृतवामनपुराणश्लोकः ॥

[1] वतया—क. [2] "इष्टदेवतां" इति—ख·घ· मातृकयोर्नास्ति। [3] व्यासान्, बादरायणाचार्यान्—क. [4] वतयोः क. [5] इदं वाक्यं—क·ख· मातृकयोर्नास्ति। [6] अनेन—ख. [7] यथा—क· [8] प्रयोजनम्—क. [9] यथायोग्यं—क. [10] विशेषण एतत्पद्यविवरणन्तु—ख.घ· [11] चतुष्टयैः—क.

[12] नात्र प्रपञ्च्यतेऽस्माभिरिति ध्येयम्।—ख
नात्र प्रपञ्चतेऽस्माभिरित्यवधेयम्।—घ

[1]ननु सूत्रार्थ उच्यत इति प्रतिज्ञा अनुपपन्ना। उत्तरत्र सर्वसूत्राणां व्याख्यानादर्शनादिति चेत्- सत्यम्, भाष्यादेव सर्वसूत्राणां व्याख्यातत्वेन अत्र प्रत्यधिकरणं तात्पर्यमात्रस्यैवोच्यमानत्वात्। अस्य च ग्रन्थस्याणुत्वात्। तात्पर्यकथनस्यापि व्याख्यानत्वस्य सुप्रसिद्धत्वात्। अतः युक्तेयं प्रतिज्ञेति।

---

[ब्रह्मजिज्ञासायाः कर्तव्यत्वसमर्थनम्]

**॥ ओं ॥ अथातो ब्रह्मजिज्ञासा ॥ ओं ॥ १-१-१**

१अथ वेदाध्ययनशमदमादिरूपाधिकारसम्पत्त्यनन्तरं, अतः मोक्षाख्यप्रयोजनस्य सत्त्वात्, ब्रह्मणः जिज्ञासा श्रवणादिरूपो विचारः [2]कर्तव्यः इति सूत्रार्थः ॥

[3]तद्विजिज्ञासस्व तद्ब्रह्मेत्यादिश्रुत्युक्तजिज्ञासाकर्तव्यत्व[4]समर्थनार्थमिदं अधिकरणम्। अस्मिन्नधिकरणे जीव[5]व्यतिरिक्तब्रह्मणोऽभावात् जीवस्य च अहमिति स्वप्रकाशत्वेन [6]नित्यसिद्धत्वात् न जिज्ञास्यतेति पूर्वपक्षे प्राप्ते— [7]जिज्ञास्ये 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति ब्रह्मशब्दश्रवणात्. तेन च [8]तस्य गुणपूर्णत्वोक्तेः नानुभवसिद्धाल्पगुणजीवाभेदः, "अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन् गुणाः" इति श्रुतेः[9]। अतः जीवस्य स्वप्रकाशत्वेऽपि

---

१ घ—मातृकायां सर्वत्रापि सूत्रार्थः नोच्यते।

[1] इत आरभ्य प्रतिज्ञेतीत्यन्तोऽयं भागः— क.ख. मातृकयोर्नास्ति। [2] कर्तव्या —ख. [3] तद्विजिज्ञासस्वेत्यादि—ख.घ. [4] "समर्थनार्थं" इति—क. मातृकायां नास्ति। [5] व्यतिरिक्तस्य —घ. [6] अनादिसिद्धत्वात् —क. [7] "जिज्ञास्ये" इति—ख. मातृकायां नास्ति ॥ [8] "तस्य" इति— क.ख.ग. मातृकासु नास्ति। [9] ग्रन्थारम्भात् एतावत्पर्यन्तो भागः— ग. मातृकायां नास्ति। तत्र आद्यं पत्रं लुप्तम् ॥

## विष्णुरेव विजिज्ञास्यः

[1]तद्भिन्नब्रह्मणः सन्दिग्धत्वाज्जिज्ञास्यता युक्ता इति सिद्धान्तः कृतः । तस्य तात्पर्यमाह—**"विष्णुरेव विजिज्ञास्यः"** इति ।

[2]यद्यपि सूत्रे श्रुत्यनुसारेण ब्रह्मजिज्ञासा कर्तव्येत्युक्तं, तथापि ब्रह्मशब्दस्यानेकार्थत्वात् सौत्रब्रह्मशब्देन किं ग्राह्यमित्यतः भगवत्प्रणीतदैवी-मीमांसागत "स विष्णुराह हि" "तं ब्रह्मेत्याचक्षते" इति निरन्तरसूत्रद्वये ब्रह्मत्वेन विष्णोरेव प्रकृतत्वात् प्रकृतपरित्यागे कारणाभावात् सौत्रब्रह्मशब्देन विष्णुरेव ग्राह्य इति भावेन विष्णुरेव विजिज्ञास्यः इत्युक्तम् ॥

ननु दैवीमीमांसायाः शेषपैलाभ्यां कृतत्वस्य पुराणादौ प्रसिद्धेः कथं भगवत्कृतत्व ? इति चेत्, न, "अथातो दैवीमीमांसे" त्यादिभागस्य तथा "स विष्णुराह हि तं ब्रह्मेत्याचक्षते" इति अन्तभागस्य च भगवत्कृतत्वात् मध्यभागस्य च शेषपैलाभ्या कृतत्वात् । तदुक्तमनुव्याख्याने—

"आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ।
मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा" ॥ इति ।

रमादेः जिज्ञास्यतानिरासार्थं एवकारः । न च १"[3]उपास्य तां श्रियमव्यक्तरूपां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः" इति तज्जिज्ञास्यताप्रति-पादक [4]वाक्यविरोधः । प्राधान्येन विष्णुरेव [5]विजिज्ञास्यः न रमादिः इत्यस्यार्थस्यात्राभिमतत्वात् । तदुक्तम्—

---

१ भगवद्गीताभाष्ये द्वादशाध्याये "सामवेदे अग्निवेश्यशाखायां" इति आचार्यैः उक्तम् ।

[1] तद्भिन्नस्य ब्रह्मणः—ग. घ. [2] एतदारभ्य "कृतमञ्जसा इति" इत्यन्तं—क.ख.ग. मातृकासु नास्ति ॥ [4] उपास्येत्ययं श्लोकः ख.घ. मातृकयोर्नास्ति । [4] श्रुतिविरोध —क [5] जिज्ञास्यः—क.

## सर्वकर्ता

१सर्ववर्णा[1]श्रमैर्विष्णुः एक एवेज्यते सदा ।
रमाब्रह्मादयस्तस्य [2]परिवारतयैव तु ॥  इति ।

२अन्यत्रापि—[3]"परिवारतया ग्राह्याः अपि हेयाः प्रधानतः" इति । जिज्ञासा कर्तव्येत्यस्य तात्पर्यं "विजिज्ञास्यः" इति । सूत्रे जिज्ञासेत्युक्तावपि वीत्युपसर्गः श्रुत्यनुगमायेति बोध्यम् ॥ [4]१ ॥

---

[जिज्ञास्यस्य लक्षणकथनेन विष्णुत्वसमर्थनम् ]

### ॥ओं॥ जन्माद्यस्य यतः ॥ओं॥ १–२–२

अस्य प्रपञ्चस्य जन्मादि यथायोगं यतः भवति तद्ब्रह्मेति सूत्रार्थः ॥

[5]अत्र तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुत्युक्तं [6]ब्रह्म न विष्णुः किन्नाम जीव एव । बृहजातिजीवेति जीवप्रापकरूढिसद्भावात् । न च विष्णुप्रापकयोगसद्भावात् विष्णुरेवात्रोक्तं ब्रह्म किं न स्यादिति वाच्यं, योगाद्रूढेः मुख्यत्वात् । बाधकं विना मुख्यार्थत्यागायोगात् इति प्राप्ते–

तत्रैव जिज्ञास्यब्रह्मणः "यतो वा इमानि भूतानि जायन्ते" इत्यादिना जन्मादिकारणत्वोक्तेः, तल्लक्षणस्य च [7]विष्णावेव सम्भवात्, जीवे असम्भवात् जिज्ञास्यं ब्रह्म विष्णुरेवेति सिद्धान्तः कृतः ॥ तस्य तात्पर्यमाह— **सर्वकर्तेति** ॥ विष्णुरेवेत्यनुवर्तते । सर्वेति [8]तन्त्रं आवृत्तिर्वा । विष्णुरेव सर्वस्य जगतः सर्वस्य [9]जन्माद्यष्टकस्य कर्तेत्यर्थः । सर्वकारणं इत्यनुक्त्वा

---

१ सदाचारस्मृतेः ३२ तमः श्लोकः । २ अनुव्याख्यानस्य ३४ तमः श्लोकः ।

[1] श्रमे वि—क. [2] परिवारत एव—ग. [3] अनुव्याख्यानश्लोकोदाहरणं—ख. मातृकायां नास्ति । [4] ग. मातृकायां संख्या न निर्दिष्टा । [5] 'अत्र' इति—ग. मातृकायां नास्ति । [6] "ब्रह्म" इति—क. मातृकायां नास्ति । [7] विष्णोरेव—क. [8] तन्त्रया—ग. [9] जन्माष्टकस्य—ग.

## आगमोदितः

पर्वीकर्तेति वदता जन्मादिकर्तृत्वमेव ब्रह्मलक्षणत्वेन श्रुतिसूत्राभिप्रेतं न परोक्तोपादानकारणत्वं इति सूचितम् ॥ २[1] ॥

---

[ब्रह्मणः शास्त्रैकसमधिगम्यत्वप्रतिपादनम्]

### ॥ ओं ॥ शास्त्रयोनित्वात् ॥ ओं ॥ १-१-३

अनुमानेन जन्मादिकारणमन्यदिति न [2]शङ्क्यं, कुतः? शास्त्रयोनित्वात् । शास्त्रं योनिः ज्ञप्ति[3]कारणं प्रमाणं इति यावत् । तस्य भावः तत्त्वम् । तस्माज्जग[4]त्कारणत्वस्य वेदादिशास्त्रैकसमधिगम्यत्वात् इति सूत्रार्थः ।

अत्र वेदोक्तं जगत्कारणत्वं हरेर्यथाऽङ्गीकार्यं एवं अन्येषामपि तदङ्गीकार्यं, क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् [5]इत्याद्यनुमानेन रुद्रादीनामपि [6]जगज्जन्मादिकारणत्वस्य शक्यसाधनत्वात्, तथाच लक्षणस्य रुद्रादावतिव्याप्तिरिति प्राप्ते ।

भवेदन्येषां जगत्कारणत्वकल्पना यदि जगत्का[7]रणत्वं च आनुमानिकं स्यात् । न चैतदस्ति, शास्त्रैकसमधिगम्यत्वात् [8]जगत्कारणत्वस्य । अनुमानस्य [9]प्रतिपक्षादिग्रस्तत्वेन असाधकत्वात् । तथाच लक्षणस्य न रुद्रादावतिव्याप्तिरिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**आगमोदित इति** ॥ [10]अत्र आगमशब्देन ऋगादिशास्त्रमेव [11]ग्राह्यम् ।

---

[1] ग—मातृकायां संख्या न निर्दिष्टा । [2] शक्यं—क. [3] कारणमिति—क.ग. [4] त्कारणस्य—क.ग. [5] इत्यनुमानेन—क.ख. [6] क.ख.घ. मातृकासु जगत्पदं नास्ति । [7] रणं—क.ग.घ. [8] जगत्कारणवस्तुनः—ख. [9] प्रतिपक्षग्रस्तत्वेन—ग. [10] तत्र—क.ग. मातृकायां तत्रेति वा अत्रेति वा उभयमपि नास्ति । [11] ज्ञेयम्—ख.

[1]"ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारः नैव शास्त्रं कुवर्त्म तत्" ॥

इति स्कान्दपुराणात् । तेन उदितः प्रतिपादितः, जन्मादिकारणत्वेन शास्त्रैकसमधिगम्य इत्यर्थः ॥ ३ ॥

---

[उपक्रमादिभिः ब्रह्मणः शास्त्रयोनित्वसमर्थनम्]

**॥ ओं ॥ तत्तु समन्वयात् ॥ ओं ॥ १-१-४**

तत्तु [2]तदेव ब्रह्मैव शास्त्रप्रतिपाद्यं, कुतः? समन्वयात् । उपक्रमादिलिङ्गसमुदायादिति सूत्रार्थः ॥

अत्र [3]विष्णोरिव रुद्रादीनामपि जगत्कारणत्वेन शास्त्रैकसमधिगम्यत्वम्, पाशुपता[4]द्यागमेषु तथोक्तत्वात्; तस्मा[5]दतिव्याप्तं जगत्कारणत्वं इति प्राप्ते—

पाशुपताद्युक्तमपि तन्न ग्राह्यम् । वेदगतोपक्रमादितात्पर्य[6]लिङ्गादीनामेव शास्त्रनिर्णायकत्वेन तद्विरुद्धस्य पाशुपताद्यागमस्य [7]अनिर्णायकत्वात् । न चात्र प्रमाणाभावः ।

१ "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" ॥

१ब्रह्मसूत्रभाष्ये बृहत्संहितावाक्यत्वेनोदाहृतोऽ श्लोकः श्रीमदाचार्यैः ॥

[1] क.ख.ग—मातृकासु स्कान्दपुराणवचनं नोदाहृतम् ॥ [2] "तदेव" इति पदं—ख ग.मातृकयोर्नास्ति । [3] विष्णाविव—ग. [4] दिशास्त्रेषु—ग. [5] दिति—क. [6] लिङ्गानामेव—ग.घ, [7] अप्रमाणत्वात्—घ.

इति स्मृतेः । एवं च उपक्रमादिभिः सम्यक् शास्त्रे विचार्यमाणे ब्रह्मैव जगत्कारणत्वेन मुख्यतः शास्त्रगम्यं प्रतीयते । न रुद्रादि । तस्मादनतिव्याप्तं जगत्कारणत्वं तस्यैव लक्षणमिति सिद्धान्तः कृतः ॥ तस्य तात्पर्यमाह—**समन्वयादिति** ॥ समित्य[1]स्यावृत्तिः । एकः सम्यगि[2]त्यर्थकः । अपरः मुख्यार्थकः । [अन्यः कृत्स्नार्थकः] अन्वयादित्येकवचनं समुदायाभिप्रायम् । अन्वीयते शक्तितात्पर्यगोचरतया ज्ञायते अर्थः [3]अनेनेत्यन्वयः, उपक्रमादिलिङ्गसमुदायः, तस्मात् सम्यक् विचार्यमाणे मुख्यतः जगत्कारणत्वेन सर्वागमो[4]दितो विष्णुरेव [5]इति पूर्वेणान्वयः ॥ ४ ॥

---

[ब्रह्मणः कात्स्न्येन अवाच्यत्वेऽपि किञ्चिद्रूपेण वाच्यत्वप्रतिपादनम् ]

## ॥ ओं ॥ ईक्षतेर्नाशब्दम् ॥ ओं ॥ १-१-५

[6]तदित्यनुवर्तते । तत् ब्रह्म अशब्दं न, अवाच्यं न, किन्तु वाच्यमेव । कुतः ? ईक्षतेः । अत्र [7]ईक्षतेः इति धातुनिर्देशः । [8]तेन तदर्थः ईक्षणं [9]लक्ष्यते । तेन च तद्विषयत्वं [10]लक्ष्यते । तथाच लक्षितलक्षणया ईक्षणविषयत्वात् इति सूत्रार्थः ।

अत्र न ब्रह्मणः शास्त्रमुख्यार्थत्वं अवाच्यत्वात् । न च असिद्धो हेतुः । "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः । नह्यवाच्यस्य शास्त्रमुख्यार्थता [11]सम्भवति । अतो न शास्त्रोक्तं जगत्कारणत्वं तस्येति प्राप्ते—

---

[1] स्य चावृत्तिः—ख. [2] त्यर्थः—क. [3] अनेन समन्वयः—ग. [4] मोक्तो—ग.
[5] इत्यन्वयः—ग. [6] ख.ग—मातृकयोः 'तदित्यनुवर्तते'' इत्यत् शब्दः नास्ति ।
[7] ईक्षतिः—ख.ग. [8] तेन च—क. [9] लभ्यते—क. [10] लभ्यते—ग
[11] सम्भवतीति प्राप्ते—क.

## ईक्षतेश्च

अवाच्यत्वात् ब्रह्मणः न शास्त्रमुख्यार्थत्वमिति [1]न युक्तम् । ईक्षणीयत्वेन वाच्यत्वस्य सिद्धत्वात् । न च ईक्षणीयत्वमसिद्धमिति वाच्यम् । "स एतस्माज्जीवघनात्परात्परं पुरि शयं पुरुषमीक्षत" "[2]आत्मन्येवात्मानं पश्येत्" इत्यादिश्रुतिसिद्धत्वात् । [3]ईक्षणीयत्वेन वाच्यत्वसिद्धिः कथमिति चेत् परिशेषप्रमाणादिति गृहाण । तथाहि । श्रुतिषु तावत् ईक्षणीयत्वं ब्रह्मणः श्रूयते । ईक्षणं च प्रमाणेन भवेत् । प्रसक्तप्रमाणेषु च ब्रह्मणो न वचनेतरप्रमाणेनेक्षणं तस्यौपनिषदत्वात् । वचनेनेक्षणं च अवाच्ये वृत्यन्तरायोगेन परिशेषाद्वाच्यत्वमेव साधयति । न च तस्य वाच्यत्वे "यतो वाचो निवर्तन्ते" इत्यादिश्रुतिविरोधः तस्याः [4]अप्रसिद्धत्वाभिधायकत्वेनावाच्यत्वानभिधायकत्वात् । तदुक्तम् :—

१"अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः" [5]इति । [6]तस्मात् शास्त्रोक्त जगत्कारणत्वं तस्यैव युक्तमिति सिद्धान्तः कृतः । तस्य तात्पर्यमाह—**ईक्षतेश्चेति** । चशब्दः आगमोदितः इत्यस्यानुकर्षणार्थः । [7]सूत्रानुसारेण धातुनिर्देशः । तेन च तदर्थः ईक्षणं लक्ष्यते । तथाच लक्षितलक्षणया ईक्षणीयत्वादित्यर्थः । २अस्यापि हेतोः विष्णुरागमोदित एवेत्यनुषङ्गः । [8]शब्दवाच्य एवेत्यर्थः । तदुक्तमनुव्याख्याने :—

१ब्रह्मसूत्रभाष्ये आचार्यैः गरुडपुराणवाक्यत्वेनेदं उदाहृतम् ।

२अस्यापि हेतोः विष्णुः आगमोदित एवेत्यनुषक्तेन अन्वयः ।

[1] यदुक्तं न तद्युक्तम्—क. [2] क. ख. ग. मातृकासु इयं श्रुतिः नास्ति । [3] ईक्षणीयत्वेनेत्यारभ्य साधयतीत्यन्तो भागः—क. ख. ग. मातृकासु नास्ति ॥ [4]अप्रसिद्धाभि — क. ख. ग. [5] "इति" इति पदं—ग. मातृकायां नास्ति । [6] इदं वाक्यं—क. मातृकायां नास्ति । [7] "सूत्रानुसारेणे"त्यारभ्य, "इत्यर्थः" इत्यन्तो भागः—क. ख. ग. मातृकासु नास्ति । [8] आगमोदितः शब्दवाच्य एवेत्यर्थः—ख. ग

"ईक्षणीयत्वतो विष्णुः वाच्य एव न चान्यथा" इति । [1]तस्मात् [2]शास्त्रयोनित्वं जगत्कारणत्वं च तस्यैव युक्तमिति भावः ॥ ५ ॥

[3]एवं सामान्यतः भगवति तत्तु समन्वयादिति सर्वशब्दसमन्वये सिद्धे, तमेव समन्वयं प्रतिवाक्यग्रहणेन प्रपञ्चयितुं अध्यायशेषः [4]प्रवृत्तः ॥

[5]शब्दास्तावच्चतुर्विधाः । तत्र प्रसिद्धाः । लोकतोऽन्यत्र प्रसिद्धाः । [6]यथाकथञ्चित् उभयत्र प्रसिद्धाः । श्रुतिलिङ्गादिभिः अन्यत्रैव प्रसिद्धाः इति । सर्वेऽपि प्रत्येकं द्विविधाः । नामात्मकाः लिङ्गात्मकाश्चेति । तेषु [7]तत्र[8]प्रसिद्धानां समन्वयो [9]न वाच्यः विप्रतिपत्त्यभावात् । तत्रादौ तावत् लोकतोऽन्यत्र प्रसिद्धानां नामात्मकानां शब्दानां विष्णौ समन्वयं प्रदर्शयत्यस्मिन्पादे सूत्रकारः ॥

---

[श्रुत्युक्तानन्दमयस्य ब्रह्मत्वसमर्थनम्]

## ॥ ओं ॥ आनन्दमयोऽभ्यासात् ॥ ओं ॥ १-१-६

आनन्दमयशब्दवाच्यो विष्णुरेव, कुतः ? अभ्यासात्, ब्रह्मशब्दाभ्यासादिति सूत्रार्थः ।

[10]पूर्वं ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । तच्च ब्रह्म "ब्रह्मपुच्छं प्रतिष्ठे"त्यानन्दमयावयवरूपं प्रतीयते । न ह्यवयविनं विना अवयवमात्रस्य जिज्ञास्यतेत्याशङ्कायामिदं अधिकरणं प्राप्तम् ।

---

1 तस्मादिति वाक्यं—क. मातृकायां नास्ति । 2शास्त्रोक्तं—ग. घ. 3एवं च—क. 4 प्रकृतः—क. 5 ते च शब्दाः—क. 6 "यथाकथञ्चित्" इति पदं—क. कातृकायां नास्ति । 7न तत्र—ग.घ. 8न प्रसिद्धानां—ख. 9"न" कारः—ख.ग.घ. मातृकासु नास्ति । 10पूर्वं" इत्यारभ्य "प्राप्तम्" इत्यन्तो भागः—क.ख.ग. मातृकासु नास्ति ।

अत्र "तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उ–तरः पक्षः । आनन्द आत्मा । ब्रह्मपुच्छं प्रतिष्ठा" । इति तैत्तिरीयश्रुत्युक्तानन्दमयो न विष्णुः किन्नाम हिरण्य[1]गर्भादय एव । [2] कुतः ? आनन्दमयमधिकृत्य "अस्ति ब्रह्मेति चेद्वेदे"ति हिरण्यगर्भनिष्ठब्रह्मशब्दश्रवणात् । आनन्दमयसमानार्थकशतानन्दनाम्नः तस्मिन्प्रसिद्धेश्च । [3]यद्यपि हिरण्यगर्भस्येव ब्रह्मशब्देन विष्णोरप्यस्ति प्राप्तिः । तथापि नासावानन्दमयः । "ब्रह्मपुच्छं प्रतिष्ठे"ति विष्णोः आनन्दमयावयवत्वोक्तेः । तस्य च आनन्दमयत्वे तदवयवत्वविरोधात् । तथा च आनन्दमयस्याब्रह्मत्वेन न तदवयवब्रह्मजिज्ञासा सम्भवतीति प्राप्ते—

[4]अयं आनन्दमयो विष्णुरेव । "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद" इति आनन्दमये ब्रह्मशब्दाभ्यासात् । [5]"तदेव ब्रह्म परमं कवीनां एतमेव ब्रह्मेत्याचक्षते"

१"ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
असम्पूर्णाः परे यस्मात् उपचारेण वा भवेत्" ॥

[6]इत्यादिश्रुतिस्मृतिषु [7]पूर्णत्वेन विष्णावेव ब्रह्मशब्दस्य [8]परममुख्यत्वस्यान्येषां अपूर्णत्वेन ब्रह्मशब्द[9]मुख्यार्थताभावस्य च उक्तत्वात् । [10]मुख्यार्थ-

---

१ ब्रह्मसूत्रभाष्ये आचार्यैः उदाहृतं प्रमाणम् ॥

[1]गर्भ एव—ख.ग.घ. [2]"कुतः"—ग. नास्ति । [3]"यद्यपि" इत्यारभ्य "सम्भवति" इत्यन्तं क.ख.ग. नास्ति । [4]"अयं" इति पदं—ग नास्ति । [5]ब्रह्मशब्दस्य, "तदेवर्तं तदु सत्यमाहुः" तदेव ब्रह्म - क. [6]इति श्रुति—ख. [7]"पूर्णत्वेन"—क.ख.घ. नास्ति । [8]"परम" इति पदं—क.ख.ग. नास्ति । [9]मुख्यार्थत्वाभावस्य – ख ग.घ. [10]"मुख्यार्थे"ति वाक्यं—घ. नास्ति ।

## पूर्णानन्दः

[1]त्यागेन अमुख्यार्थग्रहणायोगात् । [2]न चानन्दमयस्य विष्णुत्वे तस्य तत्पुच्छत्वोक्तिविरोधः । "स शिरः, स दक्षिणः पक्षः, स उत्तरः पक्षः, स आत्मा, स पुच्छं" इति श्रुतौ अवयविन एव अवयवत्वोक्तेः । अतः ब्रह्म-जिज्ञासा युक्तेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**पूर्णानन्द इति** । आनन्दमय इत्यत्र मयटः प्राचुर्यार्थत्वमङ्गीकृत्य पूर्णेत्युक्तम् । आनन्दमय इत्यत्र आनन्दप्रचुर इत्येव व्याख्याने ब्राह्मणप्रचुरो ग्रामः इत्यत्र अल्पशूद्रप्राप्तिवत् [3]अनानन्दस्यापि प्राप्तिस्स्यात् [4]अतः प्रचुरानन्द इति विपरीतसमासमभिप्रेत्य प्राचुर्यं पूर्णत्वं इति भावेन पूर्णानन्द इत्युक्तम् ॥ ६ ॥

---

[वेदोक्तः देहान्तःप्रविष्टः परमात्मैव नेन्द्रियादिरिति प्रतिपादनम्]

### ॥ ओं ॥ अन्तस्तद्धर्मोपदेशात् ॥ ओं ॥ १-१-७

अन्तः श्रूयमाणो विष्णुरेव । [5]कुतः? समुद्रान्तस्थत्वादि तद्धर्मव्य-पदेशादिति सूत्रार्थः ॥

अत्र "अन्तः प्रविष्टं कर्तारमेतं अन्तश्चन्द्रमसि मनसा चरन्तं सहैव सन्तं न विजानन्ति देवाः" इति श्रुतौ प्रतीयमानोऽन्तस्थो [6]न विष्णुः इन्द्रादिरेव स्यात् । "इन्द्रो राजा जगतो य ईशे" इति [7]इन्द्रश्रुत्यादेः । [8]न चेन्द्रादयः शब्दाः अन्यत्र नेतुं शक्यन्ते । तेषां देवेष्वेव रूढत्वात् ।

---

[1]योगे—ग. [2]"न चे" त्यारभ्य "युक्ता" इत्यन्तो भागः—क.ख.ग. नास्ति । [3]अनानन्दमयस्यापि क. [4]"अतः"—ग. नास्ति । [5]"कुतः"—क. नास्ति । [6]विष्ण्वन्यः—घ. विष्णोरन्यदिन्द्रादिः स्यात्—ग. [7]इन्द्रश्रुतेः—ग. [8]"न चेन्द्रादयः" इत्यारभ्य "दुर्बलत्वा" दित्यन्तो भागः—क.ख.ग. नास्ति ।

## अन्तरः

न चादृश्यत्वलिङ्गादन्तस्थो विष्णुरेवेति वाच्यं, श्रुत्यादिभ्यो लिङ्गमात्रस्य दुर्बलत्वादिति प्राप्ते—

अयमन्तस्थो विष्णुरेव। "समुद्रे अन्तः कवयो विचक्षते यस्याण्डकोशं शुष्ममाहुः" इत्यादिना प्रलयसमुद्रशायित्व [1]क्षीरसमुद्रशायित्व-ब्रह्माण्डवीर्यत्वादिविष्णुलिङ्गानां अन्तः [2]प्रविष्टनिष्ठतयोपदेशात्। [3]न चान्यप्रापकश्रुत्यादेः प्राबल्यात् लिङ्गबाधकत्वमिति वाच्यम्। [4]लिङ्गानां निरवकाशत्वात्। इन्द्रादिश्रुत्यादेः भगवति सावकाशत्वात्। दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह—**अन्तर इति**॥ अन्तस्थः इत्यर्थः। अन्तर-शब्दोपपदात् अस्तेः क्विपि निर्वचनत्वात् धातुसकारलोपे उपपदा[5]न्त्यस्य रुत्वे अन्तर इति रूपम्। [6]नामात्मकेऽपि [7]पादे इन्द्राद्यनेकनामसमन्वयसि-ध्यर्थं एकस्यान्तस्थत्वलिङ्गस्य समन्वयः कृतः इत्यदोषः॥ ७॥

---

[आकाशशब्दस्य भगवत्परत्वसमर्थनम्]

### ॥ ओं ॥ आकाशस्तल्लिङ्गात् ॥ ओं ॥ १–१–८

आकाशशब्दवाच्यो विष्णुरेव। कुतः? सर्वोत्तमत्वादि[8]ताल्लिङ्ग-श्रवणादिति सूत्रार्थः॥

---

[1] "क्षीरसमुद्रशायित्व" इति पदं—ख.ग. नास्ति। [2]प्रविष्टतयो—क. [3] "न चे" त्यादि "वाच्यं" इत्यन्तो भागः—क.ख.ग. नास्ति। [4]तेषां च लिङ्गानां—क. [5] न्त्यरुत्वे—ग. [6] नामानात्मकेऽपि—घ. [7] "पादे" इति पदं—ख. नास्ति। [8]लिङ्गश्रवणात्—क.

## खवत्

[1]अत्र "अस्य लोकस्य का गतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति। आकाशो [2]ह्येवैभ्यो [3]ज्यायान्। आकाशः परायणम्। स एषः परोवरीयानुद्गीथः स एषोऽनन्त इति" छन्दोग[4]श्रुत्युक्ताकाशो भूताकाश एव। आकाशशब्दस्य तत्र रूढत्वादिति प्राप्ते—

अयमाकाशो विष्णुरेव। "स एषः परोवरीयान् उद्गीथः स एषोऽनन्त" इति निरव[5]काशसर्वोत्तमत्वादिविष्णुलिङ्गस्य आकाशनिष्ठतया श्रवणात्। [6]आकाशश्रुतेश्च विष्णौ सावकाशत्वात्। लिङ्गस्याकाशे अनवकाशात्। दुर्बलेनापि निरवकाशेन [7]प्रबलस्यापि सावकाशस्य बाधोपपत्तेरिति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह—**खवदिति**॥ खमाकाशं वर्तयति [8]प्रवर्तयति प्रेरयतीति यावत्।

१"नभो ददाति [9]श्वसतां मार्गं गन्नियमाददः"। इत्युक्तेः। खशब्दे कर्मवाचके उपपदे वृतु वर्तने [10]इत्यस्माद्धातोः अन्तर्णीतण्यर्थात् कर्तरि [11]ड प्रत्यये धातुटिलोपे खवदिति रूपनिष्पत्तिः। [12]तस्मात् तच्छब्दमुख्यवाच्यः इत्यर्थः॥ ८॥

---

१ श्रीमद्भागवतवचनमिदम्।

1 "अत्र" इति—क.ग. नास्ति। 2 ह्येवेभ्यो—घ. 3 जायान्—घ. 4 श्रुत्या आकाशो—क. 5 काशपरोवरीयस्त्वादिविष्णु—घ. 6 "आकाशे" त्यारभ्य "उपपत्तेरिति" इत्यन्तो भागः—घ. नास्ति। तत्स्थाने "आकाशशब्दस्य हरौ महायोगविद्वद्रूढिसद्भावेन तत्रैव मुख्यत्वाच्चेति" इति—घ. वर्तते। 7 प्रबलस्य—ग. 8 प्रवर्तयतीति यावत्—ग. 9 हि सतां—क. खसतां—ख. च सतां—ग. 10 इति धातोः—घ. 11 अण् प्रत्यये—क. 12 तस्मात् शब्द—क.ख.

## प्रणेता

[प्राणशब्दस्य परमात्मवाचकत्वसमर्थनम्]

### ॥ ओं ॥ अत एव प्राणः ॥ ओं ॥ १-१-९

तैत्तिरीयश्रुत्युक्तप्राणशब्दवाच्यो विष्णुरेव। कुतः? अत एव [1]श्रीलक्ष्मीपतित्वादिलिङ्गश्रवणादेवेति सूत्रार्थः ॥

अत्र "तद्वै त्वं प्राणोऽभवः महान् भोगः प्रजापतेः भुजः [2]करिष्यमाणः यद्देवान् प्राणयो नवेति" तैत्तिरीयश्रुत्युक्तप्राणो मुख्यवायुः [3]एव भवेत्। प्राण शब्दस्य तस्मिन् [4]एव प्रसिद्धेः इति प्राप्ते—

अयं प्राणो विष्णुरेव। "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति निरवकाश[5]श्रीलक्ष्मीपतित्वादि[6]लिङ्गश्रवणात्। न च प्रसिद्धिविरोधः भगवति प्राणशब्दस्य महायोगविद्वद्रूढिभ्यां [7]अत्यन्तप्रसिद्धत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**प्रणेतेति** ॥ प्रकृष्टनियामक इत्यर्थः। आकाशः प्राणः इत्यनुक्त्वा खवत्प्रणेतेत्युक्त्या आकाशप्राणप्रेरकत्वेन तच्छब्दमुख्यार्थः स एवेति सूचयति। शब्दप्रवृत्तिनिमित्ताधिकरणापेक्षया तत्स्वामिनि तच्छब्दमुख्यार्थत्वस्य राजा जयीत्यादौ दर्शनात्।

तदुक्तमनुव्याख्याने :—

"स्वातन्त्र्य तद्गतत्वं च शब्दवृत्तेर्हि कारणम्।
स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा" ॥

---

[1] "श्री" शब्दः—ख. नास्ति। [2] करिष्यमाणं—क. [3] "एव" कारः—ग.घ. नास्ति। [4] "एव" कारः—ख.घ. नास्ति। [5] श्रीपतित्वलिङ्गश्रवणात्—क. [6] तल्लिङ्गश्रवणात्—ख.ग. [7] अत्यन्तप्रसिद्धादिति—क. अत्यन्तं प्रसिद्धत्वादिति—घ.

## खवत्प्रणेता

इति । [1]यद्वा आकाश[2]प्राणाधिकरणयोः सहैव तात्पर्यमाह--**खवत्प्रणेतेति** ॥ [3]अत्र प्रणेतेत्यनेन प्राणशब्दो ग्राह्यः । येन न्यायेन आकाशो विष्णुः तेनैव न्यायेन प्राणो विष्णुः इत्यर्थः । [4]अयं भावः । "अस्य लोकस्य कागतिरित्याकाश इति होवाचेति" श्रुत्युक्ताकाशः, स एष परोवरीयानुद्गीथः [5]स एषोऽनन्त इत्यादिनिरवकाश[6]परोवरीयस्त्वादिविष्णुलिङ्गात् यथा विष्णुस्तथा "तद्व त्वं प्राण" इत्युक्तप्राणो विष्णुरेव । "श्रीश्च ते लक्ष्मीश्च पत्न्या"विति निरवकाश[7]श्रीलक्ष्मीपतित्वादिविष्णु[8]लिङ्गादिति । [9]अस्मिन् व्याख्याने अत एव प्राण इति [10]सौत्रातिदेशो ज्ञापकः । खवदित्याकाश[11]दृष्टान्तीकरणेन [12]अर्थादाकाशाधिकरणस्यापि तात्पर्यं सूचितमिति [13]बोध्यम् ॥ ९ ॥

---

[ज्योतिश्शब्दस्य विष्णुपरत्वप्रतिपादनम्]

## ॥ ओं ॥ ज्योतिश्चरणाभिधानात् ॥ ओं ॥ १-१-१०

ज्योतिश्शब्दवाच्यो विष्णुरेव । कुतः ? "चरणाभिधानात्" । [14]कर्णादीनां विचरणाभिधानात् । साकल्येन कर्णाद्यज्ञेयत्वाख्यलिङ्गाभिधानादिति सूत्रार्थः ॥

---

[1] अथवा—ख.ग. केचित्—क. [2] प्राणाधिकरणस्यैव—क. [3] अत्रेति वाक्यं—घ. नास्ति । [4] "अयं भावः" इति — ग. नास्ति । [5] "स एषोऽनन्तः" इति ख.ग.घ. नास्ति । [6] "परोवरीयस्त्वादि" इति – घ. नास्ति । [7] श्रीपतित्वादि — क. [8] लिङ्गात् — घ. [9] "अस्मिन्न" त्यारभ्य "ज्ञापकः" इत्यन्तं—घ. नास्ति । तत्स्थाने "एवं च अस्मिन् व्याख्याने अत एव प्राणः इति सौत्रातिदेशोऽप्यनुकूलो भवतीति" इति वर्तते । [10] सौत्रनिर्देशः—क. [11] दृष्टान्तकरणेन — क. [12] "अर्थात्" इति—घ. नास्ति । [13] अवगन्तव्यम्—ख.ग. व्याचक्षत इति—क. [14] इदं वाक्यं - ग. नास्ति ।

## ज्योतिः

[1]अत्र "विमे कर्णा [2]पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत्" इति बह्वृचश्रुत्युक्तं [3]ज्योतिरग्निरेव भवेत् । एतत्सूक्तस्य अग्निसूक्तत्वादिति प्राप्ते—

विष्णुरेव [4]इदं ज्योतिः । कर्णादिविदूरत्वाख्यविष्णु[5]लिङ्गात् । न च प्रकरणविरोधः । लिङ्गेन प्रकरणबाधोपपत्तेः । इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**ज्योतिरिति** ॥ [6]ज्यायसी ऊतिः व्याप्तिः ऐश्वर्यं वा अस्येति ज्योतिश्शब्दवाच्यः इत्यर्थः ॥ १० ॥

---

[गायत्रीशब्दस्य भगवत्प

## ॥ ओं ॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् ॥ ओं ॥ १-१-११

"गायत्री वा इदं सर्वं" इत्युक्तगायत्रीशब्देन छन्दोविशेषाभिधानात् स एव गायत्री न विष्णुरिति चेन्न । किन्तु विष्णुरेव, कुतः "**तथाहि दर्शनं**" [7]दर्शनं-श्रुतिः, "गायति त्रायति चेति' गानत्राणकर्तृत्वलिङ्ग-बोधकश्रुतिः हि यतः अत इत्यर्थः ॥

---

1 "अत्र" इति—क नास्ति । 2 पतयो—ख. 3 ज्योतिरेव—क. 4 "इदं" इति—क. नास्ति । 5 लिङ्गत्वात्—क.ख. 6 इदं वाक्यं—ख.ग.घ. नास्ति । 7 "दर्शनं" इति पदं क.ग.घ. नास्ति ।

## इत्याद्यैः

अन्यत्र प्रसिद्धगायत्री[1]पदेन ब्रह्मणो निर्देशे किं प्रयोजनं इत्यत उक्तं "**तथा चेतोऽर्पणनिगदादिति**"। "तथा" गायत्रीशब्दार्थगानादिकर्तृत्वगुणविशिष्टतया [2]चेतस्यर्पणाय ध्यानार्थं निगदात्। "गायत्री वा इदं सर्वं" इति कथनादिति सूत्रार्थः ॥

अत्र "गायत्री वा इदं सर्वं" इति श्रुत्युक्ता गायत्री छन्दोविशेष एव। गायत्रीशब्दस्य तत्रैव रूढत्वादिति प्राप्ते—

विष्णुरेव गायत्रीशब्दवाच्यः। "गायति च त्रायति चेति" श्रुतौ गानत्राणकर्तृत्वलिङ्गश्रवणात्। तस्य च लिङ्गस्य निरवकाशत्वात्। गायत्रीश्रुतेश्च—

१ "सर्वछन्दोभिधो ह्येषः सर्वदेवाभिधो ह्यसौ।"

इति पौराणिकरूढ्या श्रुत्युक्तयोगेन च विष्णावेव मुख्यत्वेन सावकाशत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**इत्याद्यैरिति** ॥ आद्यपदेन। इति शब्दः [3]पूर्वप्रकृतपरामर्शकः। इति पूर्वोक्ताः आनन्दमयादिशब्दाः आद्याः येषां गायत्र्यादिशब्दानां ते तथोक्ताः। तैः सर्वैः शब्दैः विष्णुरेव [4]उच्यते इत्यर्थः ॥

[5]नन्वस्याधिकरणस्य २ स्वशब्देन तात्पर्यमनभिधाय आद्यशब्देनोक्तौ किं प्रयोजनमिति चेत्।

---

१ ब्रह्मसूत्रभाष्ये आचार्यैः वामनपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकभागः ॥

२ स्वशब्देन–गायत्रीशब्देनेत्यर्थः ॥

1 "पदेन" उत्यारभ्य "गायत्री" इत्यन्तो भागः—क.घ. नास्ति ॥ 2 चेतोर्पणाय—क. 3 पूर्वपरामर्शकः—ग.घ. 4 वाच्यः—क. 5 "नन्वस्य" इत्यारभ्य, "अवगन्तव्यं" इत्यन्तो भागः—क. ख.ग. नास्ति ॥

अत्र ब्रूमः । अत्र त्रीणि दर्शनानि । ज्योतिरित्यादिचतुस्सूत्री एकमेवाधिकरणम् । विषयवाक्यन्तु अग्निसूक्तस्थं "ज्योतिर्हृदय आहितं यदि"ति वाक्यमेवेत्येकं दर्शनम् । इदं च तत्त्वप्रदीपकृतोऽभिप्रेतम् ॥

द्वितीयदर्शनन्तु चतुस्सूत्र्याः एकाधिकरणत्वेऽपि विषयवाक्यं "अथ यदतः परो दिवो ज्योतिरिति" छन्दोगवाक्यमेवेति । इदं सन्न्यायरत्नावलीकाराभिप्रेतम् ।

तृतीयदर्शनन्तु — "ज्योतिश्चरणाभिधाना"दित्येकमधिकरणम् । "छन्द" इत्यादित्रीसूत्री तु अधिकरणान्तरमिति । इदं च टीकाकाराभिप्रेतम् ॥

मतत्रयमपि विवक्षाभेदेन भाष्यकाराभिप्रेतमेव । तथाच स्वशब्देन विना १ शब्दान्तरेणाभिधाने एवं मतभेदसूचनमेव प्रयोजनमित्यवधेयम् ॥

ज्योतिरधिकरणे मतत्रयसद्भावः विवक्षाभेदश्च तात्पर्यचन्द्रिकाभिनवचन्द्रिकयोः व्यक्त इति ताभ्यामेवावसेयम् । अस्माभिस्तु विस्तरभयात् ग्रन्थस्याणुत्वाच्च नोच्यत इत्यवगन्तव्यम् ॥

नन्वत्र पादे सर्वैः शब्दैः विष्णुरेवोच्यते इत्यनुपपन्नम् । आनन्दमयाद्यधिकरणैः कतिपयशब्दसमन्वयस्यैव सिद्धेः इति चेन्न ।

आनन्दमयोऽभ्यासादित्यादिसूत्रोपात्तानां आनन्दमयादिशब्दानां स्वसमानन्यायाक्रान्तानेकशब्दोपलक्षकत्वेन [1]एकैकस्मिन्नधिकरणे अनेक[2]शब्दराशिसमन्वयसिद्धेः । उक्तं चानुव्याख्याने—

"उपलक्षणत्वं शब्दानां आनन्दमयपूर्विणाम् ॥" इति ।

---

१ गायत्रीशब्देन विना आद्यशब्देनाभिधाने इत्यर्थः ।

[1] एकस्मिन्नधिकरणे—क. [2] शब्दसमन्वय—ग.

**प्रसिद्धैरन्यवस्तुषु ॥**
**उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः ॥**

---

ननु सर्वेषामेव शब्दानामत्र समन्वये [1]द्वितीयादिपादवैय्यर्थ्यमित्यत उक्तं—**अन्यवस्तुषु प्रसिद्धैरिति** ॥ लोकतः इति शेषः । नामात्मकैरिति च । [2]लोकतोऽन्यत्र प्रसिद्धैः नामात्मकैः शब्दैरित्यर्थः ॥

ननु यद्येतैः शब्दैः विष्णुरेवोच्येत तर्हि इन्द्राद्यसिद्धिप्रसङ्गः । लोकप्रसिद्धिविरोधश्चेत्यत उक्तं—[3]**एक इति** । १"एके मुख्यान्यकेवलाः" इति वचनात् परममुख्य इति यावत् । तथाच लोकप्रसिद्धिबलात् इन्द्रादिशब्दानां इन्द्रादौ मुख्यवृत्तिमविहायैव [4]विष्णोः परममुख्यया वृत्त्या तच्छब्दवाच्यत्वाङ्गीकारात् नोक्तविरोध इति ।

ननु सर्वशब्दानां भगवद्वाचकत्वे को हेतुः इत्यत उक्तं—**सर्वगुणत्वतः इति** ॥ सर्वे गुणाः यस्य स तथा, तस्य भावस्तत्त्वम् । तस्मादित्यर्थः । तत्तच्छब्दप्रवृत्ति[5]निमित्तभूतगुणानां ईश्वरे सत्त्वात् तत्तच्छब्दवाच्यत्वं युक्तमिति भावः ॥ ११ ॥

———

[ऐतरेयारण्यकोक्तप्राणशब्दस्य भगवत्परत्वप्रतिपादनम् ]

**॥ ओं ॥ प्राणस्तथाऽनुगमात् ॥ ओं ॥ १-१-१२**

तथा तैत्तिरीयश्रुताविव ऐतरेयश्रुत्युक्तोऽपि प्राणो विष्णुरेव । देवतोपदेश्यत्वादिलिङ्गानां ब्रह्मशब्दस्य च [6]अस्मिन् प्राणे अनुगमादिति सूत्रार्थः ॥

---

१ नामलिङ्गानुशासने तृतीयकाण्डे नानार्थवर्गे विद्यमानोऽयं श्लोकार्धः ॥

[1] द्वितीयपाद—क. [2] इदं वाक्यं—घ. नास्ति । [3] एक इति । मुख्य इत्यर्थः —ख.ग.घ. [4] विष्णौ—ख. [5] निमित्तगुणानां—ख. [6]"अस्मिन् प्राणे" इति—ख.ग. नास्ति ।

अत्र "चक्षुः श्रोत्रं मनो वाक् प्राण" इत्यैतरेय[1]श्रुत्युक्तप्राणो न विष्णुः किन्तु वायुरेव । इन्द्रियगणे गणितत्वादिति प्राप्ते——

अयं प्राणो विष्णुरेव । "तं देवाः प्राणयन्त तं भूतिरिति देवा उपासाञ्चक्रिरे । सर्वे वेदाः सर्वे घोषाः [2]एकैव व्याहृति"रित्युक्तदेवतोपदेश्यत्वभूतित्वेन सर्वदेवोपास्यत्वसर्ववेदोक्तत्वादिविष्णुलिङ्गानां "[3]ब्रह्मेमं पुरुषं उदरं ब्रह्मे"त्याद्युक्तब्रह्मशब्दस्य चास्मिन्प्राणे श्रवणादिति सिद्धान्तः कृतः ॥

एतदधिकरणतात्पर्यन्तु पृथङ्नोक्तं [4]अस्याधिकरणस्य "अत एव प्राण" इत्यनेन समन्वितशब्दसमन्वयार्थत्वात् ॥

ननु प्रत्यधिकरणं तात्पर्यकथनार्थं प्रवृत्तेन भगवता [5]भाष्यकारेण अस्याधिकरणस्य पृथक् तात्पर्यं कुतो नोक्तं इति चेत्, सत्यम् । अस्त्यत्राभिप्रायविशेषः । अस्य ग्रन्थस्याणुत्वेन स्वातन्त्र्येण [6]शब्दसमन्वयार्थं प्रवृत्तस्यैवाधिकरणस्य तात्पर्यमुच्यते । न तु एकस्मिन्नधिकरणे समन्वितस्य शब्दस्य स्थलान्तरगत[7]स्याभ्यधिकशङ्कया पुनः समन्वयार्थं प्रवृत्तस्याधिकरणान्तरस्य तात्पर्यमुच्यत इति । एतच्चोत्तरत्रापि तत्र तत्र प्रदर्शयिष्यामः ॥ १२ ॥

[8]मद्वाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

---

[1] श्रुत्युक्तो न विष्णुः—ग. [2] एकैक—ख. [3] "ब्रह्मेमं" इत्यारभ्य "शब्दस्य च" इत्यन्तो भागः—ख.ग.घ. नास्ति । [4] एतदधि—ख. [5] "भाष्यकारेणे"ति—ख.ग.घ. नास्ति । [6] "शब्दसमन्व" इत्यारभ्य "समन्वितस्य" इत्यन्तो भागः—क. नास्ति । [7] स्याभ्यधिकशङ्कायाः—ख.ग. स्याभ्यधिकाशङ्कया—घ. [8] "मद्वाचार्ये"ति श्लोकः—क.ख.ग. नास्ति ।

[1]इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्म-
सूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य
निजशिष्येण शेषेण विरचितायां तात्पर्य-
प्रकाशिकायां प्रथमाध्यायस्य
प्रथमः पादः ॥



[1] "इति श्रीमदणुभाष्यटीकायां प्रथमाध्यायस्य प्रथमःपादः"—क.

## अथ द्वितीयः पादः

श्रीगुरुभ्यो नमः

### सर्वगः

---

हरिः ओम्

[1]चतुर्भुजं शङ्खचक्रविद्यापुस्तकधारिणम् ।
मुक्ताकल्पज्ञानदुहं हयग्रीवमहं भजे ॥

लोकतोऽन्यत्र प्रसिद्धानां लिङ्गात्मकानां शब्दानां [2]विष्णौ समन्वयं प्रदर्शयत्यस्मिन् पादे [3]भगवानाचार्यवर्यः ।

[आपाततः आदित्यस्थतया प्रतीयमानानां सर्वगतत्वादिलिङ्गानां ब्रह्मस्थत्वसमर्थनम् ]

**॥ ओं ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ ओं ॥ १–२–१**

सर्वत्र "एतमस्यां एतं दिवी"त्यादिना पृथिव्यादिषु उच्यमानो विष्णुरेव । कुतः ? प्रसिद्धस्य—विष्णावेव श्रुत्यादौ प्रसिद्धस्य ब्रह्मशब्दस्य, "एतमेव ब्रह्मेत्याचक्षते" इति सर्वगते उपदेशादिति सूत्रार्थः ॥

अत्र "एतं ह्येव बह्वृचाः महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगाः एतमस्यां, एतं दिवि, एतं वायौ, एतमाकाशे, एतमप्सु [4]एतमोषधीषु, एतं वनस्पतिषु, एतं चन्द्रमसि, एतं नक्षत्रेषु, एतं सर्वेषु भूतेषु, एतमेव ब्रह्मेत्याचक्षते !" इत्यैतरेयश्रुत्युक्तं सर्वगतत्वमादित्यस्यैव भवेत् । "तस्यैतस्यासावादि[5]त्यो रस [6]एतमेव ब्रह्मेत्याचक्षत" इति, "यश्चासावादित्यो

---

[1] अयं श्लोकः—क-ख.ग; नास्ति । [2] विष्णौ प्रवृत्ति—ख. [3] "भगवानाचार्यवर्यः" इति—ख. ग. घ. नास्ति । [4] श्वेतमोषधीषु—ग. [5] "त्यो रस" इत्यारस्य "आदित्यश्रुतेः" इत्यन्तं—घ. नास्ति । [6] "एतमेव ब्रह्मेत्याचक्षते" इति—ख.ग.नास्ति ।

रसस्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवती''त्यादि बह्वादित्यश्रुतेः । [1]एतमस्यामिति क्षित्यादिषूक्त्वा आदित्ये अनुक्तिलिङ्गाच्चेति प्राप्ते—

विष्णुरेव सर्वगतः । ''एतमेव ब्रह्मेत्याचक्षत'' इति सर्वगते ब्रह्मशब्दश्रवणात् । ब्रह्मशब्दस्य मुख्यतः श्रुत्यादौ तस्मिन्नेव प्रसिद्धेः । [2]न च बह्वादित्यश्रुतिविरोधः । १''सर्वनामाभिधेयश्च सर्ववेदोदितश्च स'' इति स्मृत्या तस्यैव आदित्य[3]नामवत्त्वोक्तेः । [4]न च आदित्ये अनुक्तत्वलिङ्गविरोधः । ''यश्चासावादित्ये'' इति पूर्ववाक्ये आदित्यस्थत्वस्योक्तत्वेनानुक्तत्वस्यासिद्धत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सर्वग इति** ॥ [5]सर्वगत इत्यर्थः । विष्णुरेवेत्यनुवर्तते ॥ १ ॥

---

[सर्वात्तृत्वं परात्मन एवेति समर्थनम् ]

**॥ ओं ॥ अत्ता चराचरग्रहणात् ॥ ओं ॥ १-२-२**

अत्ता सर्वसंहर्ता विष्णुरेव । कुतः? ''सर्वं वा अत्तीति'' चराचरस्य सर्वस्याद्यतया ग्रहणादिति सूत्रार्थः ॥

अत्र ''सः यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्व''मिति श्रुत्युक्तात्तृत्वं [6]देवमातुरेव भवेत् । ''तददिते''रिति अदितिश्रुतेः । न च 'स' इति पुल्लिङ्गानुपपत्तिः । पुंशक्तियुक्तत्वेन ''कूटस्थोऽक्षर उच्यत'' इत्यादिवदुपपत्तेरिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये आचार्यैः स्कान्दपुराणवाक्यत्वेन उदाहृतोऽयं श्लोकभागः ॥

[1] ''एतमस्यां'' इत्यारभ्य ''लिङ्गाच्चेति'' इत्यन्तो भागः—क.ख.ग. नास्ति । [2] ''न चे'' त्यारभ्य, ''नामवत्वोक्तः'' इत्यन्तो भागः—घ. नास्ति । [3] नामोक्तेः—क. नामत्वोक्तेः—ख. [4] ''न चे'' त्यारभ्य, ''सिद्धत्वा''दित्यन्तो भागः—क.ख ग. नास्ति । [5] इदं वाक्यं—ग. नास्ति । [6] देवानां मातु—ग.

विष्णो[1]रेव सर्वात्तृत्वम् । "सर्वं वा अत्ती"ति चराचरस्य अद्यतया ग्रहणात् । न च अदितिश्रुतिविरोधः । "यो देवानां नामधे"ति श्रुत्या अदितिश्रुतेः विष्णौ सावकाशत्वात् । न च विष्णोः सर्वात्तृत्वे प्रमाणाभावः ।

१ "स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।
वासुदेवः परः पुंसां इतरेऽल्पस्य वा न वा" ॥

इति वचनादिति [2]सिद्धान्तः कृतः ॥ २ ॥

---

[श्रुत्युक्तकर्मफलभोक्तृत्वं आत्मान्तरात्मरूपद्वयेन परात्मन एवेति प्रतिपादनम् ]

**॥ ओं ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ओं ॥ १–२–३**

श्रुत्युक्तौ ऋतं पिबन्तौ आत्मानावेव=आत्मान्तरात्माख्यरूपविशेषावेव । कुतः ? "गुहां प्रविष्टौ" । हेतुगर्भमिदम् । गुहाप्रविष्टत्व[3]लिङ्गश्रवणात् । हि शब्देन तस्य लिङ्गस्य "यो वेद निहितं गुहायां" इत्यादौ प्रसिद्धिमाह । रूपद्वयस्य गुहास्थत्वं कुतः इत्यत उक्तं [4]**तद्दर्शनादिति** । तस्य गुहास्थत्वस्य "घर्मा समन्तात्त्रिवृतं व्यापतुः" इत्यादिश्रुत्युक्तेरिति सूत्रार्थः ॥

[5]अत्र "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे"

---

१ ब्रह्मसूत्राभाष्ये आचार्यैः स्कान्दपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकः ॥

[1] रेवात्तृत्वम्—क. [2] "सिद्धान्तः कृतः" इत्यस्यानन्तरं, "तस्य तात्पर्यमाह—अत्तेति । सर्वभक्षक इत्यर्थः । अद भक्षण इति धातुव्याख्यानात् ॥ २ ॥" इति—क.ख.ग. कोशेषु विद्यते [3] लिङ्गात्—क. [4] तत् दर्शनादिति—ख. तददर्शनादिति—ग. [5] "अत्र" इति—क. घ. नास्ति ।

अत्ता

इति वाक्योक्तकर्मफलभोक्तारौ जीवपरावेव । न त्वेकः परमेश्वरः । पिबन्ताविति द्विवचनश्रुतेः । एकस्मिन् द्विवचनायोगादिति प्राप्ते—

अस्मिन् वाक्ये कर्मफलभोक्तृत्वेन प्रतीयमानो विष्णुरेव । गुहाप्रविष्टत्वलिङ्गात् । "यो वेद निहितं गुहायां" इति गुहानिहितत्वस्य [1]तस्मिन्नेव प्रसिद्धेः । न च द्विवचनश्रुतिविरोधः । रूपद्वयाभिप्रायेण सावकाशत्वात् । न चात्र प्रमाणाभावः ।

१ "आत्मान्तरात्मेति हरिः एक एव द्विधा स्थितः ।
निविष्टो हृदये नित्यं रसं पिबति कर्मजम्" ॥

इति स्मृतेः इति सिद्धान्तः कृतः ॥

[2]तदेतदधिकरणद्वयतात्पर्यमाह—अत्तेति ॥

भक्षक इत्यर्थः । अद भक्षणे इति धातुव्याख्यानात् । सर्वस्येति शेषः । द्वितीयपक्षे अत्तेत्यस्य सः सर्वसुकर्मफलभोक्तेत्यर्थः ॥ ३ ॥

---

[चक्षुरन्तस्थो नाग्निः अपि त्वात्मैवेति समर्थनम्]

**॥ ओं ॥ अन्तर उपपत्तेः ॥ ओं ॥ १-२-४**

अन्तरः चक्षुरन्तस्थो विष्णुरेव । अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेवोपपत्तेः इति सूत्रार्थः ॥

अत्र "य एषोऽन्तरक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच । एतद[3]मृतमभयमेतद्ब्रह्मे"ति वाक्योक्तोऽग्निरेवाक्षिस्थो भवेत् ।

---

१ ब्रह्मसूत्रभाष्ये आचार्यैः बृहत्संहितावाक्यत्वेनोदाहृतोऽयं श्लोकः ॥

[1] अस्मिन्नेव—क. [2] तस्य तात्पर्यमाह—अत्तेति । सर्वकर्मफलभोक्तेत्यर्थः । ॥ ३ ॥—क. [3] मृतमेतदभयं इति—ख.घ.

"[1]अथ ह्याग्नय[2]स्समूदिरे गार्हपत्योऽनुशशासे" त्यादिबह्वग्निश्रुतिसद्भावादिति प्राप्ते—

विष्णुरेवाक्षिस्थः । "एतद[3]मृतमभयमि"ति अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेवोपपत्तेः । न च अग्निश्रुतिविरोधः । उपक्रमे "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे"त्युक्तेः । अस्य प्रकरणस्य वैष्णवत्वेन श्रुतेः तद्विषयत्वात् इति [4]सिद्धान्तः कृतः ॥ ४ ॥

———

[विष्णोः सर्वान्तर्यामितासमर्थनम् ]

॥ ओं ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ ओं ॥ १-२-५

अधिदैवादिपदेन तत्तत्प्रकरणं लक्ष्यते । अन्तर्यामी विष्णुरेव । कुतः ? अधिदैवाधिभूतादिप्रकरणेषु पृथिव्याद्यविदितत्वादितद्धर्मव्यपदेशादिति सूत्रार्थः ॥

अत्र "यः पृथिव्यां तिष्ठन् [5]पृथिव्याः अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिव्या अन्तरो यमयति"इति श्रुत्युक्तान्तर्यामित्वं प्रकृतेरेव भवेत् । "यस्य पृथिवी शरीरं" इत्यादिनाऽन्तर्यामिणः पृथिव्यादि-शरीरत्वश्रवणात् । [6]तस्य च [7]प्रकृतावुपपत्तेः । शरीरशब्दस्य स्वरूपेऽपि प्रयोगदर्शनात् । प्रकृतेश्च पृथिव्यादितत्त्वात्मकत्वादिति प्राप्ते—

---

[1] अथाग्नयः – क.ख.घ. [2] स्समुदिरे—ख. [3] मृतमेतदभयं—ख.घ. [4] "सिद्धान्तः कृतः" इत्यनन्तरं "तस्य तात्पर्यमाह—नियन्तेति । अक्षिस्थत्वेन नियामक इत्यर्थः ॥ ४ ॥"—क. [5] पृथिव्यामन्तरो—क.ख. [6] "तस्ये" त्यारभ्य, "दर्शनात्" इत्यन्तं—घ. नास्ति । तत्स्थाने "शरीरशब्दस्य स्वरूपे प्रयोगदर्शनेन तस्य तत्रोपपत्तेः" इति वर्तते । [7] प्रकृतावेवोपपत्तेः—ख.ग.

## नियन्ता च

विष्णुरेवान्तर्यामी । "यं पृथिवी न वेद" इत्यादिना तस्य पृथिव्यादिदेवताऽविदि[1]तत्वान्तरत्वाख्यतद्धर्मव्यपदेशात् । न च पृथिव्यादिशरीरत्वानुपपत्तिः ।

१ "शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् ।
रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत्"

इति वचनादिति [2]सिद्धान्तः कृतः ॥

तदेतदधिकरणद्वयतात्पर्यमाह—**नियन्तेति** ॥ अक्षिस्थत्वेन नियामक इत्यर्थः । द्वितीयपक्षे सर्वान्तर्यामीत्यर्थः ॥ ५ ॥

---

[ब्रह्मणः अदृश्यत्वाद्यभावाख्यधर्मसमर्थनम् ]

## ॥ ओं ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ ओं ॥ १-२-६

अदृश्यत्वादिगुणको विष्णुरेव । कुतः ? परविद्याविषयत्वादितद्धर्मोक्तेः इति सूत्रार्थः ॥

अत्र "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं [3]नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । तथा सतः पुरुषात् केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्" ॥ इत्याथर्वणश्रुत्युक्तादृश्यत्वादिगुणको न विष्णुः । किन्तु जडप्र[4]कृतिः । "अक्षरात्सम्भवतीह

---

१ ब्रह्मसूत्रभाष्ये आचार्यैः उदाहृतं प्रमाणम् ॥ १-२-५

[1] त्वान्तराख्य—ग. [2] "सिद्धान्तः कृतः" इत्यनन्तरं तस्य तात्पर्यमाह —नियन्तेति ॥ सर्वान्तर्यामीत्यर्थः" ॥ इति—क. [3] "नित्यं" इत्यारभ्य "विश्व" इत्यन्तं—घ. नास्ति । [4] कृतिः किं गुणकेऽक्षरशब्दस्य श्रवणात्—क.

दृश्यत्वाद्युज्झितस्सदा ॥

विश्वं'' इति अदृश्यत्वादिगुणके अक्षरशब्दस्य श्रवणात् । [1]तस्य च विष्णाववकाशशून्यत्वात् । यतोऽस्मादप्यक्षरात् उत्तरवाक्ये ''अक्षरात्परतः परः'' इति परः प्रतीयते । न हि विष्णोरपि परोऽस्ति । अतो न विष्णुरदृश्यत्वादिगुणकः इति प्राप्ते—

अदृश्यत्वादिगुणको विष्णुरेव । ''अथ परा यया तदक्षरमधिगम्यते'' इत्यदृश्यत्वादिगुणकस्य परविद्याविषयत्वजगज्जन्मादिकर्तृत्वाद्यसाधारणधर्मोक्तेः । न चा''क्षरात्परतः परः'' इत्युत्तरवाक्यविरोधः । अधमाक्षरादिभेदेन अक्षरशब्दवाच्यानां त्रित्वात् । [2]एतदक्षरशब्दवाच्यस्यैव विष्णोः, परतो मध्यमाक्षरात् परत्वसम्भवेनाविरोधात् । न चात्र प्रमाणाभावः ।

''अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणं अक्षरत्रयमीरितम्'' ॥ इति

स्कान्दोक्तेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह —**दृश्यत्वाद्युज्झितः सदेति** ॥

अत्र दृश्यत्वाद्युज्झितत्वं नाम साकल्येन चक्षुराद्यगोचरत्वम् । तच्चकदाचिद्धीयत इति भावेनोक्तं ''दृश्यत्वाद्युज्झितः सदेति'' । सदेति अत्ता नियन्ता चेत्यत्रापि अन्वेति । तथाच ईश्वरक्रियापि नित्येत्युक्तं भवति । [3]विवृतं चैतदनुव्याख्याने क्रियानित्यत्वम् । अत्र दृश्यभिन्नत्व-

---

[1] ''तस्ये'' त्यारभ्य ''प्रतीयते'' इत्यन्तं—घ. नास्ति । तत्स्थाने ''न चाक्षरशब्दः विष्णावपि सावकाशः इति वाच्यम् । उत्तरवाक्ये'' ''अक्षरात् परतः परः'' इत्यभिधानात् इति वर्तते ॥ [2] ''एतदि''त्यारभ्य ''विष्णो''रित्यन्तं—घ. नास्ति ॥ [3] ''विवृतं'' इत्यारभ्य, ''व्याख्येयम्'' इत्यन्तो भागः—क.ख.ग. नास्ति ॥

मेव अदृश्यत्वमिति सुधाकाराणां पक्षः । अत्र दृश्यत्वाद्युज्झित इति दृश्यत्वाद्यत्यन्ताभाव एव प्रतीयते । तथापि दृश्यान्योन्याभावे सिद्धे दृश्यत्वात्यन्ताभावः सिद्ध एव । तयोः समनियतत्वात् । अतः तात्पर्यपरतया इदं वाक्यं व्याख्येयम् ।। ६ ।।

---

[विष्णोः वैश्वानरशब्दवाच्यत्वसमर्थनम् ]

॥ ओं ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ ओं ॥ १-२-७

वैश्वानरशब्दवाच्यो विष्णुरेव । [1]कुतः? साधारणशब्दस्य=अग्नाविष्णोः साधारणस्यापि वैश्वानरशब्दस्य, विशेषात्=विष्ण्वेकनिष्ठात्मशब्देन विशेषितत्वादिति सूत्रार्थः ॥

अत्र १ "यस्त्वेतमेवं प्रादेशमात्रं अभिविमानमात्मानं वैश्वानरमुपास्ते" इति श्रुत्युक्तवैश्वानरो न विष्णु; साधकशून्यत्वात् । [2]किन्तु [3]अग्निरेव । कुतः? वैश्वानरश्रुतेः । न च वाच्यमभिविमानपदोक्त [4]सर्वगतत्वलिङ्गमेव साधकमिति । लिङ्गस्यान्यत्रप्रसिद्धवैश्वानरश्रुतेः दुर्बलत्वात् । न च लिङ्गस्य निरवकाशत्वेन प्राबल्याच्छ्रुतिबाधकत्वमिति वाच्यम् । श्रुतेरपि प्रसिद्धितः निरवकाशत्वात् । एवञ्चोभयोरपि निरवकाशत्वेन वैश्वानरशब्दस्य अग्नाविष्णोस्साधारण्यमेव स्यात् । न तु लिङ्गेन विष्णुपरतानिश्चयः इति प्राप्ते—

---

१ छान्दोग्योपनिषत् । ५-१८-१

1 "कुतः साधारणशब्दस्य" इति—ख.ग. नास्ति । 2 "किन्तु" इत्यारभ्य "श्रुतेः" इत्यन्तं—घ. नास्ति ॥ 3 अग्निः—ख.ग. 4 सर्वगतत्वलिङ्गात् वैश्वानरो विष्णुरिति । लिङ्गस्य श्रुतेः दुर्बलत्वात्—क.ख.ग.

**विश्वजीवान्तरत्वाद्यैर्लिङ्गैस्सर्वैर्युतः स हि ॥**

अयं वैश्वानरो विष्णुरिति [1]निश्चयो युज्यते । "आत्मानं वैश्वानरं" इत्यात्मशब्दात् । न चोक्तरीत्या साधारणवैश्वानरश्रुतिसद्भावात् अनिर्णय इति वाच्यं साधारणस्यापि वैश्वानरशब्दस्य—

१[जीवाः ब्रह्मादयः प्रोक्ताः आत्मैकस्तु जनार्दनः ।
इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते ॥]

इत्यादौ विष्णावेव प्रसिद्धान्यत्रानवकाशात्मशब्दसामानाधिकरण्येन विष्णुपरत्वसम्भवात् ।

२"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।" इति स्मृतिसमाख्यानाच्चेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विश्वजीवेति** ॥

[2]अत्र वैश्वानर इति वक्तव्ये विश्वजीवान्तरत्वेति लिङ्गोक्तिः तस्य

---

१ ब्रह्मसूत्रभाष्ये आचार्यैः पाद्मपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकः । अयं च श्लोकः प्रकृतोपयोगीति विचार्य मयात्र लिखितम् ।

क. मातृकायान्तु "ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते" इति श्लोकार्धः उदाहृतः । अयं च प्रकृतानुपयोगीति भाति ॥

२ भगवद्गीता—अ. १५. श्लो. १४

[1] "निश्चयो" इति—ग. नास्ति ॥ [2] अत्रेत्यारभ्य आपादसमाप्तिग्रन्थस्थाने—"यद्यप्यस्मिन्नधिकरणे वैश्वानरनाम्न एव समन्वयः इति लिङ्गैरिति तात्पर्यकथनमयुक्तम् । तथाप्येकस्य वैश्वानरनाम्नः साक्षात्समन्वयेन अर्थाद्वैश्वानरनामसमानाधिकरणपाचकत्वादिबहुलिङ्गानां समन्वयस्य सिद्धेः एवमुक्तमिति बोध्यम् । वैश्वानरनामप्रवृत्तिनिमित्तस्य विश्वजीवान्तरत्वस्य अन्वयवृत्तिलभ्यत्वेन लिङ्गत्वमस्तीत्यभिप्रेत्य विश्वजीवान्तरत्वाद्यैरित्युक्तम् । विश्वनरसम्बन्धित्वमेव वैश्वानरत्वम् । तच्च विश्वजीवान्तरत्वमित्यनतिभिन्नोऽर्थः । तत्तु सूत्रोपात्तलिङ्गस्य स्वसमानन्यायाक्रान्तलिङ्गोपलक्षकत्वाभिप्रायेण सर्वैरित्युक्तम् । स इत्यनेन विष्णुपरामर्शकेन विष्णुरेवेत्यस्य सर्वानुवृत्तिं सूचयति । हिशब्देनोक्तार्थे प्रमाणमाह ॥

इति प्रथमाध्यायस्य द्वितीयपादः समाप्तः ॥"—इति—क. मातृकायां वर्तते ॥

यौगिकत्वाभिप्राया । विश्वनरसम्बन्धित्वात् वैश्वानरः । विश्वनरसम्बन्धित्वं च तत्तदन्तस्स्थत्वमेवेति । आद्यशब्देन १"अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते । [1]यदिदमद्यते" इत्यादिनोक्तपाचकत्वाद्यनेकलिङ्ग-सङ्ग्रहः । तत्तत्सूत्रोपात्तलिङ्गस्य स्वसमानन्यायाक्रान्तलिङ्गान्तरोपलक्ष-कत्वाभिप्रायेण सर्वैरित्युक्तम् ।

स इत्यनेन विष्णुपरामर्शकेन विष्णुरेवेत्यस्य सर्व[2]त्रानुवृत्तिं सूचयति । हिशब्देनोक्तार्थे प्रमाणप्रसिद्धिमाह । लिङ्गात्मकेऽपि पादे वाचकत्वाद्यनेक-लिङ्गसमन्वयसिद्ध्यर्थं एकस्य वैश्वानरनाम्नः समन्वयः कृतः । इति नानुपपत्तिरित्यवधेयम् ॥

ननु "विश्वजीवान्तरत्वाद्यैः लिङ्गैः" रित्युक्तं तदयुक्तम् । वैश्वानर-शब्दस्य नामात्मकत्वेन लिङ्गात्मकत्वाभावादिति चेन्न । वैश्वानरशब्दस्य यौगिकत्वप्रदर्शनार्थं अवयवार्थ[3]कथने तात्पर्यात् । अन्यथा वैश्वानरत्वाद्यै-रित्यवक्ष्यत् ॥ न च लिङ्गैरित्यस्यानुपपत्तिः । वैश्वानरशब्दसमन्वयेन अन्तः प्रतिष्ठानादिति सूत्रोक्तानां पाचकत्वेन अन्तःप्रतिष्ठानादिरूपलिङ्गानां यः समन्वयः सिद्धः तत्प्रदर्शनपरत्वात् । एवमेवोक्तं भावबोधेऽपीति द्रष्टव्यम् ॥ ७ ॥

[4]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

१ बृहदारण्यकोपनिषत्सप्तमाध्यायस्थायं मन्त्रः ॥

[1] यद्यदिदमद्यते—ग [2] त्रानुमतिं—ग. [3] कल्पने—ग. [4] "मदाचार्येत्ययं श्लोकः—क.ख.ग. नास्ति ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्म-
सूत्राणुभाष्यस्य टीकायां श्री[1]छलारी [2]नरसिंहा-
चार्याणां [3]निजशिष्येण [4]शेषेण विरचितायां
तात्पर्यप्रकाशिकायां प्रथमाध्यायस्य
द्वितीयः पादः ॥



[1] छलारि—ख·घ.　[2] नृसिंह—ख.गं.　[3] शिष्येण—ख गं.　[4] "शेषेण" इति—ग. नास्ति ॥

# अथ प्रथमाध्यायस्य तृतीयः पादः

श्रीगुरुभ्यो नमः

## सर्वाश्रयः

हरिः ओम्

[1]सत्याभिनवतीर्थेन्दुश्रीपादैः सुप्रतिष्ठितम् ।
प्रसन्नवदनं रामं भाग्यदेवीपतिं भजे ॥

यथाकथञ्चित् उभयत्र प्रसिद्धानां नामलिङ्गात्मकानां शब्दानां विष्णौ समन्वयं प्रदर्शयति अस्मिन्पादे ॥

[पृथिव्याद्याधारता विष्णोरेव नान्येषां इति समर्थनम् ]

**॥ ओं ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ ओं ॥ १-३-१**

द्युभ्वाद्यायतनं विष्णुरेव । कुतः? स्वशब्दपर्यायात्मशब्दात् । इति सूत्रार्थः ॥

अत्र "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः, तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ" इत्याथर्वणश्रुत्युक्तं द्युभ्वाद्यायतनत्वं रुद्रस्यैव भवेत् । द्युभ्वाद्यायतनत्वस्य १"रुद्रो वाव लोकाधारः" इति तस्मिन्नुक्तत्वादिति प्राप्ते—

[2]विष्णोरेव द्युभ्वाद्यायतनत्वम् । "तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ" इति द्युभ्वाद्यायतने [3]आत्मशब्दश्रवणात् ॥

---

१ तत्त्वप्रकाशिकाचन्द्रिकयोः प्रमाणत्वेनोदाहृतमिदं वाक्यम् । न्यायविवरणे तु आचार्यैः "रुद्रो वै लोकायतनं" इति उदाहृतम् ॥

[1] अयं श्लोकः—क·ख.घ. नास्ति । [2] विष्णुरेवेदं द्युभ्वाद्यायतनम्—ख.घ. [3] आत्मशब्दात्—घ.

१ "आत्मब्रह्मादयः शब्दाः तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैः [1]नैवाप्ता गुणपूर्णता" ॥

इति [2]स्मृतेः । न च रुद्रप्रापकश्रुतिविरोधः ।

२ "रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दनः" ॥

इत्यादिप्रमाणबलेन महायोगविद्वद्रूढिभ्यां रुद्रादि[3]श्रुतेः सावकाशत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **सर्वाश्रय इति** ॥ सर्वस्य द्युभ्वादेः आश्रय इत्यर्थः ॥ १ ॥

---

[श्रुत्युक्तभूमा विष्णुरेव न वायुरिति साधनम्]

## ॥ ओं ॥ भूमा सम्प्रसादादध्युपदेशात् ॥ ओं ॥ १-३-२

भूमा=[4]भूमशब्दवाच्यो विष्णुरेव । कुतः? सम्यक् प्रसीदत्यनेनेति सम्प्रसादः=पूर्णसुखं, "तत्सुखं" इति पूर्णसुखत्वाभिधानात् । अध्युपदेशात्=अधिकत्वेन [5]नामादीनां सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशादिति सूत्रार्थः ॥

अत्र "यो वै भूमा तत्सुखमि"ति छन्दोगश्रुत्युक्तो [6]भूमा मुख्यप्राणो भवेत् । "प्राणो वा आशाया भूयान्" इति उपक्रमे प्राणशब्दश्रवणादिति प्राप्ते—

विष्णुरेवायं भूमा । "यो वै भूमा तत्सुखमि"ति भूम्नः पूर्णसुखरूप-

---

१ ब्रह्मसूत्रभाष्ये आचार्यैः ब्रह्मवैवर्तपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकः ॥

२ ब्रह्मसूत्रभाष्ये आचार्यैः ब्रह्माण्डपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकभागः ।

[1] नावाप्ता—घ. [2] उक्तेः—ग. [3] स्मृतेः—क. [4] "भूमशब्दवाच्यो" इति—ख.ग. नास्ति । [5] रमादीनां—ख. [6] भूमाख्यप्राणः—क.

## पूर्णगुणः

त्वाभिधानात् । तस्य चान्यत्र निरवकाशत्वात् । १"अव्यक्तादितृणान्तास्तु [1]विपूलुडानन्दभागिनः" । इति वचनात् । [2]सर्वेषामुपरि उपदेशाच्च । न चोपक्रमविरोधः । प्राणशब्देनापि विष्णोरेवोक्तत्वादिति सिद्धान्तः कृतः ।

तस्य तात्पर्यमाह—**पूर्णगुण इति** ॥

अत्र भूमेति वक्तव्ये पूर्णगुण इति वचनन्तु गुणपूर्णत्वं तच्छब्दप्रवृत्तिनिमित्तमिति ज्ञापनार्थम् । "भू च बहोःबहुः पूर्णतायां" [3]इति धातुव्याख्यानात् । पूर्णत्वस्यैव मुख्यतो [4]धात्वर्थत्वेन योग्यतया गुणानां सम्बन्धे गुणपूर्णत्वं भूमशब्दार्थो भवति । गुणपूर्ण इत्यनुक्त्वा पूर्णगुण इत्युक्तौ प्रत्येकं गुणानां पूर्णत्वसूचनं प्रयोजनम् । पूर्णाः प्रत्येकं निरवधिकाः गुणाः यस्येति बहुव्रीहिः । [5]तस्माद्विष्णुरेव भूमेत्यर्थः ॥ २ ॥

---

[अक्षरशब्दवाच्यः परात्मैव न लक्ष्मीः इति समर्थनम् ]

**॥ ओं ॥ अक्षरमम्बरान्तधृतेः ॥ ओं ॥ १-३-३**

अक्षरशब्दवाच्यो विष्णुरेव । कुतः अम्बरान्तधृतेः । अम्बरं आकाशशब्दितं श्रीतत्त्वं अन्ते यस्य प्रपञ्चस्य स तथा, तस्य धृतेः धारणात् । सर्वाधाराकाशाख्यप्रकृत्याधारत्वश्रवणादिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये अन्तराधिकरणे आचार्यैः ब्रह्मवैवर्तपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकभागः ॥

[1] विप्रुडानन्द—क. [2] एतद्वाक्यं—घ॰ नास्ति । [3] इति व्याख्यानात्—क. [4] धात्वर्थत्वे—क. [5] तस्मात् हरिरेव—क.

## सोऽक्षरः

[अत्र] १"एतस्मिन् खल्वक्षरे गार्गि आकाशः ओतश्च प्रोतश्चे"ति श्रुत्युक्ताक्षरं श्रीतत्त्वमेव । तत्र अक्षर[1]शब्दस्य २"कूटस्थोऽक्षर उच्यते" इति प्रसिद्धेः । इति प्राप्ते—

३"ब्रह्मैवाक्षरं यदूर्ध्वं दिवो यदर्वाक् पृथिव्याः यदन्तरा द्यावापृथिवी इमे यद्भूतं च [2]भवच्च भविष्यच्चेत्याक्षते आकाश एव तदोतं च प्रोतं च" इत्याकाशाख्यप्रकृतेः सर्वाधारकत्वमुत्वा "एतस्मिन् खल्वक्षरे गार्गि आकाशः ओतश्च प्रोतश्च" [3]इत्यक्षरस्य [4]तदाधारत्वश्रवणादिति [5]सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **सोऽक्षर इति** ॥ स पूर्वोक्तो विष्णुरेव अक्षरः चतुर्विधनाशराहित्यरूपमहायोगविद्रूढिभ्यां अक्षरशब्दवाच्यो न श्रीतत्त्वमित्यर्थः ॥ ३ ॥

---

[सच्छब्दवाच्यः परमात्मा न प्रकृतिरिति समर्थनम्]

### ॥ ओं ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ ओं ॥ १–३–४

[6]सदेवेत्यादिश्रुतः सच्छब्दवाच्यः सः विष्णुरेव भवेत् । कुतः ईक्षतिकर्मव्यपदेशात् । "तदैक्षते"ति ईक्षणव्यापारश्रवणात् । जडे तदयोगात् इति सूत्रार्थः ।

अत्र ४"सदेव सोम्येदमग्र आसीत्" इत्यादिसृष्टिस्थाने प्रतीयमानं सत्

---

१ बृहदारण्यकोपनिषत् ॥ ५—८—११

२ भगवद्गीतायां पञ्चदशाध्याये विद्यमानोऽयं श्लोकभागः ।

३ बृहदारण्यकोपनिषत् । ५—८—११

४ छान्दोग्योपनिषत् । ६—२—१

[1] शब्दस्तु—क. [2] यद्भवच्च—ख. [3] इत्यक्षरान्तरस्य—ग. [4] तदाश्रयत्व—ग. [5] सिद्धान्तितः—ख. [6] सः विष्णुरेव सच्छब्दवाच्यः कुतः ?—क.

सन्

प्रधानमेव भवेत् । न विष्णुः । १"बहुस्यां प्रजायेये"ति बहुभावाख्य-[1]विकारश्रवणात् । इति प्राप्ते--

विष्णुरेव [2]सत् । "तदैक्षते"ति ईक्षत्याख्यव्यापार[3]श्रवणात् । जडप्रधानस्य ईक्षणासम्भवात् । न च बहुभावाख्यप्रधानलिङ्गश्रवणात् न सच्छब्दवाच्यो विष्णुरिति वाच्यं, २'अजायमानो बहुधा विजायते" इत्यविकारस्यापि बहुभावश्रवणेन तस्य रूपबहुत्वेन सावकाशत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सन्निति** ॥ सच्छब्दवाच्य [4]इत्यर्थः ॥ ४ ॥

---

[हृत्पद्मस्थः विष्णुरेव नाकाश इति साधनम् ]

**॥ ओं ॥ दहर उत्तरेभ्यः ॥ ओं ॥ १–३–५**

दहरे सूक्ष्महृत्पद्मे विद्यमानो विष्णुरेव । कुतः ? उत्तरेभ्यः । ३"य आत्मा अपहतपाप्मा" इत्याद्युत्तर[5]वाक्योक्तविष्णवसाधारणधर्मेभ्यः इति सूत्रार्थः ॥

अत्र "एतस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन् अन्तर आकाश" इति छन्दोगश्रुत्युक्तदहरहृत्पद्मस्थत्वं आकाशस्यैव भवेत् ।

---

१ छान्योग्योपनिषत् । ६—२—३

२ तैत्तिरीयारण्यकम् । ३—१३—१

३ छान्दोग्योपनिषत् । ८—१—२

[1] विकारवत्त्वश्रवणात्—ग [2] भवेत्—क. स तु—ग. [3] दर्शनात्—ख.

[4] "इत्यर्थः" इत्यनन्तरं

"अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता ।

नाशश्चतुर्विधो ज्ञेयः (प्रोक्तः) तदभावो हरेस्सदा" ॥ इति स्मृतेः ॥ ४ ॥

इति —क. [5] वाक्योक्तधर्मेभ्यः—ग.

## हृदब्जगः

''दहरोऽस्मिन्नन्तर आकाश'' इति हृत्पद्मे दहराकाशस्थितिश्रवणादिति प्राप्ते—

दहरहृ[1]त्पद्मस्थो विष्णुरेव भवेत् । १''य आत्माऽपहतपाप्मा विजरो विमृत्युः विशोकोऽविजिघित्सोऽपिपासः, सत्यकामः, सत्यसङ्कल्पः, सोऽन्वेष्टव्यः । स विजिज्ञासितव्यः ।'' इत्यादिनोत्तरवाक्ये हृत्पद्मस्थस्यापहतपाप्मत्वादिगुणश्रवणादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**हृदब्जग इति** ॥ हृत्पद्मस्थ इत्यर्थः ॥ ५ ॥

---

[ज्ञानार्थं प्रार्थितत्वरूपानुकूल्येन गृह्यमाणत्वं परमात्मन एव न ज्ञानिसुखस्येति प्रतिपादनम् ]

## ॥ ओं ॥ अनुकृतेस्तस्य च ॥ ओं ॥ १–३–६

आनुकूल्येन गृह्यमाणो विष्णुरेव । कुतः ? अनुकृतेः । सूर्यादे[2]स्तमनुभानात् । २''तमेव भान्तमनुभाति'' इति सूर्यादितेजसां तदधीनभानश्रवणादिति यावत् । ''तस्य चे''ति वाक्यप्रतीकम् । ''तस्यभासा सर्वमि''ति साक्षाज्जगत्प्रकाशकत्वोक्तेश्चेति सूत्रार्थः ॥

अत्र ३''तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति न भाति वा ॥ इति काठकश्रुत्युक्तं आनुकूल्येन गृह्यमाणत्वं ज्ञानिसुखस्यैव भवेत् । [3]''परमं सुख'मिति सुखश्रुतेरिति प्राप्ते—-

---

१ छान्दोग्योपनिषत् । ८—२—१

२ काठकोपनिषत् । ५–१५

३ काठकोपनिषत् । ५–१२

[1] त्पद्मस्थितो—ग. [2] स्तदनुभानात्—ग. [3] परमसुखं—क.

## सूर्यादिभासकः

आनुकूल्येन गृह्यमाणो विष्णुरेव । कुतः? "तमेव भान्तं अनुभाति सर्व''मिति सूर्यादितेजसां तदधीनत्वश्रवणात् । "तस्य भासा सर्वमिदं विभाती''ति साक्षात्सर्वजगत्प्रकाशकत्वोक्तेश्च । [1]तस्य च लिङ्ग-द्वयस्य,

१"यदादित्यगतं तेजो जगद्भासयतेऽखिलम्" इत्यादिप्रमाणेन विष्णुलिङ्गत्वावगतेः । न च सुखश्रुतिविरोधः । तस्य सुखरूपत्वेन "परमं सुख''मिति सुखश्रुतेरपि तत्परत्वात् । तस्मात् आनुकूल्येन गृह्य-माणो विष्णुरेव इति [2]सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सूर्यादिभासक इति** ॥ सूर्यादितेजसां भासकः प्रकाशकः इत्यर्थः ॥ ६ ॥

---

[काठकोक्तेशानः विष्णुरेव न वायुरिति साधनम्]

### ॥ ओं ॥ शब्दादेव प्रमितः ॥ ओं ॥ १–३–७

[3]श्रुत्युक्तेशानो विष्णुरेव प्रमितः । कुतः? "मध्ये वामनमासीनं विश्वे देवा उपासते" इति वामनश्रुतेः । "एवेति" प्राणादिव्यवस्थापकत्व-रूपलिङ्गाच्छ्रुतेः प्राबल्यमुच्यत इति सूत्रार्थः ॥

---

१ भगवद्गीता । १५ अध्यायः ।

1 "तस्य चे''त्यारभ्य, "अवगतेः''इत्यन्तं—घ. नास्ति ।

2 सिद्धान्तः कृतः । अत्र समन्वेतव्यलिङ्गमनुपादाय सैद्धान्तिकलिङ्गोपादा-नन्तु अधिकरणतात्पर्यसूचनेन प्रकारवैचित्र्यप्रदर्शनार्थम् । क्वचित्समन्वेतव्य-पदोपादानं, क्वचित्प्रवृत्तिनिमित्तप्रदर्शनं, क्वचित्सैद्धान्तिकलिङ्गो (पदो) पादानं, इत्याद्यनेक-प्रकारप्रदर्शनार्थम् । तत्र च स्वतन्त्रस्य महर्षेः इच्छैव शरणम् । यथाकथञ्चित् अधिकरणस्य तात्पर्यमित्यवधेयम् । तस्मादानुकूल्येन गृह्यमाणो विष्णुरेवेत्यर्थः ॥ ६ ॥—क.

3 ईशानशब्दवाच्यो विष्णुरेव—क.

## प्राणप्रेरकः

अत्र १"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य । ऊर्ध्वं प्राणमुन्नमयति अपानं
प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ॥"

इति काठकश्रुत्युक्तेशानो वायुरेव भवेत् । तस्य "ऊर्ध्वं प्राणं उन्नमयती"ति वाक्ये प्राणादिव्यवस्थापकत्वश्रवणात् । प्राणादिव्यवस्थापकत्वस्य वायुलिङ्गत्वप्रसिद्धेः इति प्राप्ते—

विष्णुरेवेशानो भवेत् । "मध्ये वामन"मिति वामनश्रुतेः । ननु वायुलिङ्गश्रवणादीशानो वायुरेव किं न स्यादिति चेन्न । लिङ्गापेक्षया श्रुतेः प्राबल्यात् । तेषामपि लिङ्गानां २"तद्वै त्वं प्राणोऽभवः" इत्यादिना वैष्णवत्वस्य सिद्धत्वादेवेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**प्राणप्रेरक इति** ॥ मुख्यतः प्राणप्रेरक इत्यर्थः ॥ अत्रापि नेयं समन्वेतव्यशब्दोक्तिः । नापि तावत्प्रवृत्तिनिमित्तोक्तिः । नापि सिद्धान्त[1]साधकोक्तिः । किन्तु सिद्धान्तसाधकवामनशब्दवाच्यविष्णवसाधारणधर्मोक्तिरित्यवधेयम् । तस्मात् ईशानो विष्णुरेवेत्यर्थः ॥ ७ ॥

———

[देवानां वेदविद्याधिकारसमर्थनम् ]

**॥ ओं ॥ तदुपर्यपि बादरायणः सम्भवात् ॥ ओं ॥** १–३–८

तदुपर्यपि योग्यमनुष्याणां विद्याकर्मभ्यां देवादित्वप्राप्त्यनन्तरमपि देवानां [2]वेदादिविद्याधिकारः विद्यत एव । कुतः ? सम्भवात्=अधि-

१ काठकोपनिषत् । ५–३

२ चित्युपनिषत् ।

[1] साधनोक्तिः—क. [2] वेदविद्या ग.

**दैवतैरपि**

कारोपयोगिनः विशिष्टबुद्ध्यादेः देवेषु सम्भवादिति बादरायणो मन्यते । अपीति न केवलं मनुष्यत्वदशायां इत्याहेति सूत्रार्थः ॥

अत्र न देवानां वेदविद्याधिकारः । तेषामर्थित्वाभावात् । "अर्थी समर्थो विद्वानधिक्रियत" इति न्यायात् । न ह्यनादितः प्राप्तपदानां मोक्षशून्यानां च तेषां वेद[1]विद्यादिभिः प्रयोजनमस्ति येनार्थिता स्यादिति प्राप्ते—

देवानां वेदविद्याधिकारोऽस्त्येव । न चोक्तप्रकारेण देवानां अर्थित्वाभावात् नाधिकार इति वाच्यम् । विद्याकर्मभ्यां योग्यमनुष्याण-देवादित्वप्राप्त्या तत्पदानाम[2]प्याद्यन्तवत्त्वेन [3]तेषामपि नित्यफले मोक्षे अर्थितांव सम्भवादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**दैवतैरपीति** ॥ दैवतैरपि=देवैः ज्ञेय इति [4]असम्भावनापरिहारार्थोऽपिशब्दः । दैवतैरपि कर्तृभिः वेदैः करणैः [5]विष्णुः ज्ञेयः इत्यर्थः ॥ ८ ॥

———

[शूद्राणां वेदाधिकारनिरसनम् ]

**॥ ओं ॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ओं ॥ १–३–९**

शूद्राणां वेदविद्याधिकारो नास्ति । कथं तर्हि शूद्रेति सम्बोधितस्य पौत्रायणस्य वेदविद्याधिकारः [6]इति । उच्यते [तस्य पौत्रायणस्य तदा-[7]द्रवणात् शुचा[8]द्रवणादेव शूद्रेति सम्बोधनम् । न वर्णावरत्वात् ।

[1] विद्याभिः—क. [2] प्याद्यन्तत्वेन–क. [3] तेषामतिशयितफले—घ. [4] मनुष्याधिकारत्वादिति प्रकृतमनुष्यसमुच्चये अपिशब्दः—ख.ग.घ. [5] विष्णुरेव—क. [6] "इति" ख.ग. नास्ति । [7] द्रविणात्—ग. [8] द्रविणादेव—ग.

## ज्ञेयो न वेदैः शूद्राद्यैः

शोको किन्निमित्त इत्यत उक्त–तदनादरश्रवणात्=हंसकृतानादरश्रवणात्, अस्य शोक इति। किमत्र ज्ञापकं इत्यत उक्त''सूच्यते ही''ति। हि=यस्मात्, ''क्षत्तारमुवाचे''ति [1]व्यग्रतयोक्त्या शोको ज्ञाप्यत इति सूत्रार्थः॥

अत्रास्ति शूद्राणां वेदविद्याधिकारः। [2]मनुष्याधिकारत्वादिति मनुष्याणामधिकारस्योक्तत्वात्। न चादर्शनादनधिकारः। शूद्रस्यापि पौत्रायणस्य वैदिक[3]संवर्गविद्याध्ययनदर्शनात्। तस्य शूद्रत्वमेव कुतः इति चेन्न। रैक्केण १''अहहा रे त्वा शूद्रे''ति पौत्रायणं प्रति सम्बोधनादिति प्राप्ते—

न शूद्राणां वेदविद्याधिकारः। संस्कारविधुरत्वात्। अध्ययनादेश्च संस्कारसापेक्षत्वात्। न च शूद्रस्यापि पौत्रायणस्य कथं वेदविद्याधिकार इति वाच्यम्। तस्य शूद्रत्वे प्रमाणाभावात्। न च शूद्रेति सम्बोधनमेव तत्र प्रमाणमिति वाच्यम्। शुचा [4]द्रवणयोगेन [5]तत्र शूद्रशब्दस्य [6]प्रवृत्तत्वेन [7]तत्साधकत्वाभावात्। चैत्ररथलिङ्गेन क्षत्रियत्वावगतेश्चेति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह—**ज्ञेयो न वेदैः शूद्राद्यैः इति**। आद्यशब्देन साधारणस्त्रीणां वर्णबाह्यानां च ग्रहणम्। [8]अस्याधिकरणद्वयस्य साक्षादसमन्वयपरत्वेन प्रासङ्गिकत्वान्नासङ्गतिः॥ ९॥

———

१ छान्दोग्योपनिषत्। ४–२–३.

[1] व्यग्रनयोक्त्या—क. व्यत्ययतयोक्त्या—ग. [2] ''मनुष्ये''- त्यारभ्य ''अधिकार'' इत्यन्तं—ग. नास्ति। [3] संसर्ग—ग. [4] द्रविण—ग. [5] तत्र—ग. [6] प्रवृत्तिनिमित्तत्वेन—क.प्र वृत्तेन—ख. [7] तत्साधकसद्भावात्—क. तत्साधकाभावात्—ग. [8] ''अस्ये'' त्यारभ्य ''असङ्गतिः'' इत्यन्तं—क. नास्ति।

## कम्पकः

[श्रुत्युक्तवज्रशब्दस्य विष्णुवाचित्वसमर्थनम्]

### ॥ ओं ॥ कम्पनात् ॥ ओं ॥ १-३-१०

[1]अत्र वज्रशब्दवाच्यो भगवानेव । कुतः? कम्पनात् । "एजति" इति सर्वजगच्चेष्टकत्वश्रवणादिति सूत्रार्थः ॥

अत्र १"यदिदं किञ्च जगत्सर्वं प्राण एजति [2]निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृता[3]स्ते भवन्ति" इति काठकश्रुत्युक्तं वज्रं इन्द्रायुधमेव भवेत् वज्रश्रुतेः तत्र रूढत्वादिति प्राप्ते—

अयं वज्रो भगवानेव । "एजती"ति सर्वजगच्चेष्टकत्वरूपनिरवकाशलिङ्गश्रवणात् । "य एतद्विदुः अमृतास्ते भवन्ती"ति वज्रज्ञानान्मोक्षोक्तेश्च । न च [4]तत्र वज्रश्रुतिविरोधः । २"चक्र चङ्क्रमणादेषः वर्जनाद्वज्रमुच्यते । खण्डनात्खण्ड एवैष" इति [5]स्मृत्या वज्रश्रुतेः सावकाशत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**कम्पक इति** ॥ सकलजगच्चेष्टकः । तस्माद्विष्णु[6]रेवात्रोक्तो वज्र इत्यर्थः ॥ १० ॥

---

१ कठश्रुतिः २-३-२

२ ब्रह्मसूत्रभाष्ये आचार्यैः ब्रह्मवैवर्तपुराणवाक्यत्वेनोदाहृतम् । १-३-११

1 "अत्र"—ग. नास्ति । 2 निश्सृतं—ग. निस्स—ख. निसृ—घ. 3 स्ते विदुरिति—ख. 4 "तत्र"-ग.ख.घ. नास्ति । 5 श्रुत्या - क.ख. 6 रेवोक्तो—क ग.

[श्रुत्युक्तज्योतिः परमात्मा इति समर्थनम्]

## ॥ ओं ॥ ज्योतिर्दर्शनात् ॥ ओं ॥ १-३-११

ज्योतिश्शब्दवाच्यो विष्णुरेव । कुतः ? दर्शनात् । विष्णुरेव ज्योतिरिति [1]श्रुतेरिति सूत्रार्थः ॥

अत्र १"योयं विज्ञानमयः प्राणेषु [2]हृद्यन्तर्ज्योतिः पुरुषः उभौ लोकावनुसञ्चरती"त्यत्र उक्तं ज्योतिः जीव एव । "उभौ लोकावनुसञ्चरती"ति जीवलिङ्गादिति प्राप्ते—

विष्णुरेवेदं ज्योतिः । ज्योतिःश्रुतेः विष्ण्वैकवाचित्वात् । न चात्र प्रमाणाभावः । २"विष्णुरेव ज्योतिः, विष्णुरेवात्मा, विष्णुरेव ब्रह्मे"ति श्रुतेः । न च विष्णुपक्षे उभयलोकसञ्चरणानुपपत्तिः । "प्राज्ञेनात्मनान्वारूढः उत्सर्जद्याती"ति जीवमादायेश्वरस्यैव उभयलोकसञ्चरणोक्तेः [3]इति [4]सिद्धान्तः कृतः ॥ ११ ॥

---

[श्रुत्युक्ताकाशः परमात्मा इति साधनम्]

## ॥ ओं ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ओं ॥ १-३-१२

आकाशशब्दवाच्यो विष्णुरेव । कुतः ? अर्थान्तरत्वादिव्यपदेशात् । [5]अन्योऽर्थः अर्थान्तरं, विलक्षणोऽर्थः । तस्य भावः तत्त्वं,

---

१ बृहदारण्यकोपनिषत् । ६-३-७

२ ब्रह्मसूत्रभाष्ये आचार्यैः चतुर्वेदशिखावाक्यत्वेनोदाहृतम् । १-३-११

[1] श्रुतिरिति—क. [2] हृद्यन्तज्योतिः—क. [3] इति सिद्धम्—ख. [4] सिद्धान्तः कृतः । तस्य तात्पर्यमाह अन्य इति—अन प्राणन इति धातोः ॥ ११ ॥—क. [5] "अन्य" इत्यारभ्य "व्यपदेशा"दित्यन्तं—ग. नास्ति ।

नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात् । आदिपदेन ब्रह्मत्वादिव्यपदेशादिति सूत्रार्थः ॥

अत्र १"आकाशो वै नाम नामरूपयोःनिर्वहिता, ते यदन्तरा तद्ब्रह्म तदमृत"मित्यत्रोक्ताकाशः प्रसिद्धाकाश एव भवेत् । आकाशशब्दस्य तत्रैव रूढत्वादिति प्राप्ते—

अयमाकाशो विष्णुरेव । "ते यदन्तरा तद्ब्रह्मे"ति नामरूपराहित्यव्यपदेशात् । "तद्ब्रह्मे"ति ब्रह्मत्वव्यपदेशाच्चेति सिद्धान्तः कृतः ॥

तदेत[1]दधिकरणयोस्तात्पर्यन्तु [2]पृथङ्नोक्तम् । एतयोः प्रथमपादसमन्वितशब्दसमन्वयार्थत्वात् । प्रयोजनन्तु २ग्रन्थान्तरात् अवगन्तव्यम् ॥ १२ ॥

---

[भगवत एव स्वप्नादिद्रष्टृत्वसमर्थनम् ]

## ॥ ओं ॥ सुषुत्प्युत्क्रान्त्योर्भेदेन ॥ ओं ॥ १-३-१३

स्वप्नादिद्रष्टा विष्णुरेव । असङ्गत्वलिङ्गात् । न चाभेदेन लिङ्गोपपत्तिः । सुषुप्त्युत्क्रान्तिप्रकरणयोः जीवेशयोः भेदेन व्यपदेशात् इति सूत्रार्थः ॥

[3]अत्र ३"स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं

---

१ छान्दोग्योपनिषत् । ८-१४-१

२ ग्रंथान्तरात् = चन्द्रिकासकाशात् । तत्प्रकारस्तु एवम्—प्रथमपादे ज्योतिरशब्दाकाशशब्दयोः अन्यत्र प्रसिद्धत्वेन समन्वयस्य कृतत्वेऽपि, तृतीयपादे पुनस्तयोरेव विषयवाक्यान्तरे अभ्यधिकाशङ्कादर्शनात् उभयत्र प्रसिद्धत्वेन रूपेण समन्वयः युक्त इति न पुनरुक्तिः ॥

३ बृहदारण्यकोपनिषत् । ६-३-१५

[1] दधिकरणतात्पर्यन्तु—क. [2] न पृथक् प्रोक्तम् - क. [3] तत्र—क.

## अन्यश्च जीवतः

पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवति [1]स्वप्नायैव । स यत्तत्र किञ्चित्पश्यति अनन्वागतस्तेन भवति । असङ्गो ह्ययं पुरुषः" । इत्यत्रोक्तं स्वप्नादिद्रष्टृत्वं [2]जीवस्यैव भवेत् । प्रसिद्धत्वात् । न [3]चासङ्गत्वलिङ्गात् [4]ईशस्यैवेति वाच्यम् । जीवेशयोरभेदेन जीवेऽपि चैतन्यविवक्षया असङ्गत्व[5]सम्भवादिति प्राप्ते—

स्वप्नादिद्रष्टा परमात्मैव । असङ्गत्वलिङ्गात् । न चाभेदाज्जीवस्यापि असङ्गत्वमिति वाच्यम् । १"प्राज्ञेनात्मना सम्परिष्वक्तः न बाह्यं किञ्चन वेद नान्तरम् ।" २"प्राज्ञेनात्मना अन्वारूढः उत्सर्जद्याती"ति सुषुप्त्युत्क्रान्तिप्रकरणयोः भेदेनैव जीवेशयोः उक्तत्वेन तदभेदाभावादिति सिद्धान्तः कृतः ॥

[6]तस्य तात्पर्यमाह—**अन्यश्च जीवत इति** ॥ जीवतः=[7]जीवात्, अन्यश्च=[8]भिन्न एवेत्यर्थः । अत्र सैद्धान्तिकलिङ्गमात्रे वक्तव्ये तस्य जीवेश्वराभेदेन जीवनिष्ठत्वशङ्कापरिहाराय सूत्रोक्तभेदस्या[9]प्युक्तिरिति बोध्यम् ॥ १३ ॥

---

१ बृहदारण्यकोपनिषत् । ६-३-२१

२ बृहदारण्यकोपनिषत् । ६-३-३५

[1] स्वप्न एव—ख. [2] जीवस्य भवेत्—क. [3] चासङ्गत्वादिलिङ्गात्—क. [4] ईशानस्येति—ग.ख. [5] प्रसङ्गादिति—क. [6] तत्तात्पर्य—ग. [7] जीवादन्यः भिन्न इत्यर्थः—ख.ग.घ. [8] भिन्न इत्यर्थः । च शब्दः सैद्धान्तिकासङ्गत्वलिङ्गसमुच्चयार्थः । तस्मात् स एव मुख्यतः स्वप्नादिद्रष्टेत्यर्थः—ख.ग.घ. [9] प्युपपत्तिरिति—क.

**पतित्वादिगुणैर्युक्तः तदन्यत्र च वाचकैः ।**
**मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ॥**

---

[परमात्मैव श्रुत्युक्तब्राह्मणः न विरिञ्च इति प्रतिपादनम् ]

## ॥ ओं ॥ पत्यादिशब्देभ्यः ॥ ओं ॥ १-३-१४

ब्राह्मणशब्दवाच्यो विष्णुरेव । कुतः? सर्वाधिपत्यादिशब्द[1]समुदायादिति सूत्रार्थः ॥

अत्र १"एष नित्यो महिमा ब्राह्मणस्य" । २"न कर्मणा वर्धते नो कनीयान्" । स ब्राह्मणः विरिञ्चो भवेत् । ३"स वा एष महानज आत्मा" इति [2]तस्मिन्नजशब्दश्रवणादिति प्राप्ते—

अयं ब्राह्मणो विष्णुरेव । ४"सर्वस्य वशी, सर्वस्येशानः, [3]सर्वस्याधिपतिः, एष सर्वेश्वरः, एष भूताधिपतिः, एष भूतपालः, एष सेतुः [4]विधरण' इत्यादौ [5]सर्वाधिपत्यादिवाचिशब्दसद्भावात् । न चाजशब्दविरोधः न जायत इति योगेनो[6]पपत्तेः । [7]न च ब्राह्मणशब्दविरोधः । ब्रह्मणा वेदेनाण्यते गम्यते इति योगेनोपपत्तेः, इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह —**पतित्वादिगुणैर्युक्त इति** ॥ आदिपदेन वशित्वादिगुणग्रहणम् । तस्माद्विष्णुरेव ब्राह्मण इत्यर्थः । अत्र सिद्धान्त-

---

१ बृहदारण्यकोपनिषत् । ६-४-२२
२ बृहदारण्यकोपनिषत् । ६-४-२३
३ बृहदारण्यकोपनिषत् । ६-४-२४
४ बृहदारण्यकोपनिषत् । ६-४-२१

[1] समन्वयादिति-क [2] अस्मिन्—ख.ग.घ. [3] सर्वाधिपतिः—ख. [4] विधारण—क. [5] सर्वाधिपत्यादिशब्द—घ. सर्वाधिपत्यादिवाचकशब्द—क. [6] पपत्तिरिति—क [7] "न चे"त्यारभ्य, "उपपत्ते"रित्यन्तं—क. नास्ति ॥

साधकत्वेन सूत्रे बहुशब्दानामु[1]पात्तत्वात्तत्सङ्ग्रहायादिपदबहुवचनप्रयोगः । पादार्थमुपसंहति—**तदिति** । तदित्यव्ययं [2]तन्त्रेणोपात्तम् । आद्यस्य तस्मादित्यर्थः । द्वितीयस्य तस्मिन् विष्णावित्यर्थः । वाचकैरित्यस्य उभयत्रानुषङ्गः । उभयत्र प्रसि[3]द्धैरिति यावत् । अत्रापि सूत्रोक्तानां उपलक्षणत्वाभिप्रायेण सर्वशब्दैरित्युक्तम् । ततश्चोभयत्र प्रसिद्धैः [4]नामलिङ्गात्मकैः सर्वशब्दैश्च जनार्दनः एक एव मुख्यतो वाच्य इत्यर्थः । च शब्दः पूर्वपादसमन्वितान्यत्रप्रसिद्ध[5]नामात्मकलिङ्गात्मकशब्दसमुच्चयार्थः ॥ १४ ॥

[6]मदाचार्यमनोधाममध्वमानसमश्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

[7]इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां प्रथमाध्यायस्य तृतीयः पादः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

1 पात्तत्वात्सङ्ग्रहणाय—क. पात्ततासङ्ग्रहाय–ग.
2 तत्रोपात्तम्—क. 3 द्वैरित्यर्थः—ख. 4 नामात्मकैः—ग. 5 नामात्मकशब्द—ग. 6 इदं च पद्यं—क-ख-ग. नास्ति ॥ 7 इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्ये प्रथमाध्यायस्य तृतीयः पादः—क.

# अथ प्रथमाध्यायस्य चतुर्थः पादः

श्रीगुरुभ्यो नमः

## अव्यक्तः

हरिः ओम्

[1]स्वयमेवागतं कृष्णं श्रीमदार्यसुपूजितम् ।
नवनीतधरं सत्या[2]रुक्मिणीपतिमाश्रये ॥

श्रुतिलिङ्गादिभिः अन्यत्रैव प्रसिद्धानां [3]नामलिङ्गात्मकानां शब्दानां विष्णौ समन्वयं प्रदर्शयत्यस्मिन् पादे ॥

[श्रुत्युक्ताव्यक्तादिशब्दवाच्यत्वं भगवत एव न प्रधानादेरिति समर्थनम् ]

**॥ ओं ॥ आनुमानिकमप्येकेषां इति चेन्न शरीर रूपकविन्यस्तगृहीतेः दर्शयति च ॥ ओं ॥ १-४-१**

[4]आनुमानिकमपि अनुमानपरिकल्पितं प्रधानादिकमेव अव्यक्तादिपदैः कासुचिच्छाखासु उच्यत इति चेन्न, तासु शाखासु अव्यक्तादिपदैः विष्णुरेवोच्यते । कुतः? "दर्शयति च" १"अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् । यो वेद हरिमात्मानं स भयादनुमुच्यत" इति श्रुतिः २"अक्षरं ब्रह्म परमं" ३"अव्यक्तोऽक्षर इत्युक्तः" इति स्मृतिश्चाव्यक्तादिकं

---

१ ब्रह्मसूत्रभाष्ये १—४—१ आचार्यैः पिप्पलादशाखावाक्यत्वेन उदाहृतेयं श्रुतिः ।

२ भगवद्गीता । ८-३

३ भगवद्गीता । ८-२१

[1] अयं श्लोकः—क.ख.ग. नास्ति । [2] रुग्मिणी—घ. [3] नामलिङ्गात्मनां—ख.
[4] "आनुमानिकं" इत्यारभ्य "इति चेन्न" इत्यन्तं वाक्यं—क. घ. नास्ति ।

ब्रह्मैवेति यतो दर्शयति तस्मादित्यर्थः । कथं तर्हि अन्यत्र व्यवहारः इत्यत उक्तं—"शरीररूपकविन्यस्तगृहीतेः" इति । शरीररूपके=पारतन्त्र्याच्छरीरवद्ध्रियमाने प्रधानादौ विन्यस्तस्य स्थितस्य विष्णोरव्यक्तादिपदेन गृहीतेरित्यर्थः । तथा च तत्सम्बन्धादन्यत्र व्यवहार इति सूत्रार्थः ॥

अत्र १"महतः परमव्यक्तं अव्यक्तात्पुरुषः परः ।" इत्यादिश्रुत्युक्ताव्यक्तादिशब्दवाच्यो न विष्णुः, किन्नाम [1]प्रधानमेव । अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धत्वात् इति प्राप्ते––

परमात्मैवाव्यक्तादिशब्दवाच्यः । अव्यक्तादिशब्दप्रवृत्तिनिमित्तस्वाम्यत्वात् । अतिशयेन प्रवृत्तिनिमित्ताधिकरणत्वाच्च । कथं तर्हि प्रधानादावव्यक्तादिशब्दप्रयोगः इति चेन्न । [2]प्रधानादौ परमात्मनो विन्यस्ततया तत्सम्बन्धेन तत्र प्रयोगाङ्गीकारादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**अव्यक्तः इति** ॥ [3]अव्यक्तशब्दवाच्यो विष्णुरेवेत्यर्थः ॥ १ ॥

---

[ज्योतिष्टोमादिशब्दानां परमात्मबोधकत्वसमर्थनम् ]

**॥ ओं ॥ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ओं ॥ १-४-२**

[4]ज्योतिश्शब्दवाच्यो विष्णुरेव । कुतः? हि=यस्मात् एके शाखिनः, उपक्रमात्=२"एष इमं लोकं अभ्यार्च्यत्" इत्युपक्रम्य, तु=

---

१ कठश्रुतिः । १—३—१५

२ ऐतरेयारण्यकम् । २—२—२

[1] प्रधानाद्येव— ख.ग.घ. [2] "प्रधानादौ" इत्यतः "सम्बन्धेन" इत्यन्तं - ग. घ. नास्ति । तत्स्थाने "ईश्वराधीनप्रवृत्तिनिमित्ताधिकरणत्वेन" इति वर्तते । [3] अव्यक्तादि प्रतिपादकाशेषशब्दैः वाच्य इत्यर्थः—ख. [4] ज्योतिरादिशब्द—ग.

विशेषेण, तथा=ज्योतिरादिसर्वशब्दवाच्यत्वेन, १"ता वा एता सर्वा ऋचः" इत्यादिना अधीयते=पठन्तीति सूत्रार्थः ॥

अत्र २"वसन्ते वसन्ते ज्योतिषा यजेत"। [1]इत्यादिश्रुत्युक्ताः ज्योतिरादिशब्दाः न विष्णुवाचकाः। किन्तु ज्योतिष्टोमादिकर्मतदङ्ग-वाचकाः। तेषां तत्रैव प्रसिद्धत्वात्। अन्यथा तदसिद्धिप्रसङ्गादिति प्राप्ते—

विष्णुरेव ज्योतिरादिशब्दवाच्यः। ३"ता वा एताः सर्वा ऋचः, सर्वे वेदाः, सर्वे घोषाः, एकैव व्याहृति"[2]रित्यादिश्रुत्या विष्णोरेव सर्व-शब्दवाच्यत्वाभिधानात्। न च कर्माद्यसिद्धिप्रसङ्गः। अन्यत्र रूढ्यादि-वृत्तिमनिवार्यैव [3]परममुख्यया वृत्त्या भगवत्परत्वाङ्गीकारात्। इति सिद्धान्तः कृतः ॥

[4]तस्य तात्पर्यमाह—[5]**कर्मवाक्यैश्च वाच्य इति** ॥ [कर्मतदङ्गत-

---

१ ऐतरेयारण्यकम्। २—२—२

२ ब्रह्मसूत्रभाष्ये आचार्यैः उदाहृता श्रुतिरियम्।

३ ऐतरेयारण्यकम्। २—२—२

[1] इति श्रुत्युक्ताः—ख. घ. [2] रिति श्रुत्य—ख. घ.। [3] मुख्यया—ख.ग.घ.

[4] तदेतदधिकरणयोः (तस्य) तात्पर्यमाह—अव्यक्तःकर्म-वाक्यैश्च वाच्य इति ॥ अव्यक्तं, कर्मवाच्यं येषां शब्दानां इति बहुव्रीहिः। तथाच अव्यक्तादिप्रतिपादकाशेषशब्दज्योतिष्टो मादिकर्मतदङ्गवाचकाशेषशब्दैश्च वाच्य इत्यर्थ ॥ २ ॥—क. ख. [5] अव्यक्तकर्मवाक्यैश्च वाच्य इति ॥ द्वन्द्वान्ते श्रूयमाणो वाच्य (वाक्य) शब्दः प्रत्येकं अभिसम्बध्यते। वाक्यशब्दश्च शब्दपरः। तथाचाव्यक्तादिप्रतिपादकाशेषशब्दैः ज्योतिष्टोमादिकर्मतदङ्गवाच-काशेषशब्दैश्च वाच्य इत्यर्थः.। सविसर्गाव्यक्तपाठे अव्यक्त इत्यनेनैव पृथक् प्रथमाधि-करणतात्पर्यं उक्तमिति ज्ञातव्यम्। कर्मवाक्यैश्च वाच्य इत्यनेन प्रत्येकं द्वितीयाधि-करणतात्पर्यं उक्तमिति ज्ञेयम्। अव्यक्तः कर्मवाच्यैश्चेति पाठे, कर्म वाच्यं एषां शब्दानां इति बहुव्रीहिः ॥—ग.घ.

त्क्रमदेशकालाधिकार्यादिवाचकैः अन्यत्र प्रसिद्धैः शब्दैः वाच्य इत्यर्थः ॥]
॥ २ ॥

[पञ्चजनादिशब्दानां विष्णुबोधकत्वप्रतिपादनम् ]

**॥ ओं ॥ न संख्योपसङ्ग्रहादपि नानाभावा-
दतिरेकाच्च ॥ ओं ॥ १–४–३**

पञ्चजनादिशब्दवाच्यो विष्णुरेव । कुतः तदधीनत्वा[1]दिपूर्वोक्त-हेतुभ्य एव । तर्हि बहुत्वसंख्याविरोध इत्यत उक्तं—**न संख्योपसङ्ग्रहादिति** ॥ यस्मिन्निति श्रुतौ पञ्च पञ्चजना इति बहुत्वसंख्यावाचकशब्द-[2]सङ्ग्रहादपि न विरोधः । कुतः ? "नानाभावादतिरेकाच्च" । अप्येक-स्यापि भगवतोऽनेकरूपत्वात् । आधेयपञ्च[3]जननामकरूपापेक्षया यस्मिन्नि-त्याधाररूपस्यातिरिक्तत्वाच्चेति सूत्रार्थः ॥

अत्र १ "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" । इति श्रुत्युक्तपञ्चजनादिशब्दवाच्यो न विष्णुः । किन्त्वन्ये । तच्छब्दस्य बहुत्वसंख्याविशिष्टवस्तुवाचित्वात् ! बहुत्वस्य ईश्वरे विरुद्धत्वात् । २ "एकमेवाद्वितीयमिति" श्रुत्या [4]एकस्यैव प्रमितत्वादिति प्राप्ते—

पञ्चजनादिशब्दवाच्यो [5]विष्णुरेव । बाधकाभावात् । न च बहुत्वानुपपत्तिः बाधिका । स्वगतभेदशून्यस्यापि प्रतिशरीरं प्राणादिपञ्च-जननियमनाय [6]बहुरूपत्वेन बहु[7]त्वो पपत्तेरिति सिद्धान्तः कृतः ॥

---

१ बृहदारण्यकोपनिषत् । ६—४—१७

२ छान्दोग्योपनिषत् , छष्ठाध्यायः ।

[1] दित्यादि–ग. [2] सङ्ग्रहेऽपि—क. [3] जनानां नाम—ग. जनानाम —क
[4] एकत्वस्य—क. [4]एकत्वस्यैव—ख. [5] भगवानेव—क. [6] बहुत्वेत—ग.
[7] त्वोपपत्तिरिति – ग.

**एकोऽमितात्मकः ॥**

---

तस्य तात्पर्यमाह—**एकोऽमितात्मक इति** ॥ एक एव बहुरूपात्मक इत्यर्थः । यद्यपीश्वरः स्वयमेक एव । तथापि रूपबाहुल्यात् पञ्चजनादिशब्दवाच्यत्वं युक्तमिति भावः । अत्र अमितात्मक इत्युक्त्या [1]रूपरूपिभेदो नास्तीति सूचयति । अन्यथाऽमितरूपवानित्यवक्ष्यत् । [2]यद्यप्यत्र पञ्चजनशब्दसमन्वयार्थं पञ्चरूपात्मक इत्येव वक्तव्यम् । अमितात्मक इत्यसङ्गतम् । तथापि पञ्चजनशब्दस्य उपलक्षणत्वेन बहुत्वसंख्याविशिष्टवस्तुवाचकशब्दमात्रस्य समन्वयार्थमेवमुक्तिरिति [3]ज्ञेयम् । अत एव सूत्रे "न संख्योपसङ्ग्रहादिति" सामान्योक्तिः । अत एव टीकायां पञ्चजनादीत्यादिपदप्रयोगः, सामान्येन बहुत्वसंख्याविशिष्टवाचिशब्दवाच्यो हरिरित्युपसंहारश्च कृतः इत्यवगन्तव्यम् ॥ ३ ॥

---

[वेदोक्ताकाशशब्दस्य ब्रह्मबोधकत्वसमर्थनम् ]

**॥ ओं ॥ कारणत्वेन च आकाशादिषु यथाव्यपदिष्टोक्तेः ॥ ओं ॥ १–४–४**

कारणत्वेन कार्यत्वेन च आकाशादिशब्दवाच्यो विष्णुरेव । तर्हि कार्यकारणभावविरोधः इत्यत उक्तं—**आकाशादिष्विति** ॥ स्थितत्वादिति शेषः । १ "य आकाशे तिष्ठन्, यो वायौ तिष्ठन्" इत्यादिना आकाशादिषु स्थितत्वोक्तेः । तत्रापि विष्णुः कुतः इत्यत उक्तं—**यथाव्यपदिष्टोक्तेरिति** ॥ यथा=येन प्रकारेण अविदि[4]तत्वादिरूपेण, "स

---

१ बृहदारण्यकोपनिषत् । ५—७—१२

[1] रूपिरूप—ख. [2] "यद्यप्यत्र" इत्यारभ्य "अवगन्तव्यं" इत्यन्तो भागः क. नास्ति । [3] ज्ञातव्यम्—ग॰घ. [4] तत्त्वरूपेण—ख.

## अवान्तरं कारणं च

योऽतोऽश्रुत" इत्यदौ [1]व्यपदिष्टः उक्तः । तादृशस्यैवाकाशादिषु "यमाकाशो न वेदे"त्यादिना उक्तत्वादिति सूत्रार्थः ॥

अत्र १"आत्मन आकाशस्सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नं," इति श्रुत्युक्तावान्तरकारणा[2]काशादिशब्दवाच्यो न विष्णुः । आकाशादीनामात्मादिकार्यत्वश्रवणात् । परमात्मनश्च कार्यत्वायोगात् । २"न जायते म्रियते" इत्यादिश्रुतेः इति प्राप्ते—

न केवलं मूलकारणवाचकात्मशब्दवाच्यो हरिः । अपि तु कार्यत्वे सति [3]कारण अवान्तर[4]कारणं, [5]तद्वाचकाकाशादिशब्दवाच्यश्च । न च कार्यकारणभावविरोधः । आकाशाद्युत्पत्तौ आकाशाद्यन्तर्गतत्वेन भगवतोऽभिव्यक्त्या कार्यत्वस्य वाय्वादिगतरूपाभि[6]व्यक्तिहेतुत्वेन कारणत्वस्य चोपपत्तेः इति [7]सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**अवान्तरं कारणं चेति** ॥

न [8]केवलं मूलकारणवाचकात्मशब्दवाच्यो विष्णुः अपि तु अवान्तरकारणाकाशादिशब्दवाच्यश्च इत्यर्थः । [9]यद्यप्यत्र पूर्वं समन्वितस्यैव आकाशशब्दस्य समन्वीयमानत्वेन पृथक् तात्पर्यं न वक्तव्यम् । तथाकाशाद्यन्नान्तशब्दानां समन्वीयमानत्वेन तावन्मात्राभावेन पृथक्तात्पर्यकथनं

१ तैत्तिरीयोपनिषत् ।

२ कठश्रुतिः । (काठकोपनिषत् ।)

[1] व्यपदिष्टोक्तेः—क. [2] काशशब्द—क. [3] कारणत्वं—क. [4] कारणत्वं—क. [5] तथाच अकाशादि—क. [6] व्यक्तित्वेन—क. [7] सिद्धान्तितः—ख. [8] केवलमूल—क. [9] "यद्यप्यत्र" इत्यारभ्य "स्यादिति" इत्यन्तं—क.ख.घ. नास्ति

युक्तमेव । अत एव सूत्रे कारणत्वेन चाकाशादिष्विति निर्देशः भाष्येप्यवान्तरकारणत्वेनेति । अन्यथा आकाश इत्येवोभयत्र निर्देशः स्यादिति ॥ ४ ॥

---

[स्त्रीलिङ्गशब्दानामपि ब्रह्मवाचकत्वसमर्थनम्]

**॥ ओं ॥ १प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ ओं ॥ १-४-५**

न केवलं पुल्लिङ्गशब्दवाच्यः विष्णुः किन्तु प्रकृतिश्च=स्त्रीलिङ्ग-प्रकृत्यादिशब्दवाच्यश्च । कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात् । तथा सत्येव २"हन्तैतमेवेति" भगवतः सर्वशब्द[1]वाच्यताप्रतिज्ञायाः "यथा नद्यः" इति नदीसमुद्रदृष्टान्तस्योपपत्तेः । अन्यथा तदनुपपत्तेरिति सूत्रार्थः ॥

अत्र ३"एषा ह्येव प्रकृतिरविकृतिः" । ४"या प्राणेन संविशति, अदिति[2]र्देवतामयी"त्यादिश्रुत्युक्तप्रकृत्यादिशब्दाः न विष्णुवाचकाः । प्रकृत्यादिशब्दानां स्त्रीलिङ्गत्वात् । परमपुरुषे च तदयोगादिति प्राप्ते—

हरिरेव प्रकृत्यादिशब्दवाच्यः । "हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्तीति" श्रुतौ विष्णोः सर्वशब्दवाच्यत्वं प्रतिज्ञाय तत्रैव

---

१ समाकर्षादित्यादिसूत्राष्टकस्य तत्त्वप्रदीपादिग्रन्थोक्तरीत्या कारणत्वेनेत्यधिकरण-शेषत्वात् पृथक् तत्तात्पर्यं न सङ्गृहीतम् ।

२ ब्रह्मसूत्रभाष्ये आचार्यैः एतदधिकरणे उदाहृतेयं श्रुतिः ।

३ (१) गीताभाष्ये द्वादशाध्याये आचार्यैः इयं श्रुतिरुदाहृता ।

(२) भाष्यदीपिकायां वत्सश्रुतित्वेनोदाहृतेयं श्रुतिः ।

४ कठश्रुतिः । २—१—७

[1] वाच्यतां प्रतिज्ञाय—क. [2] देवमाता—क.

## प्रकृतिः

"यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रम[1]भिविशन्ति । एवमेवैतानि नामानी"ति नदीसमुद्रदृष्टान्ताभिधानात् । अन्यथा प्रतिज्ञा[2]दृष्टान्तोपरोधात् । न च स्त्रीशब्दानुपपत्तिः । भगवतः स्त्रीरूपस्यापि सत्त्वात् । न चात्र मानाभावः । १"एष स्त्री, एष पुरुषः, एष प्रकृतिरिति" श्रुतेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**प्रकृतिरिति** ॥ प्रकृत्यादिस्त्रीशब्दवाच्य इत्यर्थः ॥ ५ ॥

———

[निषेधादिबोधकशब्दानां ब्रह्मणि समन्वयोपपादनम्]

**॥ ओं ॥ एतेन सर्वे व्याख्याताः व्याख्याताः ॥ ओं ॥　　१-४-६**

एदेत=तदधीनत्वादिप्रागुक्तयुक्तिसमुदायेन, शून्यादिसर्वशब्दाः व्याख्याताः=भगवन्मुख्यवाचकतया प्रतिपादिताः, द्विरुक्तिः उक्तसाधारणार्थेति सूत्रार्थः ॥

अत्र २"असदेवेदमग्र आसीत्" इत्यादि[3]श्रुत्युक्ताः असदादिशब्दाः विष्णुवाचकाः तेषां निषिद्धमुखवाचित्वात् । परमात्मनश्च सद्रूपत्वेन तदयोगादिति प्राप्ते—

परमात्मैव सदादिशब्दवाच्यः । सर्वशब्दवाच्यत्वात् । न

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः उदाहृतेयं श्रुतिः ॥

२ छान्तोग्योपनिषत् । ६—२—२

[1] मिसंविशन्ति—क.　[2] दृष्टान्तानुरोधात्—ग.　[3] श्रुत्युक्तासदादि ग. श्रुत्युक्तात्मनश्च सद्रूपत्वेन—ख.

**शून्यमेव च ॥**

**इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः ।**
**शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः ॥**

---

चोक्तानुपपत्तिः । निषेधमुखवेद्यत्वाभावेऽपि १"एष ह्येव शून्यः, एष ह्येव तुच्छः, एष ह्येवाव्यक्तोऽदृश्य" इत्यादिश्रुत्या, २"शमूनं कुरुते विष्णुरदृश्य-स्सन् परः स्वयम् । तस्माच्छू[1]न्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते" ॥ इत्यादिस्मृत्या च तच्छब्दवाच्यत्वोक्तेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**शून्यमेव चेति** ॥ च शब्दः पूर्वोक्त-समुच्चायकः । एवकारोऽयोगव्यवच्छेदकः । जनार्दनः शून्यादिशब्द-वाच्य एवेत्यर्थः । [2]अथवा एवकारोऽन्ययोगव्यवच्छेदकः । स च भिन्नक्रमः, जनार्दन एव शून्यादिसर्वशब्दवाच्यः इत्यर्थः । एतत्पादार्थ-मुपसंहरति—**इत्यादीति** ॥ इति शब्दः पूर्वप्रकृतपरामर्शकः । इति पूर्वोक्ताः अव्यक्तादिशब्दाः आदयः येषान्ते तथा । इत्यादयश्च ते अन्यत्रनियताश्च, अन्यत्रप्रसिद्धाश्च, श्रुतिलिङ्गादिभिरिति शेषः । नाम-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः महोपनिषद्वाक्यत्वेनोदाहृतेयं श्रुतिः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः महाकौर्मपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकः ॥

स्वयं परः विष्णुः यस्मादसुराणां शं ऊनं कुरुते तस्मात् शून्य इति प्रोक्तः । तोदनात्तुत् इति प्रोक्तः । अदृश्यस्सन् छः इति उच्यते । छः = छन्नः, अदृश्य इत्यर्थः ॥

[1] न्यमिति—क. [2] "अथवा" इत्यारभ्य "इत्यर्थः" इत्यन्तं—क. नास्ति ।

लिङ्गात्मकैरिति च शेषः । [1]जनार्दन एव इत्यनुवर्तते । तथाच श्रुति-लिङ्गादिभिः अन्यत्रप्रसिद्धैरपि नामलिङ्गात्मकैः अव्यक्तादिशब्दैः जनार्दन एव मुख्यतया उदित इत्यर्थः । एतस्मिन्नध्याये अशेषशब्दसमन्वय[2]करण-फलमाह—**अत इति** ॥ यस्मात्स्वरवर्णपदवाक्यात्मकाशेषशब्दवाच्यः अतः अनन्तगुण इत्यर्थः । [3]ननु सर्वेषां शब्दानां परमात्मनि केवलरूढत्वे पर्यायत्वापत्या सर्वेषां शब्दानां प्रवृत्तिनिमित्तस्य एकस्यैव गुणस्य सिद्धेः कथमनन्तगुणत्वमित्यत आह—**यदिति** ॥ यस्माच्छब्दाः स्वरवर्णपद-वाक्यात्मकाः योगवृत्तयः योगवृत्तिमन्तः [4]यौगिकाः इत्यर्थः । [5]यद्वा योगेनावयवार्थसम्बन्धेन वृत्तिः [6]अवस्थितिः येषान्ते योगवृत्तयः यौगिका इत्यर्थः । अतोऽनन्तगुण इत्यनुषङ्गः ॥ ६ ॥

[7]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्म-
सूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहा-
चार्याणां निजशिष्येण शेषेण विरचितायां
तात्पर्यप्रकाशिकायां प्रथमाध्यायस्य
चतुर्थः पादः ॥
प्रथमाध्यायः सम्पूर्णः ॥१
श्री कृष्णार्पणमस्तु ॥

---

१ "साधारणसंवत्सरस्य कार्तिकबहुलचतुर्दश्यां (१४) "दावणगेरे" नगरे समापितम्" ।—ख. ॥

[1] जनार्दन इति—क. [2] कारण—ग. [3] ननु शब्दानां—क. [4] योगिका—ख. [5] यद्वा इत्यराभ्य "इत्यर्थः" इत्यन्तं—क. नास्ति ॥ [6] अवच्छिक्तिः—ख. [7] अयं श्लोकः—क.ख.ग. नास्ति ॥

## १अथ द्वितीयाध्यायस्य प्रथमः पादः

श्रीगुरुभ्यो नमः

### श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः ॥

हरिः ओम्

[1]पराशरात्मजः शक्तेः पौत्रः सत्यवतीसुतः ।
वशिष्ठनप्ता श्रीव्यासः शुकपुत्रोऽभिभासते ॥

प्रथमाध्याये भगवतः सकलश्रुतिसमन्वयेन अनन्तगुणपूर्णत्वं अभिहितं, तत्र युक्तिविरोधादिनोक्तसमन्वये निरोधिते दोषवानपि स्यादित्यतः युक्त्यादिविरोधपरिहारेण उक्तसमन्वयदृढीकरणद्वारा भगवतो निर्दोषत्व[2]प्रकटनाय द्वितीयाध्यायः प्रवृत्तः ॥

उक्तेऽर्थे विरोधः चतुर्विधः स्फुरति । युक्तिविरोधः, समयविरोधः, श्रुतिविरोधः, युक्त्युपेतश्रुतिविरोधभेदात् । [3]अत्र प्रथमे पादे प्राबल्याद्युक्तिविरोधाभावं दर्शयति । [4]तत्रापि प्रथमाधिकरणे स्मृतीनां युक्तिसमयादिरूपत्वेन पाशुपतादिस्मृतिविरोधाभावं दर्शयति ॥

---

१ इतः परं—ख. प्रतिः नास्ति ॥

[1] अयं श्लोकः—क.ग. नास्ति । [2] प्रतिपादनाय—ग.घ. [3] तत्र—ग.घ.
[4] "तत्रापि" इत्यारभ्य "दर्शयति" इत्यन्तं—क.ग. नास्ति ।

[परमात्मनः जगदादिकर्तृत्वे पाशुपतादिस्मृतिविरोधपरिहारः]

**॥ ओं ॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ ओं ॥ २-१-१**

स्मृतीनां=सर्वज्ञरुद्रादिप्रणीतशैवादिस्मृतीनां, अनवकाशेन=निरवकाशत्वेन, प्राबल्यात् तद्विरोधेन विष्णुकर्तृ[1]त्वादिप्रतिपादकश्रुतेः अप्रामाण्यदोषप्रसङ्गादिति चेन्न । अन्यस्मृतीनां अतिसर्वज्ञविष्ण्वादिप्रतीतपञ्चरात्रादिस्मृतीनां अनवकाशेन ततोऽपि निरवकाशत्वेन अत्यन्तप्राबल्यात् तत्सहितश्रुतिविरुद्धशैवादिस्मृतीनामेवा[2]प्रामाण्यदोषप्र..ङ्गात् । तथाच न तद्विरोधः उक्तार्थस्येति सूत्रार्थः ।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, प्रमाणाभावात् । न च "यतो वे"त्यादिश्रुतिः प्रमाणमिति वाच्यम् । [3]तस्याः श्रुतेः यदि विष्णुकारणत्वे तात्पर्यं स्यात्तर्हि [4]सर्वज्ञरुद्रादिप्रणीतपाशुपतादिस्मृतिविरोधेन अप्रामाण्याख्यदोषप्रसङ्गादिति तर्कविरोधेन विष्णुकारणत्वे तात्पर्यायोगात् । तथाच न विष्णोः जगत्कारणत्वं युक्तमिति प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं १"यतो वे"त्यादिश्रुतेः । न च पाशुपतादि[5]स्मृतिविरोधेनाप्रामाण्यात् [6]न श्रुतेस्तत्र तात्पर्यमिति वाच्यम् । श्रुतिविरोधेन स्मृतीनामेव अप्रामाण्यात् । [7]न च स्मृतिभ्यः श्रुतेराधिक्याभावेनाबाधकत्वं पञ्चरात्रादिस्मृत्यनुकूलत्वेन शैवस्मृतिभ्यः श्रुतेराधिक्यसिद्धेः न च तदानुकूल्येऽपि कथं श्रुतेराधिक्यमिति वाच्यम् । तासां

१ तैत्तिरीयोपनिषत् । ३—१—१

[1] त्वादिबाधक—ग. [2] प्रामाण्यादिदोष—ग. [3] अस्याः—घ [4] सर्वज्ञप्रणीत—घ. [5] स्मृतीनामेवाप्रामाण्यात—क. [6] "न च श्रुतेः" इत्यारभ्य "अप्रामाण्यात्" इत्यन्तं—क॰ नास्ति ॥ [7] ननु—क.

विष्ण्वादिभिः नितरां सर्वज्ञैः प्रणीतत्वात् । कुतो विष्ण्वादीनां रुद्रादिभ्यो[1]ऽप्याप्ततमत्वं इति चेन्न । तदुक्तस्य श्रुतौ संवाददर्शनात् । रुद्राद्युक्तस्य संवादहीनत्वात् । तथाच वैष्णवस्मृतीनां निरवकाशत्वेन प्राबल्यात् तद्विरोध एव शैवस्मृतीनामप्राणाण्यात् सुतरां तत्सहायवत्या श्रुत्या विरोधे अप्रामाण्यमिति युक्तमेव विष्णोः जगन्कारणत्वं इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह - **श्रौतेति** ॥ स्मृतयः पाशुपताद्याः हरेः गुणान् जगत्कारणत्वादीन् निषेध्दुं न शक्नुयुः । कुतः ? स्मृतिविरुद्धत्वत् । पञ्चरात्रादिवैष्णवश्रुतिबाधितत्वात् । ननु स्मृतित्वाविशेषात् कथं बाध्यबाधकभावः इत्यत उक्तं—**श्रौतेति** ॥ श्रुतिसंवादित्वेन श्रुतिसम्बन्धिनीभिः पञ्चरात्रादिस्मृतिभिः विरुद्धत्वादित्यर्थः । [2]तथाच पञ्चरात्रादिस्मृतीनां सर्वज्ञतमविष्णुप्रत्यक्षमूलत्वेन श्रुतिसंवादित्वेन च प्राबल्यात् तद्विरोध एव शैवस्मृतीनां अप्रामाण्यात् सुतरां तत्सहायवत्या श्रुत्या विरोधेऽप्रामाण्यमिति न तद्विरोध उक्तार्थस्येति भावः ॥ १ ॥

———

[श्रुत्यादिप्रामाण्ये युक्तिविरोधपरिहारः]

**॥ ओं ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ओं ॥ २–१–२**

[3]अस्य=वेदादेः, विलक्षणत्वात्=पाशुपतादिस्मृतितो नित्यत्वादिवैलक्षण्यात् तथात्वं पाशुपतादिस्मृतिवदप्रामाण्यं नास्ति । कुतः ? शब्दात्= "वाचा विरूपनित्यया" इति श्रुतेः । च शब्दात् "अनादिनिधना नित्येति" स्मृतेः इति सूत्रार्थः ।

---

[1] प्याप्तत्वं ग. [2] "तथाच" इत्यारभ्य "भावः" इत्यन्तं—क. ग. नास्ति ।
[3] तस्य—क.

**निषेद्‍धु शक्नुयुर्वेदाः नित्यत्वान्मानमुत्तमम् ॥**

अत्र वेदो न प्रमाणम् । तदुक्तानुष्ठानेऽपि फलानुपलम्भादिति प्राप्ते—

वेदः प्रमाणमेव अपौरुषेयत्वात् । न चासिद्धिः । १"वाचा विरूपनित्यया" इत्यादिश्रुतेः । २[1]"अनादिनिधता नित्या वागुत्सृष्टा स्वयम्भुवा" इति स्मृतेश्च । न च फलविसंवादादप्रामाण्यम् । अधिकारिणां फलोपलम्भेन तदनुपलम्भस्य कर्तृवैगुण्यादि[2]निमित्तकत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**वेदा इति** ॥ उत्तमं मानं प्रत्यक्षानुमानापेक्षया मुख्यं प्रमाण, कुतः ? नित्यत्वात्, अपौरुषेयत्वादित्यर्थः ॥ २ ॥

---

[आपाततः मृदब्रवीदित्यादिवाक्यावगतार्थविरोधपरिहारः]

**॥ ओं ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ओं ॥ २–१–३**

अभिमानिव्यपदेशः "मृदब्रवीत् आपोऽब्रुवन्' इत्यादौ अभिमानिदेवताया एव व्यपदेशः न जडस्य । येन युक्तिविरोधः स्यात् । ननु अभिमानिदेवतायाः एकदेशवृत्तित्वनिर्देहत्वयोः अङ्गीकारे क्रमेण देवताङ्गीकारवैय्यर्थ्यवचनाद्ययोगौ स्यातां, व्याप्तिमङ्गीकृत्य सदेहत्वाङ्गीकारे अनु-

१ ऋग्वेदः । ८—६४—६

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः उदाहृतेयं श्रुतिः ॥

1 "अनादि" इत्यारभ्य "स्मृतेश्च" इत्यन्तं—घ. नास्ति ॥ 2 निमित्तत्वात्—क.

देवतावचनादापो वदन्तीत्यादिकं वचः ॥

पलम्भबाध इत्यत उक्तं—**विशेषानुगतिभ्यां इति** ॥ सामर्थ्यविशेषदेह-सहितव्याप्तिभ्यां अनुपलम्भो[1]पपत्तेरिति सूत्रार्थः ॥

अत्र वेदो न प्रमाणं १"आपोऽब्रुवन्, मृदब्रवीत्, तत्तेज ऐक्षत, ओषधयः संवदन्त" इत्यादिवेदवाक्यानां, अबादिकं न वदति जडत्वादि-त्यादियुक्तिविरुद्धत्वादिति प्राप्ते —

वेदो नाप्रमाणं अपि तु प्रमाणमेव । आपोऽब्रुवन्नित्यादिश्रुतेः अभिमानिदेवतापरत्वेन युक्तिविरोधाभावादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**देवता इति** ॥ आपो वदन्तीत्यर्थानुवादः, [2]शाखान्तरस्थं वाक्यं वा । आपो वदन्तीत्यादिकं वचः वेदवाक्यं अयुक्त-वादि युक्तिविरुद्धार्थवादि न भवति । कुतः देवतावचनात् । अभिमानि-देवतावाचकत्वात् । आदिपदेन "ता आप [3]ऐक्षन्त" इत्यादेः ग्रहणम् ॥ ३ ॥

---

[ब्रह्मणः जगत्कर्तृत्वे प्रागभावकर्तृत्वसाधकयुक्तिविरोध परिहारः]

## ॥ ओं ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ओं ॥ २-१-४

"असदेवे"ति श्रुतेः असत्कारणमिति चेन्न । प्रतिषेधमात्रत्वात् । प्रतिषेधबुद्धिमात्रविषयत्वात् । त्रैकालिकनिषेधप्रतियोगित्वादिति यावत् । इति सूत्रार्थः ॥

---

१ शतपथब्राह्मणम् । ६—१—३

[1] पपत्तिरिति—ग. [2] शाखान्तरवाक्यं—क. [3] ऐक्षन्तेत्यादिग्रहणम्—क

**नायुक्तबाध्यसन्नैव कारणं दृश्यते क्वचित् ।**
**असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ॥**

---

अत्र न विष्णोः जगत्कारणत्वं युक्तम् । प्रमाणाभावात् । न चोक्तश्रुतिः प्रमाणम् । १"असदेवेदमग्र आसीदि"ति श्रुत्या असतोऽपि कारणत्वोक्तेः इति प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं न त्वसतः । निस्स्वरूपत्वात् । न हि शशविषाणस्य किञ्चित्प्रति कारणत्वं सम्भवति । न च श्रुतिविरोधः । २"एतेन सर्वे व्याख्याता" इति असदादिशब्दानां विष्णुविषयत्वोक्तत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह – **असन्नैवेति** ॥ असत् शशविषाणादिकं "क्वचित्" [1]देशे काले वा, कचित्कार्ये [2]कारणं भवदिति शेषः । नैव दृश्यते । असतो जगत्कारणत्वमप्रामाणिकमिति भावः । ननु असत्कारणत्वे श्रुतिसद्भावात् कथं प्रमाणाभावः इत्यतः [3]श्रुतेः अर्थान्तरं वदन् प्रसङ्गाज्जीवकारणकत्वप्रधानकारणकत्व-अकारणकत्वादिप्रतिपादकश्रुतिमूलकयुक्तिविरोधपरिहाराय तासामप्यर्थान्तरमाह— **असज्जीवेति** ॥ असज्जीवप्रधानादिशब्दाः असज्जीवप्रधानादिप्रतिपादिकाः श्रुतयः इत्यर्थः ॥ ३"असदेवेदमग्र आसीत् । असतस्सदजायत ।" "जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः । जीवे तु [4]लयमिच्छन्ति न जीवात्कारणं परम्" ॥ "प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति । प्रधाने लय[5]मभ्येति न ह्यन्यत्कारणं

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः उदाहृता श्रुतिः ।

२ ब्रह्मसूत्रम् । १—४— ६

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः असज्जीवप्रधानादिशब्दपदोपात्ताः चतस्रः श्रुतयः ॥

[1] देशे वा—क. [2] कारणं वेति शेषः—क. [3] "श्रुतेः" इत्यारभ्य "अर्थान्तरमाह" इत्यन्तं—घ. नास्ति ॥ [4] लयमृच्छन्ति—क. [5] मप्येति—घ.

**वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ॥**

मतम् ।" "अकस्माद्धीदमाविरासीत् । अकस्मात्तिष्ठति । अकस्माल्लयमभ्युपैति" इत्यादिपदोपात्तश्रुतिः । तथाच असज्जीवप्रधानादिशब्दाः=[1]"असदेवेदमग्र आसीदि"त्यादिश्रुतयः, ब्रह्मैव विष्णुमेव कारणत्वेन वदन्तीत्यर्थः । क्वापि प्रदेशे अपरं असदादिकं कारणत्वेन [2]न वदन्तीत्यर्थः ॥

ननु असदादिशब्दानां ब्रह्मवाचकत्वं कुतः इत्यत आह —**पूर्णगुण इति** ॥ यत इति शेषः । [3]यतो हरिः [4]असदादिसर्वशब्दप्रवृत्तिनिमित्तगुणैः पूर्ण इत्यर्थः । अन्यथा गुणपूर्णत्वं न [5]स्यात् । [6]गुणपूर्णत्वे हेतुः—**सर्वकर्तृत्वादिति** ॥ तत्रापि हेतुः—**स्वातन्त्र्यादिति** ॥ ४ ॥

---

[जीवेश्वरैक्यनिरासः]

**॥ ओं ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ ओं ॥ २–१–५**

भोक्त्रापत्तेः=भोक्तुर्जीवस्य, आपत्तेः=ब्रह्मत्वप्राप्तेः । १"परेऽव्यये सर्व एकीभवन्ती"त्यादौ व्यपदेशात् तयो[7]रविभागः भेदाभावः ऐक्यमिति चेन्नेति शेषः । स्यात् लोकवत् उदके सिक्तोदकान्तरस्यैक्यव्यपदेशवदयं व्यपदेशः स्यादिति सूत्रार्थः ॥

अत्र न विष्णोः [8]जगत्कर्तृत्वादिकं युक्तं तस्य जीवाभिन्नत्वात् ।

---

१ आथर्वणोपनिषत् । ३—२—७

[1] "असदेव" इत्यारभ्य "प्रदेशे" इत्यन्तं—घ. नास्ति । [2] "न वदन्तीत्यर्थः" । इत्यतः परं "यद्यप्यसच्छब्दस्यैव समन्वयो वाच्यः । तस्यैव प्रकृतत्वात् । तथापि जीवादिशब्दग्रहणं दृष्टान्तार्थम् । यथा जीवादिशब्दाः ब्रह्मवाचकाः एवं असच्छब्दोपीति । अथवा प्रासङ्गिकमेतदित्यदोषः ॥ [3] अतो—क. [4] असदादिशब्द–क. [5] स्यादित्यर्थः ॥ ४ ॥–क. स्यादिति भावः ॥ ४ ॥—ग. [6] "गुण" इत्यारभ्य "इति" इत्यन्तं —क.ग. नास्ति । [7] रमिभागः—ग. [8] जगत्कारणत्वा—क.

जीवाभेद एव कुत इति चेन्न । "परेऽव्यये सर्व एकीभवन्ती"ति श्रुतेरिति प्राप्ते—

न विष्णोः [1]जगत्कर्तृत्वादिकं विरुद्धं, जीवेश्वरयोरभेदाभावात् । न च श्रुतिविरोधः । [2]स्थानैक्यालम्बनत्वेन जलैकीभावोक्तिवदुपचरितत्वोपपत्तेः इति सिद्धान्तः कृतः ॥

एतदधिकरणतात्पर्यस्य [3]अन्यश्च [4]जीवतः इति प्रथमतृतीयत्रयोदशनय एवोक्तत्वात् पृथक्तात्पर्यानुक्तिर्न दोषः ॥ ५ ॥

———

[सृष्ट्यर्थं विष्णोः स्वतन्त्रसाधनानपेक्षत्वप्रतिपादनम् ]

**॥ ओं ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ ओं ॥　२-१-६**

तदनन्यत्वं=स्वतन्त्रसाधनस्य ब्रह्मान्यत्वं ब्रह्मैकमेव स्वतन्त्रसाधनं अन्यत्साधनं तदधीनं कुतः आरम्भणशब्दादिभ्यः । "किं स्विदासीदि"त्युपादानाद्याक्षेपकश्रुतेः । आदिशब्दात् परतन्त्रत्वस्वतन्त्रत्वसाधनसत्ता[5]प्रदत्वयुक्तिभ्यश्चेति सूत्रार्थः ॥

अत्र जगत्सृष्ट्यादिकं स्वतन्त्र[6]साधनसापेक्षम् । विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वात् घटादिसृष्टिवदिति युक्तिसिद्धत्वात् । अन्यथा तद्विरोधात् । घटादिसृष्टौ [7]मृदादीनि खलु स्वतन्त्रसाधनानि तानि विना सृष्ट्यनुपपत्तेः । अतः ब्रह्म स्वतन्त्र[8]साधनसापेक्षमेव सृष्ट्यादि करोतीति स्वातन्त्र्येण सर्वकर्तृत्वाभावात् न तस्य जन्मादिकारणत्वेन सर्वगुणपूर्णत्वसिद्धिरिति प्राप्ते—

घटादिसृष्टेः स्वतन्त्रबहुसाधनसापेक्षत्वेऽपि [9]जगत्सृष्ट्यादि न तथा

———

[1] जगत्कारणत्वा—क.　[2] स्थानैक्याद्यालम्ब—ग.　स्थादैक्यालम्ब—क.
[3] अन्यत्र—क.　[4] जीवः—ग.　[5] प्रदत्वाद्यक्ति—क.　[6] साधनापेक्षा—क.
[7] मृदादिनिखिल—क.[8] साधनापेक्षं सृ—क.　[9] न जगत्सृष्टिस्तथा—ग.

कल्प्या ! किन्तु स्वतन्त्रसाधनरहितैव । न चोक्तानुमानविरोधः । १"किं स्विदासीदधिष्ठानमारम्भण"मिति श्रुत्या तथेश्वरः स्वतन्त्रसाधनरहितः साधनसत्तादिप्रदत्वात् । व्यतिरेकेण कुलालवदित्यादियुक्तिभिश्च विरुद्ध-त्वात् । [1]ननु २"अद्भ्यस्सम्भूतः पृथिव्यै रसाच्चे"त्यादिना ईश्वरातिरिक्तां स्वतन्त्रसाधनप्रतीतेः, कथ तद्राहित्यं भगवतः इति चेन्न । तेषां साधनानां तदधीनत्वात् । कुतः । ३"काल आसीत्, पुरुष आसीत्, परम आसीत्, तद्यदासीत्, तदधीनमासीत्, तदावृतमासीत्" इति श्रुतेः ।

४"प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः ।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः" ॥

इति स्मृतेश्च । अतः स्वातन्त्र्येण सर्वकर्तृत्वे [2]सिद्धे विरोधगन्धाभावात् युक्तं सर्वगुणपूर्णत्वमिति सिद्धान्तः कृतः ॥ तस्य तात्पर्यमाह । **स्वातन्त्र्यात्सर्वकर्तृत्वादिति** ॥ स्वतन्त्रसाधन[3]नैरपेक्षेण सर्वजगत्सृष्ट्यादि-कर्तृ[4]त्वात् हरिः पूर्णगुणः इत्यनुषङ्गः ॥ ६ ॥

---

[स्वातन्त्र्येण जीवकर्तृत्वनिरासः]

**॥ ओं ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ ओं ॥** २-१-७

इतरव्यपदेशात्=जीवादिश्रुतौ जीवस्य करण[5]त्वेन व्यपदेशात्, यदि

१ ऋग्वेदः । १०—८१—२

२ चित्युपनिषत् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे काषायणश्रुतित्वेनोदाहृता श्रुतिः ।

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौर्मपुराणवाक्यत्वेनोदाहृतोऽयं श्लोकः ॥

[1] "ननु" इत्यतः "स्मृतेश्च" । इत्यन्तं —क. ग. नास्ति । [2] "सिद्धे"—ग. घ. नास्ति । [3] निरपेक्षेण—क नैरपेक्ष्येण—घ. [4] त्वात् युक्तं गुणपूर्णत्वमित्यर्थः ॥ ६ ॥—घ. [5] त्वव्यप—क.

[1]जीवः स्वतन्त्रकर्ता स्यात्तर्हि हिताकरणादिदोषप्रसक्तिः=हिताकरणं [2]अहितकरणं च न स्यादिति सूत्रार्थः ॥

अत्र न विष्णोः [3]जगत्कर्तृत्वं युक्तं, जीवस्यैव [4]स्वतः कर्तृत्वानुभवात् । [5]स हि यत्कार्यमारभते तत्समापयतीत्यनुभूयते । न चायमनुभवो भ्रान्तिः । बाधकाभावात् । १"जीवाद्भवन्ति भूतानी"ति श्रुतेश्च । अतः [6]जीव एव स्वातन्त्र्येण कर्तेति प्राप्ते—

न जीवः स्वातन्त्र्येण कर्ता [7]अपि तु परमेश्वरः । तर्कविरुद्धत्वात् । तथाहि । यदि स्वातन्त्र्येण कर्ता, स्यात् तर्हि हिताकरणं अहितकरणं च न स्यात् । विद्येते च ते । अतः नासौ स्वतन्त्रकर्ता । [8]ननु जीवस्य स्वतः कर्तृत्वाभावोऽयुक्तः । स हि यत्कार्यमारभते तत्समापयतीत्युपसंहारदर्शनात् इति चेन्न । तत्कार्योपसंहारस्येश्वरनिमित्तत्वात् । न च जीवे दृश्यमानत्वेन जीवस्यैवासाविति वाच्यम् । गोषु दृश्यमानस्यापि क्षीरस्य, २"अन्नं रसादिरूपेण प्राणः परिणयत्यसौ" । इति वचनात्, प्राणाधीनत्ववत्, ३"य आत्मानमन्तरो यमयती"ति श्रुतेः । ४"नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः" । इत्यादिस्मृतेश्च जीवे दृश्य-

---

१ ब्रह्मसूत्रभाष्ये २—१—४ उदाहृतेयं श्रुतिः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं वचनम् ।

३ बृहदारण्यके अन्तर्यामिब्राह्मणगता श्रुतिः ॥

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः ॥

[1] जीवादिः—क. [2] "अहितकरणं"—ग. नास्ति । [3] जगत्कारणत्वं—क ग. [4] ततः—ग. "स्वतः"—घ. नास्ति ॥ [5] "स हि" इत्यतः परं "भावात्" इत्यन्तो भागः—क.ग. नास्ति । [6] "जीव एव कर्तेति"—घ. नास्ति । तत्स्थाने "श्रुत्यादिबलाज्जीवस्यैव स्वतन्त्रकर्तृत्वात् असम्भवि जन्मादिकारणत्वलक्षणं ब्रह्मणः इति" —घ. वर्तते । [7] "अपि तु" इत्यारभ्य "कर्ता" इत्यन्तं—क. नास्ति । [8] "ननु" इत्यारभ्य "भगवदधीनत्वात्" इत्यन्तं—क. ग. नास्ति ॥

मानस्यापि कार्योपसंहारस्य भगवदधीनत्वात् । किञ्च जीवः स्वतन्त्रः कर्ता इति वदन् प्रष्टव्यः, किं जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्तते, उतांशेन । नाद्यः । एकेनाङ्गुलिमात्रेण तृणादानादावपि पूर्णशक्त्या प्रवृत्तिप्रसक्तेः । [1]न द्वितीयः । [2]अनंशत्वप्रतिपादकश्रुतिविरोधात् । न च पूर्वोक्तश्रुतिविरोधः । तस्याः भगवत्परत्वस्य साधितत्वात् । अतो जीवस्य स्वतः कर्तृत्वानुपपत्तेः युक्तं हरेः स्वातन्त्र्येण जगत्कर्तृत्वमिति सिद्धान्तः कृतः ॥

एतत्तात्पर्यस्यापि असज्जीवेत्यत्रैव उक्तत्वात् पृथक् [3]तात्पर्यानुक्तिर्न दोषः ॥ ७ ॥

---

[ब्रह्मणः जगत्कर्तृत्वविषये जीवकर्तृत्वपक्षोक्तदोषनिरासः]

## ॥ ओं ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ ओं ॥ २–१–८

ईश्वरस्य कर्तृत्वाङ्गीकारे जीववत् कृत्स्नप्रसक्त्यादिदोषो न [4]शङ्कनीयः । कुतः? श्रुतेः । १"योऽसौ विरुद्धोऽविरुद्ध" इत्यादिना लोकविरुद्धधर्मणा [5]मीश्वरे अविरुद्धत्वस्य श्रूयमाणादेव । ननु श्रौतमपि युक्तिविरुद्धं [6]कथमुपपद्यते इत्याशङ्कापरिहारायोक्तं—"शब्दमूलत्वादि"ति । शब्दः मूलं प्रमाणं यस्य तस्य भावस्तत्त्वं, तस्माच्छब्दैकसमधिगम्यत्वादिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पैङ्गिश्रुतित्वेनोदाहृतम् ॥

[1] न द्वितीयः । अंशाभावात् । न च सांशत्वमङ्गीकर्तुं शक्यम् । "अथ यः सः जीवः स नित्यो निरवयवो ज्ञातेति" निरवयवश्रुतिव्याकोपात् । तस्माज्जीवस्य स्वतः कर्तृत्वानुपपत्तेः युक्तं हरेः जगज्जन्मादिकारणत्वलक्षणमिति सिद्धान्तः कृतः ॥—घ.
[2] "अनंशत्वप्रतिपादक" इत्यतः परं "सिद्धान्तः कृतः" इत्यन्तो भागः—घ. नास्ति ॥
[3] तात्पर्यानुपपत्तिर्न दोषः —ग. [4] शङ्कयः—क. [5] मीशे—ग. [6] कथमुपेयम्—ग.

अत्र न विष्णोः [1]जगत्स्रष्टृत्वं युक्तम् । जीवकर्तृत्व[2]पक्षोक्तदोषस्यापि सम्भवात् । तथाहि । किमीश्वरः कार्येषु सर्वशक्त्या प्रवर्तते, तदेकदेशेन वा । नाद्यः । तृणादानादावपि कृत्स्नप्रसक्तेः । न द्वितीयः । अनंशत्वप्रतिपादक१ "नेह नानास्ति किञ्चने"त्यादिश्रुतिव्याकोपादिति प्राप्ते—

नेश्वरस्य सृष्टिकर्तृत्वे युक्तिविरोधः । श्रुत्युक्तत्वात् । ननु श्रुत्युक्तत्वेऽपि युक्तिविरुद्धं कथमुपेतुं शक्यं, अन्यथा जीवेऽपि प्रत्यक्षबलात् अभ्युपगन्तव्यं अविशेषादिति चेत् । मैवम् । भवेत् जीवप्रतिबन्द्या ईश्वरे युक्तिविरोधः, यद्यविशेषो भवेत् । न चैवं, शब्दैकसमधिगम्यत्वविचित्रशक्तिमत्त्वादेः । युक्तिविरोधपरिहारोपयोगिनः परमेश्वरे [3]श्रुतिसिद्धत्वात्, जीवे तदभावादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**पूर्णगुण इति** ॥ शब्दैकसमधिगम्यत्वविचित्रशक्तिमत्त्वादिगुणपूर्ण इत्यर्थः ॥ ८ ॥

---

[ब्रह्मणः जगत्कर्तृत्वेऽपि प्रयोजननैरपेक्ष्योपपादनम् ]

**॥ ओं ॥ न प्रयोजनवत्त्वात् ॥ ओं ॥　२–१–९**

पूर्णानन्दत्वेन भगवत्कर्तृत्वं न प्रयोजनवत्त्वादिति सूत्रार्थः ॥

अत्र न विष्णोः स्रष्टृत्वादि युक्तं, तथाहि । किं विष्णुः प्रयोजनोद्देशेन सृष्ट्यादिकं करोति, तदनुद्देशेन वा । नोभयथापि सर्वकर्तृत्वम् । आद्ये अपूर्णत्वं स्यात् । द्वितीये प्रवृत्तेरयोगादिति प्राप्ते—

---

१ छान्दोग्योपनित्षष्ठाध्यायः ।

[1] जगत्कारणत्वं—क.　[2] पक्षोक्तस्यापि—ग.　पक्षोक्तदोषस्यात्रापि—घ.

[3] श्रुत्यादिसिद्धत्वात्—क.

युक्तं विष्णोः सर्वकर्तृत्वं तस्य पूर्णानन्दत्वेन [1]प्राप्तप्राप्तव्यतया फलोद्देशेन प्रवृत्त्यनङ्गीकारात् । [2]न चात्र मानाभावः । १"देवस्यैषः स्वभावोऽयं आप्तकामस्य का स्पृहा" इति श्रुतेः । न च फलानुद्देशे प्रवृत्त्यनुपपत्तिरिति वाच्यम् । लोकवल्लीलयैव प्रवृत्त्युपपत्तेः । न हि लीला [3]प्रयोजनान्तराय भवति । [4]मत्तस्य नृत्तगानादिलीलायाः प्रयोजनाभावेऽपि दर्शनादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**पूर्णगुण इति** ॥ आनन्दादिगुणपूर्णः इत्यर्थः । पूर्णानन्दोऽपि भगवान् लोकानुग्रहायैव सृष्ट्यादिक्रीडां करोतीति न काचिदनुपपत्तिरिति भावः ॥ ९ ॥

---

[भगवतः वैषम्यनैर्घृण्यदोषपरिहारः]

## ॥ ओं ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ओं ॥ २–१–१०

भगवतः वैषम्यनैर्घृण्ये न स्तः, कुतः? सापेक्षत्वात्=कर्मसापेक्षत्वात् । कुत इत्यत उक्तं—**तथाहि दर्शयति इति** ॥ हि यतः २"पुण्येन पुण्यं लोकं नयती"त्यादिश्रुतिः तथा दर्शयतीति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कर्तृत्वं युक्तं । तथाहि । किमसौ प्राणिकर्म[5]सापेक्षः सृष्ट्यादि करोति । तदनपेक्षो वा । नाद्यः । नियमेन

---

१ माण्डूक्योपनिषत् । २–९

२ षट्प्रश्नोपनिषत् । ३–७

[1] प्राप्तव्यतया—क. [2] "न चात्र' इत्यारभ्य "श्रुतेः" इत्यन्तं क.ग. नास्ति । [3] प्रयोजनाय—क. [4] "मत्तस्य" इत्यारभ्य "कृतः" इत्यन्तं—क. नास्ति ॥ [5] सापेक्षकः—क.

कर्मापेक्षया प्रवर्तमानस्य अस्वातन्त्र्यापातात् । द्वितीये वैषम्यनैर्घृण्ये स्याताम् । निर्निमित्तं प्राणिनां विभागेन सुखादि[1]प्रदानादिति प्राप्ते—

युक्तमेव विष्णोः जगत्कर्तृत्वम् । न चोक्तदोषप्रसङ्गः । अनादिकर्मापेक्षया फलदातृत्वाङ्गीकारेण वैषम्यादिदोषाभावात् । नन्वथापि ईश्वरस्य कर्मापेक्षया न फलदातृत्वं युक्तं, अस्वातन्त्र्यप्रसङ्गादिति चेन्न । ईश्वरस्य कर्मसापेक्षत्वेऽपि [2]स्वातन्त्र्याहानेः । स्वाधीनसापेक्षायाः स्वातन्त्र्याविरोधित्वात् । न च कर्मणः तदधीनत्वे मानाभावः । १ "द्रव्यं कर्म च कालश्चे"त्यादेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **सर्वकर्तृत्वादिति** ॥ कर्मापेक्षयेति शेषः । तथाच कर्मापेक्षया सर्वस्य सृष्ट्यादेः कर्तृत्वात् न वैषम्यादि[3]दोषप्रसङ्गः इति भावः ॥ १० ॥

---

[नारायणस्य सर्वगुणपरिपूर्णत्वनिगमनम्]

## ॥ ओं ॥ सर्वधर्मोपपत्तेश्च ॥ ओं ॥ २-१-११

सर्वधर्माणां ज्ञानानन्दादिसर्वगुणानां ईशे उपपत्तेः स्वतन्त्रत्वाद्युपपत्तिसिद्धत्वात् । च शब्दात् २ "गुणाः श्रुताः" इति श्रुतेश्चेति सूत्रार्थः ॥

अत्र न विष्णोः गुणपूर्णत्वं युक्तं, सर्वेषां चेतनानां अपूर्णत्वनियमात् । [4]अस्यापि चेतनत्वेन अपूर्ण[5]तायाः अवश्यंभावित्वात् अन्यथाऽतिप्रसङ्गादिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं प्रमाणम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं प्रमाणम् ।

[1] प्रदानसम्भवात्—घ. [2] न स्वातन्त्र्यहानिः—क. [3] दोष इति—ग.घ.

[4] तस्यापि—क. [5] तावश्यंभावात्—ग.

नायुक्तं विष्णोः गुणपूर्णत्वं, तस्य चेतनत्वेऽपि स्वातन्त्र्यादिना गुणपूर्णत्वोपपत्तेः । [1]स्वातन्त्र्यवतः गुणपूर्णत्वनियमात् इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**स्वातन्त्र्यात् पूर्णगुण इति** ॥ विष्णुः सर्वगुणपूर्णः स्वतन्त्रत्वात् व्यतिरेकेण देवदत्तवत् इत्यर्थः ॥

पादार्थमुपसंहरति—**नायुक्तं तदिति** ॥ तत् तस्मात् सकलयुक्तिविरोधानां परिहृतत्वादित्यर्थः । श्रुतिः = जगत्कारणत्वप्रतिपादिका श्रुतिः अयुक्तं युक्तिविरुद्धं न [2]वदेदित्यर्थः ॥ ११ ॥

[3]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां द्वितीयाध्यायस्य
प्रथमः पादः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

[1] स्वातन्त्र्यादिमतः—क. [2] वेदादीत्यर्थः — ग. [3] अयं श्लोकः—क.ग. नास्ति ॥

## अथ द्वितीयाध्यायस्य द्वितीयः पादः

श्रीगुरुभ्यो नमः

भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधाद्वचनं वैदिकं शङ्कयतां व्रजेत् ॥

---

हरिः ओम्

[1]विरुद्धधर्मधर्मित्वं श्रौतं ज्ञापयितुं सताम् ।
नृसिंहरूपं बिभ्राणो विभिन्द्यान्मत्तमस्ततिम् ॥

समन्वये [2]समयाविरोधं [3]दर्शयत्यस्मिन् पादे ।

[प्रकृतेः जगत्कर्तृत्ववादिनां सांख्यानां मतस्य निरासः]

॥ ओं ॥ रचनानुपपत्तेश्च नानुमानं ॥ ओं ॥ २-२-१

अनुमानपरिकल्पितं प्रधानं न जगत्कर्तृ । कुतः ? रचनानुपपत्तेः अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेः । चशब्देन साधकमानाभावाच्चेति समुच्चीयत इति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कर्तृत्वं युक्तं, [4]प्रकृतेरेव महदादिकारणत्वात् । भवितव्यं खलु कार्येण स्वसदृशकारणवतैव, घटादौ दर्शनात् । न हीश्वरस्य महदादिसादृश्यं भवद्भिरभ्युपेयते । न च प्रकृतिप्रेरकत्वेन ईश्वरोऽङ्गीकर्तव्यः, केवलप्रकृतेरेव [5]कर्तृत्वाद्यभ्युपगमात् इति निरीश्वरसांख्य-मतेन पूर्वपक्षे प्राप्ते—

---

[1] अयं श्लोकः—क.ग. नास्ति । [2] विरोधाभावं—क. समन्वयविरोधाभावं—ग. [3] प्रदर्शयति – ग.घ. [4] "प्रकृतेरेव" इत्यारभ्य "कर्तव्यः" इत्यन्तं—क.ग नास्ति । [5] कर्तृत्वाभ्युप—क.

युक्तमेव विष्णोः सर्वकर्तृत्वं न प्रधानस्य । तस्याचेतनत्वेन घटवत् [1]स्वतः प्रवृत्त्ययोगेन कर्तृत्वायोगात् । [2]न चेश्वरस्य महदादिसारूप्याभाव इति वाच्यम् । उपादानस्यैव तदङ्गीकारात् । ईश्वरस्य निमित्तत्वादिति सिद्धान्तः कृतः ॥ १ ॥

---

[ईश्वरसाहाय्येन प्रधानस्यैव जगत्कर्तृत्ववादिनां सेश्वरसांख्यानां मतस्य निरासः]

**॥ ओं ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ओं ॥ २-२-२**

अन्यत्राभावात्=[3]भगवत्प्रेरणं विना जगतोऽभावात्, कस्यापि वस्तुनः अभावादिति यावत् । तृणादिवदिति । [4]तृणादीनां पर्जन्य इव ईशे न अनुग्राहकत्वमात्रं, किन्तु स्वातन्त्र्यमेवेति सूत्रार्थः ॥

अत्र नेश्वरस्य स्वातन्त्र्येण कर्तृत्वं युक्तं [5]प्रधानादेव जगदुत्पत्तिसम्भवात् । न चाचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिरिति उक्तमिति वाच्यम् । [6]प्रधानादेव जगदुत्पत्तौ ईश्वरस्य अनुग्राहकत्वाभ्युपगमात् । यथा खलु पृथिव्येव तृणादिकार्याणां प्रधानकारणं पर्जन्यस्त्वनुग्राहकस्तथेश्वरोऽपीति सेश्वरसांख्यमतेन पूर्वपक्षे प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं स्वातन्त्र्येण । नानुग्राहकत्वमात्रम् । १ "यच्च किञ्चिज्जगत्सर्वं"[7]मित्यादिश्रुत्या प्रधानादिसर्वपदार्थानां सत्तादिप्रदा-

---

१ नारायणपञ्चम् ।

[1] स्वप्रवृत्त्ययोगेन—क. [2] "न चेश्वर" इत्यारभ्य "निमित्तत्वात्" इत्यन्तं—क.ग. नास्ति ॥ [3] ईशादन्यत्वेन जगतः—क. [4] तृणादीनां पर्जन्य इव ईशे अनुग्रहमात्रं किन्तु स्वतन्त्रं वेति सूत्रार्थः—क. [5] प्रधानादेः—क. [6] प्रधानादेः—क. [7] मिति श्रुत्या—क. मिति सादिश्रुत्या—ग.

नाय [1]सर्वगतत्वेन ईश्वरप्रेरणामन्तरेण कस्यापि वस्तुनः सत्त्वस्यैवासम्भवात् । न हि यदधीनं यत्सत्तादि तत्तस्या[2]नुग्राहकमात्रमिति सम्भवतीति सिद्धान्तः कृतः ॥ २ ॥

---

[प्रत्यक्षैकप्रमाणवादिचार्वाकमतनिरासः]

॥ ओं ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ओं ॥　२-२-३

अर्थशब्दो विषयादिपरः । अभ्युपगमेऽपि=चार्वाकेण स्वशास्त्रस्य सिद्धान्तत्वाभ्युपगमेऽपि, अर्थाभावात्=तद्व्यापकविषयादेः अभावाभ्युपगमात् । स्वव्याहतेरेव तन्मतमयुक्तमिति सूत्रार्थः ॥

[3]अत्र न युक्तं विष्णोः जगत्कारणत्व, अन्तरेणापि ईश्वरं पूर्वस्मात्पूर्वस्मात् [4]उत्तरोत्पत्तिसम्भवात् । न च श्रुत्या[5]दिबाधो वक्तुं युक्तः । तस्याप्रामाण्यात् । न च तस्याप्रामाण्ये धर्माद्यसिद्धिप्रसङ्गः । अतीन्द्रियवस्तुनोऽ[6]भावेनेष्टत्वादिति चार्वाकोक्तरीत्या पूर्वपक्षे प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वम् । चार्वाकसमयस्य विषयादिशून्यतया अप्रमाणत्वेन तद्विरोधाभावात् । तथाहि । न तावच्चार्वाकसमयस्य अदृष्टं विषयः । तदभावात् । नापि [7]दृष्टम् । [8]अप्राप्ते शास्त्रमर्थवदिति न्यायात् । नापि स्वर्गापवर्गाद्यदृष्टफलम् । तदभावात् । नापि दृष्टं धनादि । तस्य कृष्यादिलघूपायसाध्यत्वात् । अत एवाधिकारी निरस्तः । तदभावादेव सम्बन्धोऽपीति सिद्धान्तः कृतः ॥ ३ ॥

---

[1] सर्वगतत्वोक्तेरीश्वर—ग.घ.　[2] नुग्राहकमिति—ग. नुग्राहकमात्रकमिति—क.
[3] अयुक्तं—ग.　[4] उत्तरोत्पत्ति—ग.　[5] दिवाच्यः—क.　[6] भावेऽनिष्टत्वादिति—क.
[7] दृष्टं फलं तदभावात्—ग.　[8] "अप्राप्ते" इत्यारभ्य "तदभावात्" इत्यन्तं—ग. नास्ति ।

[जीवोपसर्जनेन प्रकृतेरेव कर्तृत्वं इति वदतां निरीश्वरसांख्यैकदेशिनां मतस्य निराकरणम् ]

## ॥ ओं ॥ पुरुषाश्मवदिति चेत्तथापि ॥ ओं ॥ २–२–४

पुरुषस्य चेतनस्य सम्बन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छति। एवं अचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात् प्रवर्तत इति चेन्न। तथापि एवं पुरुषाश्मादिदृष्टान्तेन साधनेऽपि नेष्टसिद्धिः। १"न ऋत" इत्यादिश्रुत्या शरीरप्रवृत्तेरपि [1]ईशायत्तत्वेन दृष्टान्तस्य साधनविकलत्वादिति सूत्रार्थः ॥

अत्र न हरेः जगत्कारणत्वं युक्तं प्रधानस्यैव [2]कर्तृत्वे[3]नेश्वरवैयर्थ्यात्। न चाचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिः। केवलस्य तस्य कारणत्वानुपपत्तावपि पुरुषोपसर्जनस्य तदुपपत्तेः। [4]भ[5]वति चात्र प्रयोगः। विमता प्रवृत्तिः पुरुषोपसर्जनाचेतनाधीना प्रवृत्तित्वात्, अश्मादिप्रवृत्तिवदिति। न च दृष्टान्ते विवदितव्यम्। पुरुषसम्बन्धेनाचेतनस्यैव शरीरस्य अश्मानयनादिप्रवृत्तिदर्शनादिति पुरुषोपसर्जन[6]प्रकृतिकर्तृत्ववादिरीत्या पूर्वपक्षे प्राप्ते—

युक्तमेव [7]हरेः जगत्कारणत्वं पुरुषोपसर्जनप्रकृतेः जगत्कारणत्वे प्रमाणाभावात्। [8]न चोक्तानुमानम्। २"न ऋते त्वत्क्रियते किञ्चनार" इति श्रुत्या शरीरप्रवृत्तेरपि परमात्माधीनत्वे सिद्धे विप्रतिपन्नप्रवृत्तेः पुरुषोपसर्जनप्रकृत्यधीनत्वसाधने दृष्टान्ताभावात्। [9]हरेश्च जगत्कारणत्वे प्रमाणस्योक्तत्वादिति सिद्धान्तः कृतः ॥ ४ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः ऋग्वेदवाक्यत्वेनोदाहृतमिदं वाक्यम्।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः ऋग्वेदवाक्यत्वेनोदाहृतमिदं वाक्यम्।

[1] ईशाधीनत्वेन – क. [2] कर्तृत्वात्— क. [3] नेश्वरस्य—क. [4] "भवति" इत्यारभ्य "दर्शनादिति" इत्यन्तं—घ. नास्ति। [5] वत्यत्र — ग. [6] कर्तृत्ववदित्यादि–क. [7] "हरेः"—ग नास्ति। [8] "न चोक्ता" इत्यारभ्य "दृष्टान्ताभावात्" इत्यन्तं—घ. नास्ति। [9] "हरेश्च" इत्यारभ्य "उक्तत्वादिति" इत्यन्तो भागः—क.ग. नास्ति।

[प्रकृत्युपसर्जनकजीवकर्तृत्ववादिनां निरीश्वरसांख्यैकदेशिनां मतस्य निरासः]

**॥ ओं ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ओं ॥ २-२-४**

अन्यथानुमितौ=प्राचीनमतादन्यथा[1]अनुमितौ पुरुषस्य प्राधान्येन प्रकृतेः उपसर्जनत्वेन पुरुषाश्मदृष्टान्तेन अनुमितौ पुरुषस्य शरीरसम्बन्धानुपपत्तिः, कुतः ज्ञशक्तिवियोगात्। जानातीति ज्ञः पुरुषः तस्य शरीरसम्बन्धे स्वतः शक्त्यभावात् तद्घटकत्वेन ईश्वरोऽङ्गीकार्यः। तथाच दृष्टान्तः साध्यविकलः इति सूत्रार्थः॥

अत्र न हरेः जगत्कारणत्वं युक्तम्। [2]प्रकृत्युपसर्जनपुरुषादेव जगदुत्पत्तिसम्भवेन ईश्वरवैय्यर्थ्यात्। [3]तथाच प्रयोगः। विमता प्रवृत्तिः अचेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वात् [4]अश्मादानादिवदिति। न दृष्टान्ते विवादः। शरीरोपसर्जनपुरुषस्याश्मानयनादिप्रवृत्तिदर्शनादिति प्रकृत्युपसर्जनपुरुष[5]कर्तृत्ववादिरीत्या पूर्वपक्षे प्राप्ते—

युक्तमेवेश्वरस्य जगत्कारणत्वं प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वे मानाभावात्। [6]प्राचीनपक्षादन्य[7]थानुमितिरिति चेन्न। [8]शरीरसम्बन्धार्थे केवलस्य [9]पुरुषस्य शक्त्यभावेन [10]तद्घटकत्वेन ईश्वरस्याङ्गीकर्तव्यत्वात्। तद्दृष्टान्तेन अश्मा[11]नयनादिप्रवृत्तेरपि ईशायत्तत्वे सिद्धे विप्रतिपन्नप्रवृत्तेः प्रकृत्युपसर्जनपुरुषाधीनत्वसाधने दृष्टान्ताभावात् इति [12]सिद्धान्तः कृतः ॥ ५ ॥

---

1 "अनुमितौ"—क.घ. नास्ति ॥ 2 प्रधानोपसर्जन—घ. 3 "तथाच" इत्यारभ्य "दर्शनादिति" इत्यन्तं—घ. नास्ति। 4 अश्मादिप्रवृत्ति—क. 5 कर्तृत्ववदित्यादि पूर्वपक्षे—क. 6 "प्राचीनपक्षादन्यथा" इत्यारभ्य "दृष्टान्ताभावात्" इत्यन्तं—घ. नास्ति ॥ 7 थानुमित—ग. 8 शरीरसम्बन्धे—क. 9 "पुरुषस्य कर्तृत्वे मानाभावात्"—ग. नास्ति। 10 तद्वत्त्वेन—क. 11 नयनप्रवृत्तेः—क. 12 दृष्टान्तः कृतः—क.

[अणुकारणतावादिनैयायिकमतनिराकरणम् ]

॥ ओं ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां ॥ ओं ॥ २-२-६

[1]महत्त्वादित्यादि भावप्रधानम् । यथा [2]महत्त्वात् दीर्घत्वाच्च त्र्यणुकादिगतात् चतुरणुकादिपरिमाणमुत्पद्यते तथा [3]ह्रस्वत्वात् द्व्यणुकगतात् त्र्यणुकपरिमाणमुत्पद्येत । [4]पारिमाण्डिल्यात् परमाणुपरिमाणाच्च द्व्यणुकपरिमाणमुत्पद्येत । वाशब्दादन्यथा तयोरपि कारणत्वं न स्यात् विशेष[5]कारणाभावादिति [6]सूचितमिति सूत्रार्थः ॥

अत्र नेश्वरस्यानन्त[7]गुणवत्त्वं युक्तं वैशेषिकादिमतविरुद्धत्वात् । तथाहि । द्रव्यादयः सप्त पदार्थाः । पृथिव्यादिभेदेन द्रव्यं नवविधम् । तत्राकाशादिपञ्चकं नित्यमेव । भूत[8]चतुष्टयन्तु उभयविधम् । रूपादयः चतुर्विंशतिगुणाः । तेऽप्युभयविधाः । उत्क्षेपणादिभेदेन कर्म पञ्चविधं अनित्यमेव । सामान्यमनेकविधम् । समवायस्त्वेक एव । नित्यद्रव्यवृत्तयो[9]ऽनन्ता विशेषाः । एतत्त्रयं नित्यमेव । तत्र अनित्यं [10]समवाय्यादिकारण[11]त्रितयजन्यं [12]समवायिकारणम् । [13]तत्र कार्यद्रव्यस्यावयविसंयोगः असमवायिकारणम् । कार्यगतगुणानां [14]कारणगतगुणाः असमवायिकारणम्, निमित्तमीश्वरादृष्ट[15]कालादि । स चेश्वरः आत्मविशेषः परमात्मा, स च संख्यादिपञ्चगुणयुक्तः [16]कर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशाली

---

1 महदित्यादि — क. 2 महद्दीर्घत्वात्—ग. 3 ह्रस्वाव्द्यणुक गतात्— क. 4 "पारिमाण्डल्यात्" इत्यारभ्य "त्पद्येत" इत्यन्तं—ग.घ. नास्ति । 5 कारणत्वाभावात्— ग. 6 "सूचितमिति"—ग.घ. नास्ति । 7 गुणत्वं—ग. 8 चतुष्टयं—घ. 9 "अनन्ताः"—क.ग. नास्ति । 10 समवायादि—ग. समवाय्वादि — क. 11 त्रितयं जन्यं — क. 12 समवायी—क 13 "तत्र" — क.ग. नास्ति । 14 कारणगतगुणाः निमित्तम् — क. 15 फलादि—ग 16 कर्तृत्वोपयोगी—क.

चेति कथं तस्य अनन्तगुणत्वं युक्तं स्यात् । अतो व्यर्थ एवायं पूर्वाध्यायः इति प्राप्ते—

युक्तमेव हरेः अनन्तगुणवत्त्वं, [1]वैशेषिकसमयस्याप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन च अविरोधकत्वात् । [2]अतः सार्थक एवायं पूर्वाध्यायः इति सिद्धान्तः कृतः ॥ ६ ॥

---

[बौद्धैकदेशिवैशेषिकसौत्रान्तिकमतनिरसनम् ]

**॥ ओं ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ ओं ॥　२–२–७**

समुदाये=परमाणुसमुदाये, न केवलं [3]एकपरमाणुहेतुके [4]अङ्गीक्रियमाणे, तदप्राप्तिः=समुदायाप्राप्तिः । व्याहतेः । किन्तु उभयहेतुकेऽपि=मिलितानेकहेतुके अङ्गीक्रियमाणेऽपि, समुदायाप्राप्तिः मेलनस्यैव समुदायत्वेन आत्माद्याश्रयापातात् । विरलानेकहेतुकेऽङ्गीक्रियमाणे सर्वदा समुदायः स्यात् इति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कारणत्वं युक्तं, बौद्धैकदेशि[5]वैभाषिकसौत्रान्तिकमतविरुद्धत्वात् । तथाहि । [6]पञ्चतन्मात्राः परमाणवो [7]रूपस्कन्धः । अहमिति [8]निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः । [9]दुःखं वेदनास्कन्धः । कुण्डली गौर्गच्छतीत्यादि [10]सविकल्पकं ज्ञानं संज्ञास्कन्धः । रागद्वेषमोहादिरूपः समनन्तरप्रत्ययः संस्कार[11]स्कन्धः । एवं पञ्चस्कन्धात्मनाऽवस्थितं

---

[1] वैशेषिकमतस्य—क. [2] "अतः"—क. नास्ति । [3] "एक"—क. नास्ति । [4] अङ्गीक्रियमाणे सर्वदा चासमुदायः स्यात् । विरलपरमाणूनां सर्वदा विद्यमानत्वादिति सूत्रार्थः—क. [5] "वभाषिक"—ग. नास्ति । [6] पञ्च तन्मात्रकाः—ग.घ. [7] रूपस्कन्धाः—क. [8] निर्विकल्पकज्ञानं—घ. [9] "दुःखं" इत्यारभ्य "संज्ञास्कन्धः" इत्यन्तं—ग. नास्ति । [10] सविकल्पकज्ञानं—घ. [11] स्कन्धाः–क.

जगत् परमार्थसत् । तदशेषं परमाणुसमुदायात्मकं न त्ववयवी नाम कश्चिदस्ति । विद्यमानं [1]च सर्वं क्षणिकमेव । [2]तच्चैतत्कार्यं [3]कालकर्मरूपनिमित्तेनैव भवतीति किमीश्वरेण ? न चेश्वरे प्रमाणमस्ति । वेदादेरप्रमाणत्वादिति प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं, वैभाषिकसौत्रान्तिकसमयस्य अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेति सिद्धान्तः कृतः ॥ ७ ॥

---

[शून्यकारणतावादिमाध्यमिकनयनिरासः]

॥ ओं ॥ **नासतोऽदृष्टत्वात्** ॥ ओं ॥ २–२–८

असतः जगत्कारणत्वं युक्तं न, कुतः ? अदृष्टत्वात्=अप्रामाणिकत्वादिति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कारणत्वं युक्तं, शून्यसमयविरुद्धत्वात् । तथाहि—एकमेव शून्यं अन्तत्रयरहितं परमार्थसत् [4]तस्मादेवाशेषं जगदुदेति । [5]न चासङ्गस्य तदनुपपत्तिः । संवृतिसम्बन्धेन तदुपपत्तेः । न च श्रुतिविरोधः । तत्प्रामाण्यानभ्युपगमात् । अतः किमीश्वरेणेति प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं, शून्यसमयस्याप्रामाणिकत्वात् । तथाहि—यत्तावदुच्यते शून्यमेव जगत्कारणमिति न तद्युक्तम् । प्रमाणाभावात् । [6]प्रमाणं भवत् प्रत्यक्षमनुमानमागमो वा स्यात् । न ताव-

---

1 "च"—क. नास्ति । 2 तच्च तत्कार्यं—ग. 3 कालकर्मनिमित्तेनैव—क. कालकर्मनिमित्तत्वेनैव—ग. 4 तस्मादेवाशेषजगदुदेति —क. 5 "न चासङ्गस्य" इत्यारभ्य ..."नभ्युपगमात्" इत्येतत्पर्यन्तं—क.ग. नास्ति । 6 "प्रमाणं भवत्" इत्यारभ्य "वा स्यात्" इत्यन्तं—क.ग. नास्ति ।

त्प्रत्यक्षं [1]तत्र प्रमाणमस्ति । विवादाभावप्रसङ्गात् । नाप्यनुमानं, क्वाप्यसतः कारणत्वादर्शनेन [2]दृष्टान्ताभावात् । नाप्यागमः । तत्प्रामाण्यस्य [3]वाद्यसम्प्रतिपत्तेः इति सिद्धान्तः कृतः ॥ ८ ॥

---

[विज्ञानातिरिक्तजगन्नास्तीति वदतां योगाचाराणां मतस्य निरासः]

**॥ ओं ॥ [4]न भावोऽनुपलब्धेः ॥ ओं ॥ २-२-९**

प्रपञ्चः भावः ज्ञानात्मको न, कुतः? अनुपलब्धेः । जगतो विज्ञानात्मकत्वेन प्रमाणैरनुपलब्धेरिति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कारणत्वं युक्तं, विज्ञानवादिमतविरुद्धत्वात् । तथाहि—नित्यं निरञ्जनं विज्ञानतत्त्वं एकमेव [5]खलु विद्यमानं तन्मात्रमेतदशेषं जगत् । न ततोऽतिरिक्तं किञ्चिदस्ति । अतो जगदुत्पत्तौ ईश्वरेण कृत्याभावात् अयुक्तं लक्षणमिति प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं, [6]विज्ञानवादिसमयस्य अयुक्तत्वेन अविरोधकत्वात् । तथाहि—विज्ञानातिरिक्तं जगन्नास्तीति वदन् प्रष्टव्यः विज्ञानतत्त्वे जगदध्यस्तं उत विज्ञानतत्त्वजगतोरभेद इति । नाद्यः । निर्बाधं सदिति प्रतीयमानत्वेन आरोपितत्वायोगात् । न द्वितीयः । जगतो विज्ञानात्मकत्वे प्रमाणाभावात् । प्रमाणविरुद्धत्वाच्च । अतो युक्तं विष्णोः लक्षणमिति सिद्धान्तः कृतः ॥ ९ ॥

---

[1] तत्रास्ति—क.　[2] दृष्टान्ताभावात् । आगमोऽपि बौद्धागमो वा । वेदादिर्वा । नाद्यः । तत्प्रामाण्यस्य प्रतिवादिनोऽसम्मतेः । न द्वितीयः । तत्प्रामाण्यस्य वाद्यसम्प्रतिपत्तेः । इति सिद्धान्तः कृतः ॥—घ॰　[3] वाद्यसम्मतेः—ग.
[4] न भाव उपलब्धेः—क.　[5] "खलु"—ग. नास्ति ।　[6] विज्ञानवादिमतस्य—ग.

[सप्तभङ्गि जगदिति वदतां जैनानां मतस्य निरासः]

## ॥ ओं ॥ नैकस्मिन्नसम्भवात् ॥ ओं ॥ २-२-१०

एकस्मिन् वस्तुनि सत्त्वाद्यनेकप्रकाराः न युक्ताः, कुतः? असम्भवात् । अप्रामाणिकत्वेनासम्भावितत्वात् इति सूत्रार्थः ।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, जैनमतविरुद्धत्वात् । तथाहि— जैनास्तु [1]सप्तभङ्गि जगदिति वदन्ति । सत्स्यात्, असत्स्यात्, सदसत्स्यात्, [2]सदसद्विलक्षणं स्यात्, सत्त्वे सति सद्विलक्षणं स्यात्, असत्त्वे सति असद्विलक्षणं स्यात्. सदसदात्मकं सदसद्विलक्षणं स्यादिति । तज्जगत्, [3]आत्मादृष्टपरादृष्टसाधनैः भविष्यतीति किमीश्वरेणेति प्राप्ते—

युक्तं विष्णोः जगत्कारणत्वं, स्याद्वादिमत[4]स्याप्रामाणिकत्वात् । तथाहि—यदुच्यते जैनैः सप्तभङ्गि जगदिति, तदयुक्तम् । सदसद्द्वयातिरिक्तप्रकारस्याप्रामाणिकत्वात्, प्रमाणविरुद्धत्वाच्चेति सिद्धान्तः कृतः ॥ १० ॥

---

[पशुपतिकर्तृतावादिनयनिरासः]

## ॥ ओं ॥ [5]पत्युरसामञ्जस्यात् ॥ ओं ॥ २-२-११

पत्युः पशुपतेः न जगत्कारणत्वं युक्तं, कुतः असामञ्जस्यात् [6]श्रुतौ तस्य पारतन्त्र्यादि[7]दोषकथनेन असमीचीनत्वादिति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कारणत्वं युक्तं पाशुपत[8]समयविरुद्धत्वात् ।

---

1 सत्वभङ्गि—क. 2 सदसद्विलक्षणः—क. 3 आत्मादृष्टपरिदृष्ट—ग. 4 स्याप्रामाणिकत्वात्, प्रमाणविरुद्धत्वाच्चेति सिद्धान्तः कृतः ॥ १० ॥—क. 5 पत्युरसामञ्जः स्यात्—क. 6 श्रुतावस्य—क. 7 दोषत्वकथनेन—ग. 8 समयस्य—क.

तथाहि—[1]पशुपतिः खलु सार्वज्ञादिगुणशाली मायां उपादानीकृत्य [2]हरि-१हरहिरण्यगर्भादिजगदुत्पत्त्यादि करोति। श्रुतयश्च [3]अस्मिन्नर्थे भवन्तीति प्राप्ते—

युक्तं विष्णोः जगत्कारणत्वं, पाशुपतादिसमयस्याप्रामाणिकत्वात्। तथाहि—न पशुपतिः जगत्कर्ता। [4]पारतन्त्र्यजननमरणादिदोषदुष्टत्वात्। न चात्र प्रमाणाभावः। २"यं कामये तं तमुग्रं कृणोमि" इत्यादिश्रुतेरिति सिद्धान्तः कृतः॥ ११॥

---

[शक्तेः जगत्कर्तृत्ववादिशाक्तमतनिराकरणम्]

## ॥ ओं ॥ उत्पत्त्यसम्भवात् ॥ ओं ॥　२-२-१२

[5]न शक्तिः जगत्कारणं, उत्पत्त्यसम्भवात्। केवलस्त्रीभ्यः उत्पत्त्यसम्भवात् इति सूत्रार्थः॥

अत्र न विष्णोः जगत्कारणत्वं युक्तं [6]शाक्तेयमतविरुद्धत्वात्। तथाहि—शक्तिरेव खलु सार्वज्ञ्यादिगुणशालिनी [7]सकलजगज्जननी [8]सकलश्रुतिस्मृतीतिहासपुराणेषु पठ्यते। अतः न लक्षणं हरेः युक्तमिति प्राप्ते—

युक्तमेव हरेः जगत्कारणत्वं, शाक्तेयमतस्याप्रामाणिकत्वेन अविरोधकत्वात्। तथाहि—न शक्तेरेव जगत्कर्तृत्वं युक्तं पुरुषाननुगृहीतत्वात्।

---

१ अत्र हरशब्देन पशुपतेः अन्यः विवक्षितः॥

२ अम्भ्रणीसूक्तम्॥

1 "पशुपतिः" इत्यारभ्य "तथाहि" इत्यन्तो भागः—ग. नास्ति। 2 हरिहिरण्यगर्भादि—घ. 3 अस्मिन्नेव—क. 4 पारतन्त्र्यात्—क. 5 "न शक्तिः" इत्यारभ्य "सूत्रार्थः" इत्यन्तं—घ. नास्ति। 6 शक्तिमत—क. 7 "सकल"—ग. नास्ति। 8 "सकल"—क. नास्ति॥

न हि पुरुषाननुगृहीतस्त्रीमात्रात् क्वचिदुत्पत्तिर्दृष्टा । [1]न च १अजामेकामित्यादिश्रुतिविरोधः । तासां ईश्वराधीनतयैव जगत्कारणत्वाभिधायित्वात् । सर्वश्रुतिस्मृतिविरुद्धत्वाच्च । [2]अतः शाक्तेयमतमसमञ्जसम् । अनयैव दिशा सौरस्कान्दादिसमयाः निरस्ताः वेदितव्याः । तस्मात् उपपन्नमेव विष्णोः [3]जगत्कारणत्वं लक्षणमिति सिद्धान्तः कृतः ॥

तदेतद्द्वादशाधिकरणानां समानन्यायाक्रान्ततया एकदैव तात्पर्यमाह—**भ्रान्तिमूलतयेति** ॥ [4]भ्रान्तिमूलतयेत्यस्यावृत्तिः । [5]व्याससमयान्यसर्वसमयानां भ्रान्तिमूलतया मिथ्याज्ञानजनकत्वेनेत्यर्थः । तदेव कुतः । "भ्रान्तिमूलतया" । भ्रान्तीरित्युपलक्षणम् । तत्तत्सम[6]यकर्तृभ्रमप्रमाद[7]विप्रलम्भविप्रलिप्सादिपूर्वकत्वेनेत्यर्थः । तदपि कुतः । "अयुक्ततः" । भावप्रधानो निर्देशः । अयुक्तत्वात् । युक्त्यादिशून्यत्वात् । युक्त्यादिविरुद्धत्वाच्चेत्यर्थः । अप्रामाणिकत्वात्, प्रमाणविरुद्धत्वाच्चेति यावत् । तद्विरोधात्=तैः समयैः विरोधात्, [8]वैदिकवचनं="२यतो वे" त्यादि [9]वेदवचनं, [10]शङ्क्यतां=अप्रमाणमिति [11]शङ्काविषयतां, न व्रजेदित्यर्थः । अयुक्तेनेति पाठे, यतोऽत इत्यध्याहृत्य, तद्विरोधात् [12]शङ्क्यतां न व्रजेदित्यन्वयो बोध्यः ॥ १२ ॥

[13]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

---

१ महानारायणोपनिषत् ॥ ९—२ ॥

२ तैत्तिरीयोपनिषत् । (भृगुवल्यां प्रथमोऽनुवाकः)

1 "न च" इत्यारभ्य "विरुद्धत्वाच्च" इत्यन्तं—क.ग. नास्ति । 2 "अतः"—घ. नास्ति ॥ 3 जगत्कारणत्वलक्षणमिति —ग.घ. 4 भ्रान्तिमूलतयेत्यनुवृत्तिः—क. 5 व्यासमतात् सर्वसमयानां—क. 6 यकर्तृभ्रम—ग.घ. 7 "विप्रलम्भ"—ग.घ. नास्ति ॥ 8 वैदिकं वचनं—क. 9 वैदिकवचनं—क. 10 शङ्कितां—घ. 11 शङ्काविकलतां—ग 12 "शङ्क्यतां न व्रजेत्"—घ. नास्ति ॥ 13 "मदाचार्य" इत्ययं श्लोकः—क.ग. नास्ति ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्म-
सूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्या-
णां निजशिष्येण शेषेण विरचितायां तात्पर्य-
प्रकाशिकायां द्वितीयाध्यायस्य
द्वितीयः पादः ॥

# अथ द्वितीयाध्यायस्य तृतीयः पादः

श्रीगुरुभ्यो नमः

**आकाशादिसमस्तं च तज्जं तेनैव लीयते ।**
**सोऽनुत्पत्तिलयः कर्ता**

---

हरिः ओम्

[1]आनन्दतीर्थसत्तीर्थसत्तीर्थप्रतिपादितम् ।
आनन्दतीर्थसत्तीर्थदेशिकं व्यासमाभजे ॥ १ ॥

परस्पर[2]श्रुतिविरोधाभावं [3]प्रदर्शयत्यस्मिन् पादे ।

[आकाशस्य उत्पत्तिमत्त्वसमर्थनम्]

**॥ ओं ॥ न वियदश्रुतेः ॥ ओं ॥ २-३-१**

[4]वियदनुत्पत्तिमन्न, किन्तु [5]उत्पत्तिमदेव । कुतः? अश्रुतेः, [6]तदनुत्पत्तिश्रुत्यभावात् । [7]प्रत्युत उत्पत्तिश्रुतिसद्भावाच्च । अतो नायुक्तं विष्णोः जगत्कारणत्वमिति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कारणत्वं युक्तं १"अनादिर्वा अयमाकाश" इति श्रुतेः । आकाशस्यानादित्वेन आकाशकारणत्वाभावात् । इति प्राप्ते —

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे आचार्यैः उदाहृतेयं श्रुतिः ।

[1] अयं श्लोकः—क॰ग. नास्ति । [2] श्रुतिविरोधं—क. [3] दर्शयति—क. [4] वियदुत्पत्तिमन्न —क. [5] अनुत्पत्तिमदेव—क. [6] तदुत्पत्तिश्रुत्यभावात्—क. [7] "प्रत्युत" —ग. नास्ति ।

युक्तमेव विष्णोः जगत्कारणत्वम् । [1]आकाशस्योत्पत्तिमत्वे १"आत्मन आकाशस्सम्भूतः" इति [2]श्रुतिसद्भावात् । न [3]चानादित्व-श्रुतिविरोधः । तस्याः [4]श्रुतेः गौणानादित्वपरत्वादिति सिद्धान्तः कृतः ॥ १ ॥

---

[मुख्यवायोः उत्पत्तिमत्त्वसमर्थनम्]

**॥ ओं ॥ एतेन मातरिश्वा व्याख्यातः ॥ ओं ॥ २–३–२**

एतेन=अश्रुतेरित्यादिपूर्वोक्तलिङ्गेन, मातरिश्वा=मुख्यवायुः, उत्पत्ति-मानेव व्याख्यातः इति सूत्रार्थः ॥

अत्र [5]न विष्णोः जगत्कारणत्वं युक्तम् । २"वायुर्वाव नित्यः" । "स वा एष [6]देवता [7]अनादिर्योऽयं पवते" इत्यादिश्रुतेः, वायोः उत्पत्त्य-भावेन तत्कारणत्वाभावात् । न चाकाशानुत्पत्तिश्रुतिवदियं श्रुतिः गौणीति वाच्यम् । ३"अथ ह नित्याश्चानित्याश्च तेजोबन्नान्याकाश इति तान्य-नित्यानि वायुर्वाव नित्यः । वायुना हि सर्वाणि भूतानि नेनीयन्त" इति श्रुत्या आकाशस्य अनित्यत्वं उक्त्वा वायोः नित्यत्वोक्तेः । अन्यथा वायोः [8]विशिष्य नित्यत्वोक्तिरयुक्ता स्यादिति [9]प्राप्ते—

---

१ तैत्तिरीयोपनिषत् । २—१

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृते श्रुती ॥

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।

[1] आकाशस्योत्पत्तिमत्वे—घ. नास्ति । [2] इति सद्भावात् आकाशस्योत्पत्ति-मत्त्वम्—ग. [3] आनादिश्रुति—क. [4] "श्रुतेः"—ग. नास्ति ॥ [5] "न"-ग. नास्ति । [6] दैवता–घ. [7] अनादिर्योऽयं इति श्रुतिर्गौणीति वाच्यम् ।—क. [8] विशिष्ये—क. [9] प्राप्ते विष्णोः जगत्कारणत्वं युक्तं—क.

युक्तं विष्णोः जगज्जन्मादिकारणत्वं, वायोरप्युत्पत्तिमत्वात् [1]न चात्र प्रमाणाभावः ! १"प्राणाद्वायुरजायते"ति [2]उत्पत्तिश्रुतेः । न चानुत्पत्तिश्रुतिविरोधः । तस्याः स्वरूपानुत्पत्तिपरत्वेन गौणार्थत्वात् । नन्वेव सति आकाशादीनां अनित्यत्वमुक्त्वा वायोः [3]विशिष्य [4]नित्यत्वोक्तिः अनुपपन्ना स्यादिति चेन्न । स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण विशिष्य नित्यत्वाद्युक्तिसम्भवादिति सिद्धान्तः कृतः ॥ २ ॥

---

[ब्रह्मणः उत्पत्तिर्नास्तीति निरूपणम् ]

**॥ ओं ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ओं ॥ २-३-३**

सतः ब्रह्मणस्तु असम्भवः अनुत्पत्तिरेव । कुतः ? [5]अनुपपत्तेः असतः सदुत्पत्तेः अदृष्टत्वेनायुक्तत्वादिति सूत्रार्थः ॥

अत्र [6]न विष्णोः जगत्कारणत्वं युक्तम् । तस्याप्युत्पत्तिमत्त्वेन जगत्कारणत्वायोगात् । न च तत्र प्रमाणाभावः । २"असतः सद्जायते"ति श्रुतिसद्भावात् । न च विष्णोः [7]सच्छब्दवाच्यत्वे प्रमाणाभावः । ३"ओं तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः" । इति [8]स्मृतेः । न चानादित्वे [9]अपि श्रुतिरस्तीति वाच्यम् । असम्भवदुद्भवयोः नभोनभस्वतोः उत्पत्तौ अनादितया [10]समस्य ब्रह्मणो अनुत्पत्तिरयुक्तेति जन्मश्रुतेः [11]सयुक्तिकत्वेन प्राबल्यादिति प्राप्ते—

---

१ पुरुषसूक्तम् ॥

२ ऋग्वेदः १०—७२—२

३ भगवद्गीता १७—२३

[1] न च तत्र—ग.घ. [2] "उत्पत्ति"—क. नास्ति । [3] "विशिष्य"—क. नास्ति । [4] नित्यत्वोक्तिः असम्भवादिति सिद्धान्तः कृतः ॥ २ ॥—क. [5] अनुत्पत्तेः—ग. [6] "न"—क. नास्ति । [7] असच्छब्द—ग. [8] श्रुतेः—क. [9] "अपि"—क. नास्ति । [10] समयस्य—ग. [11] सयुक्तत्वेन—क.

युक्तमेव [1]विष्णोः जगत्कारणत्वं, असतः [2]सदुत्पत्तेः । क्वाप्यदर्शनेन [3]असतः सकाशात् भगवतः उत्पत्त्यनुपपत्तेः । [4]तर्हि "असतः सद्जायते"ति श्रुतेः [5]का गतिरिति चेदुच्यते । १"ब्रह्म वा असत्, सद्वाव प्राण" इति श्रुतेः । ब्रह्मणः सकाशात् वायोरुत्पत्तिः श्रुत्यर्थः इति सिद्धान्तः कृतः ॥ ३ ॥

---

[तेजसः ब्रह्मणस्सकाशादुत्पत्तिमत्त्वसमर्थनम्]

॥ ओं ॥ **तेजोऽतस्तथा ह्याह** ॥ ओं ॥ २–३–४

अतः ब्रह्मण एव वायुद्वारा तेजो जायते कुतः हि यतः श्रुतिः तथा आहेति सूत्रार्थः ॥

अत्र न विष्णोः [6]असाधारण्येन जगत्कारणत्वं युक्तम् तेजसः वायुजातत्वे २"वायोरग्निरिति" श्रुतिसद्भावेन विष्णुवद्वायोरपि अग्निकारणत्वेन विष्णोः विशेषाभावात् । न च वायुद्वारा तेजसः परमात्मजातत्वाभिधायकत्वं श्रुतेरिति वाच्यम् । किं ब्रह्म [7]वायुद्वारमन्तरेण तेजः स्रष्टुमीष्टे न वा । [8]आद्ये व्यर्थं वायुद्वारा सर्जनम् । द्वितीये [9]सिद्धं नः समीहितम् । यावताऽस्माभिः [10]अपि उभयकारणत्वमेव उच्यत इति प्राप्ते—

युक्तमेव विष्णोः असाधारण्येन जगत्कारणत्वम् । ३"तत्तेजोऽसृजते"ति अग्नेः विष्णुजातत्वस्योक्तत्वात् । न च "वायोरग्नि"रिति श्रुति-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पैङ्गिश्रुतित्वेनोदाहृतं वाक्यम् ।

२ तैत्तिरीयोपनिषत् । २—१

३ छान्दोग्योपनिषत् । ६—२—१

[1] "विष्णोः"—क. नास्ति । [2] तदुपपत्तेः—क. [3] असत्सकाशात्—क. [4] का तर्हि—घ. [5] "का"—घ. नास्ति ॥ [6] साधारण्येन—क. [7] वायुद्वारेण—क. [8] नाद्यः—ग. [9] सिद्धान्तः—क. [10] "अपि"—क. नास्ति ।

विरोधः। तत्र [1]वायुद्वारा तेजसः ब्रह्मजातत्वोक्तेः। न च [2]द्वारवैयर्थ्यात् [3]उभयोरपि कारणत्वं वाच्यम्। शक्तस्यापि ब्रह्मणः स्वेच्छयैव लीलया द्वारमनुसृत्य कारणत्वस्य श्रुत्यादिसिद्धत्वादिति सिद्धान्तः कृतः ॥ ४ ॥

———

[अपां ब्रह्मणस्सकाशादुत्पत्तिमत्त्वसमर्थनम्]

॥ ओं ॥ आपः ॥ ओं ॥ २–३–५

आपोऽप्यत एव जायन्ते कुतः तथा ह्याह श्रुतिरिति सूत्रार्थः ॥

अत्र [4]न विष्णोः [5]जगज्जन्मादिकारणत्वं युक्तम्। अपामग्नेः जातत्वे १"अग्नेरापः" इति श्रुति[6]सद्भावादिति प्राप्ते—

युक्तमेव हरेः [7]अशेषजगत्कारणत्वं २"तदपोऽसृजते"ति श्रुतेः। न च "अग्नेरापः" इति श्रुतिविरोधः। तत्रापामग्निद्वारा ब्रह्मजातत्वोक्तेः। ननु श्रुतिद्वयान्यथानुपपत्त्या ब्रह्मतेजसोः [8]साम्येनैव कारणत्वं किं न स्यादिति चेन्न। ३"कर्ता सर्वस्य वै विष्णुः एक एव न संशयः। [9]इतरेषान्तु सत्ताद्याः यत एव तदाज्ञया" ॥ इति वचनविरोधादिति सिद्धान्तः कृतः ॥ ५ ॥

---

१ तैत्तिरीयोपनिषत्। २—१

२ "ब्रह्मवेदमग्र आसीत्। तदपोऽसृजत। तदिदं सर्वं" इति ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पुराणवाक्यत्वेनोदाहृतम्।

1 तद्द्वारा—क. 2 "द्वार" क. नास्ति। 3 उभयकारणत्वं—क. 4 न हरेः—ग घ. 5 जगत्कारणत्वं—क. 6 सम्भवात्—क. 7 अशेषकारणत्वं—घ. 8 सामान्येनैव—ग. 9 एतरेषान्तु—घ.

[श्रुत्युक्तान्नशब्दस्य पृथिवीत्वनिरूपणम्]

॥ ओं ॥ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॥ ओं ॥ २-३-६

श्रुत्युक्तमन्नं पृथिवी, कुतः अधिकारात्=[1]भूतप्रकरणात् । रूपात्=१"यत्कृष्णमि"ति कार्ष्ण्यरूपात् । शब्दान्तरात्=विचार्यश्रुत्यपेक्षया श्रुत्यन्तरात् । आदिपदेन [2]वेदाप्रामाण्याभाव[3]साधकयुक्तिर्ग्राह्येति सूत्रार्थः ॥

अत्र न श्रुतिसमन्वयेन विष्णोः जगत्कारणत्वं युक्तम् । [4]द्वारकारणविषयश्रुतीनां परस्परविरोधेनाप्रामाण्यात् । तथाहि । २"ता अन्नमसृजन्ते"ति [5]अन्नसृष्टेः अप्सृष्ट्यानन्तर्यमुच्यते । [6]"अद्भ्यः पृथिवी"ति पृथिवीसृष्टेः अप्सृष्ट्यानन्तर्यमुच्यते । न चोभयं [7]सम्भवति विरोधात् इति प्राप्ते—

युक्तमेव विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वम् । श्रुत्योः विरोधाभावात् । तथाहि । [8]"ता अन्नमसृजन्ते"त्यत्र अन्नशब्देन पृथिवी विवक्षिता । ३"तत्तेजोऽसृजत [9]तदपोऽसृजते"ति भूतप्रकरणत्वात् । ४"[10-11]यदग्नेरोहितं रूपं तेजसः तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये"ति

१ छान्दोग्योनिषत् ॥ षष्ठाध्यायः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

३ छान्दग्योपनिषत् । ६ अध्यायः ।

४ छान्दोग्योपनिषत् । ६ अध्यायः ।

[1] भूतप्रकरणत्वात् ,अद्भ्यः पृथिवीति पृथिवीसृष्टेः अप्सृष्ट्यानन्तर्यमुच्यते शब्दान्तरात्—क. [2] वेदाप्रामाण्याभावात्—क. [3] साधकयुक्त्ययोगादिति—ग. [4] द्वारकारणश्रुतीनां—क. [5] अन्नसृष्टेः अप्सृष्ट्यानन्तर्यमुच्यते । रूपात् "यत्कृष्णामि"ति कृष्णरूपात् नचोभयं—क. [6] "अद्भ्यः" इत्यारभ्य "आनन्तर्यमुच्यते" इत्यन्तं – क. नास्ति । [7] सम्भवतीति—क. [8] "ता अन्नं" इत्यारभ्य "विवक्षिता" इत्यन्तं—ग. नास्ति । [9] ता आपो—क. [10] अग्नेरोहितं–क. [11] "यदग्नेरोहितं" इत्यारभ्य "लिङ्गात्" इत्यन्तोभागः—घ. नास्ति ।

अन्नस्य कृष्ण[1]रूपप्रतीतेः [2]कृष्णरूपस्य पृथिवीलिङ्गत्वात् । [3]न चैवं लक्षणा । "पृथिवी वा अन्नमि"त्यादिश्रुत्यन्तरात्, [4]पृथिव्याः अन्नशब्दाभिधानात् । [5]वेदो न प्रमाणं अप्रामाण्यकारणदोषशून्यत्वात् प्रत्यक्षवदित्याद्युक्तेश्चेति सिद्धान्तः कृतः । "[6]ता अन्नमसृजन्ते"त्यत्र अन्नशब्देन पृथिवी विवक्षिता ॥ ६ ॥

---

[ब्रह्मणः अधिभूतादिसंहारकर्तृत्वनिरूपणम् ।]

## ॥ ओं ॥ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ ओं ॥ २-३-७

एवेति कैमुत्यसूचकः । सः विष्णुरेव [7]सर्वसंहर्ता । कुतः [8]तदभिध्यानात् । १"तस्याभिध्यानादि"ति श्रुतौ [9]भगवदिच्छया अनादिबन्धनिवृत्तिरूपमोक्षश्रवणात् । [10]किञ्चातः, तल्लिङ्गात्=तदिच्छाधीनत्वलिङ्गात् मोक्षस्य [11]भगवत्कर्तृकत्वं अनुमीयते । एवं च अनादेः बन्धस्य लयकर्ता सुतरां सादेः जगतः संहारकर्तेति [12]सिध्यति इति सूत्रार्थः ॥

अत्र न विष्णुः [13]सर्वसंहर्ता । अपि तु रुद्र एव । २"रुद्रो माविशान्तक" इति तस्यान्तकत्वश्रवणात् । न च रुद्रादिनाम्नां विष्णुपरत्वा-

---

१ श्वेताश्वतरोपनिषत् । १—१०

२ महानारायणीयम् । १६—२

[1] रूपत्वप्रतीतेः—क [2] कृष्णलिङ्गात्—क. [3] ता आपोऽन्नमसृजन्तेति पृथिवी वा—क. [4] "पृथिव्याः" इत्यारभ्य "अभिधानात्" इत्यन्तं—क.घ. नास्ति ॥ [5] "वेदो न" इत्यारभ्य "युक्तेश्चेति" इत्यन्तं—घ. नास्ति ॥ [6] "ता अन्न" इत्यारभ्य "विवक्षिता" इत्यन्तं—क.घ. नास्ति ॥ [7] "सर्वकर्ता" – क. [8] तदभिध्यानात्= तस्याभिध्यानादिति—क. [9] भगवदिच्छाया—ग. [10] किञ्च ततः—क. [11] भगवत्कृतकत्वं—ग. भगवत्कर्तृत्वं—क. [12] सिद्ध इति—क. [13] संहर्ता—घ.

दियं श्रुतिः तत्परा किं [1]न स्यात् रुद्रपरत्वेऽपि तस्य [2]द्वारकारणत्वाभिधात्री किं न स्यादिति वाच्यम् । यथाकथञ्चिद्विष्णोः संहर्तृत्वाभ्युपगमे लोकविरोधात् । [3]तस्य जगदुत्पादकत्वात् लोके च पितुरन्यस्यैव [4]मारकत्वदर्शनात् । [5]न च १"यत्प्रयन्ती"ति श्रुतिविरोधः । तस्याः युक्तिसहितैतच्छ्रुतिविरोधेन अप्रमाणत्वादिति प्राप्ते—

युक्तमेम विष्णोः [6]सर्वसंहर्तृत्वम् । २"तस्याभिध्यानाद्योजनात् तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरि"ति श्रुतौ भगवदिच्छया अनादिबन्धनिवृत्त्युक्त्या कैमुत्यन्यायेन [7]सादेः जगतः संहर्तृत्वस्योक्तत्वात् । ३"स इदं सर्वं विलापय[8]ती"त्यादिश्रुतेश्च । न च रुद्रस्य [9]संहर्तृत्वाभिधायकश्रुतिविरोधः । तस्याः द्वारकारणत्वाभिधायकत्वात् । ४"निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव" ॥ इति [10]भागवतवचनात् । न चोक्तयुक्तिविरोधः । लौकिक[11]पितॄणां ममतायुक्तत्वेन हन्तृत्वायोगेऽपि [12]ईश्वरस्य तदभावेन तत्सम्भवादिति सिद्धान्तः कृतः ॥ ७ ॥

---

१ तैत्तिरीयोपनिषत् । २

२ श्वेताश्वतरोपनिषत् । १-१०

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतेयं श्रुतिः ।

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे भागवतवचनत्वेनोदाहृतम् ॥

[1] न स्यात् इति चेत्—क. [2] द्वारत्वाभिधात्री—क. [3] तस्य जगदुत्पादकत्वात्—घ. नास्ति । [4] मारकत्वात्—ग. [5] "न च" इत्यारभ्य "अप्रमाणत्वात्" इत्यन्तं—क.ग. नास्ति । [6] संहर्तृत्वम्—क. [7] सादिजगतः—क. [8] तीति श्रुतेश्च—क. [9] संहारकर्तृत्वा—ग. [10] भगवद्वचनात्—ग. [11] पितृणां—घ. [12] "ईश्वरस्य"—क. नास्ति । हन्तृत्वायोगेऽपि तदभावेनेश्वरस्य—क.

[सृष्टेः विपरीतक्रमेण लयप्रतिपादनम् ]

## ॥ ओं ॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ ओं ॥ २-३-८

क्रमस्तु=श्रुत्युक्तक्रमस्तु, [1]विपर्ययेण=विपरीतक्रमापेक्षयैव । कुतः ? अतः=श्रुत्युक्तत्वादेव, तर्हि लोकविरोधः इत्यत उक्तं—उपपद्यते चेति । पूर्वोत्पन्नानां सामर्थ्यवैशेष्यात् विपरीतक्रमेण लय उपपद्यते इति सूत्रार्थः ॥

[2]अत्र [3]सर्वमुत्पत्तिक्रमेण [4]भगवता लीयते । [5]१"अत एव हीदं [6]परात् क्रमादुत्पद्यते क्रमाद्विलीयते" इति श्रुतेः । न च पक्षान्तरेऽपि २[7]"व्युत्क्रमा[8]द्विलयश्चैवे"ति श्रुतिरस्तीति वाच्यम् । ३"क्रमादुत्पद्यते क्रमाद्विलीयते" ४[9]"क्रमेणैव हि अस्योत्पत्तिविलया"वित्यादिश्रुतीनां बाहुल्यादिति प्राप्ते—

व्युत्क्रमेणैव लयो युक्तः । क्रमश्रुतेः उत्पत्तिक्रमविपरीतक्रमपरत्वेन [10]बाधकाभावात् । [11]अस्ति च व्युत्क्रमशब्देऽपि [12]क्रमशब्दप्रवेशः कुतोऽर्थान्तर[13]कथनमिति चेन्न । ५"कर्ता प्राणादिकस्यापि हन्ता भूम्यादिकस्य च । यः क्रमाद्व्युत्क्रमाच्चैव स हरिः पर उच्यते" ॥ इति [14]निरवकाश-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृता ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे चतुर्वेदशिखान्तर्गतश्रुतित्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतम् ॥

४ न्यायविवरणे एतदधिकरणे उदाहृतेयं श्रुतिः ।

५ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतम् ।

[1] विपर्ययक्रमेण—ग. [2] "अत्र"—क. नास्ति । [3] सर्वमुत्पत्तिक्रमे—क. [4] भगवति—क. [5] "अत एव" इत्यारभ्य "विलीयते" इत्यन्तं—ग. नास्ति । [6] पराक्रमात्—क.ग. [7] वित्क्रमात्—ग. [8] द्विलयश्चेति—ग. [9] क्रमेणैव स्वोत्पत्ति—क. क्रमेणैवास्योत्पत्ति—ग.घ. [10] अबाधकाभावत्-ग.घ. [11] अस्ति हि—ग.घ. [12] क्रमप्रवेशः—क. [13] कल्पनमिति—ग.घ. [14] "निरवकाश"- घ. नास्ति ॥

श्रुतेः । १"अनुरूपः क्रमः सृष्टौ प्रतिरूपो लयक्रमः । इति क्रमेण भगवान् सृष्टिसंहारकृद्धरिः" ॥ इति [1]निरवकाशस्मृतेश्चेति सिद्धान्तः कृतः ॥ ८ ॥

---

[मनस्तत्त्वादीनां विपरीतक्रमेणैव लयसमर्थनम् ]

## ॥ ओं ॥ अन्तरा [2]विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्न अविशेषात् ॥ ओं ॥ २-३-९

[3]विज्ञानमनसी=विज्ञानमनस्तत्त्वे, अन्तरा [विना, क्रमेण=] [4]व्युत्क्रमेण तत्त्वानां लयः कुतः तल्लिङ्गात् [5]तत्र विज्ञानमनस्तत्त्वविषय एव यथोत्पत्तिलयश्रवणाल्लिङ्गादिति चेन्न अविशेषात् विशेषप्रमाणाभावादिति सूत्रार्थः ॥

अत्र न विष्णोः व्युत्क्रमेण [6]सर्वसंहर्तृत्वं युक्तं, किन्तु विज्ञानमनसी अन्तरा व्युत्क्रमेण लयकर्तृत्वं २"मनसश्च विज्ञानमि"ति श्रुतेः, [7]मनसः उत्पन्ने विज्ञानतत्त्वे ३"तद्यच्छेज्ज्ञान आत्मनी"ति श्रुत्या मनस्तत्त्वस्य लयश्रवणात् लोकानुगुण्याच्च । लोके क्रमेण व्युत्क्रमेण च लयदर्शनादिति प्राप्ते —

युक्तमेव विष्णोः [8]व्युत्क्रमेण लयकर्तृत्वं विज्ञानमनसोरपि बाधकाभावेन व्युत्क्रमेण लयाङ्गीकारात् । न च "मनसश्च विज्ञानमि"ति श्रुत्या

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पद्मपुराणवाक्यत्वेनोदाहृतम् ॥

२ "प्राणान्मनो मनसश्च विज्ञानं" इति ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।

३ काठकोपनिषत् । (३-१३)

[1] "निरवकाश"—घ. नास्ति । [2] विज्ञानमसी—क. [3] विज्ञानमसी—क [4] उक्तक्रमेण व्युत्क्रमेण—क. विज्ञानक्रमेण व्युत्क्रमेण—ग. [5] अत्र—ग. [6] संहर्तृत्वं—क. [7] मनसी—क. [8] "व्युत्क्रमेण"—ग. नास्ति ॥

मनस्तत्त्वाद्विज्ञानतत्त्वस्योत्पन्नत्वेन मनस्तत्त्वस्य विज्ञानतत्त्वे लयाङ्गीकारे कथं न विरोध इति वाच्यम् । श्रुत्यर्थापरिज्ञानात् । न हि सा श्रुतिः [1]मनस्तत्त्वाद्विज्ञानतत्त्वस्योत्पत्तिमाचष्टे । [2]किं तर्हि [3]मनोरूपेन्द्रियाज्ज्ञानस्योत्पत्तिमाचष्टे । कुतः विज्ञानतत्त्वात् मनस्तत्त्वस्य उत्पन्नत्वात् । [4]तदुक्तं-१ "परादव्यक्तमुत्पन्नं अव्यक्तात्तु महांस्तथा । विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात् ॥ विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम् ॥" इति । इति सिद्धान्तः कृतः ॥ ९ ॥

———

[भगवतः लयाभावनिरूपणम्]

**॥ ओं ॥ नात्माऽश्रुतेः नित्यत्वाच्च ताभ्यः ॥ ओं ॥ २-३-१०**

नात्मा परमात्मा [5]न लीयते । कुतः ? अश्रुतेः=तल्लयस्याश्रुतत्वात् । प्रत्युत ताभ्यः=श्रुतिभ्यः, नित्यत्वाच्च= [6]तद्देहस्यापि नित्यत्वावगमाच्चेति सूत्रार्थः ॥

अत्र न विष्णोः [7]जगज्जन्मादिकारणत्वं युक्तं तस्य विनाशित्वात् । २ "अन्तस्तमसि निलीन" इति श्रुतेरिति प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं विनाशस्य अप्रामाणिकत्वात् । [8]न "चान्तस्तमसि निलीन" [9]इति श्रुतिरत्र प्रमाणमिति वाच्यम् ।

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे स्कान्दपुराणवाक्यत्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

[1] मनस्तत्वस्य—क. [2] "किं तर्हि" इत्यारभ्य "माचष्टे" इत्यन्तं—ग. नास्ति । [3] मनोरूपेन्द्रियाशनस्य—क. मन इन्द्रियाद्ज्ञानस्य—घ. [4] तदयुक्तं—ग. [5] निलीयते—क. [6] तद्वदिहास्यापि—क. [7] जगत्कारणत्वं—क. [8] न चास्तेस्तमसि—क. [9] इत्यत्र—क.

१[1]"एतस्मिन्निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चने"ति श्रुत्या निलीनशब्दस्यापिहितार्थत्वावगमात् । अन्यथा २"नित्यो नित्यानां" इति बहुश्रुतिविरोधादिति सिद्धान्तः कृतः ॥ १० ॥

———

[स्थूलशरीरसम्बन्ध एव जीवस्योत्पत्तिः इति निरूपणम्]

॥ ओं ॥ ज्ञोऽत एव ॥ ओं ॥ २-३-११

ज्ञः जीवः, अत एव परमात्मन एवोत्पद्यते, कुतः? अत [2]एव=श्रुतेरिति सूत्रार्थः ॥

अत्र न विष्णोः जगत्कारणत्वं युक्तं. जीवस्यानादित्वात्, "नित्यो नित्यानां" इति श्रुतेरिति प्राप्ते—

युक्तमेव विष्णोः जगत्कारणत्वं, अनादिनित्यानामेव जीवानां ३"ते वा एते चिदात्मानोऽ[3]विनष्टाः परं ज्योतिः [4]निविशन्ति । अविनष्टा एवोत्पद्यन्त" [5]इत्युपपत्तिविधानात् । नचानादिनित्यत्वमङ्गीकृत्य [6]उत्पत्तिमत्त्वाङ्गीकारे मे माता वन्ध्येतिवत् व्याघातः । नित्यस्यापि जीवस्य [7]उपाध्युत्पत्त्यपेक्षया उत्पत्त्युपपत्तेः ॥

---

१ ब्रह्मसूत्रभाष्ये पैङ्गिश्रुतित्वेनोदाहृतम् ।

२ कठश्रुतिः । ५-१३

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे काषायणश्रुतित्वेनोदाहृतम् ॥

[1] स एतस्मिन्—ग. अन्तस्तमसि निलीन इत्युक्त्वा पुरुषादीन् स्वयं पश्यति, नैनं पश्यति कश्चनेति वचनेन निलीनशब्दस्यापि हितार्थत्वात् । अन्यथा नित्यो नित्यानामित्यादि बहुश्रुतिविरोधादिति सिद्धान्तः कृतः ॥—घ. [2] एव यथा श्रुतेः — क. [3] अविनष्टाः—क. [4] निर्विशन्ति—क. [5] इत्युत्पत्तिविरोधात्—क. इत्युक्तिविधानात्—ग. [6] उत्पत्तिमङ्गीकृत्य उत्पत्तिमत्वाङ्गीकारे—क. [7] पराध्युत्पत्त्यनपेक्षया—क.

१[1]"उत्पद्यन्ते चिदात्मानः नित्याः नित्यात्परात्मनः ।
उपाध्यपेक्षया तेषां उत्पत्तिरिति गीयते" ॥

[2]इति वचनादिति सिद्धान्तः कृतः ॥

"न वियदश्रुते"रित्यारभ्य "ज्ञोऽत एवे"त्यन्तानां एकादशाधिकरणानां उक्तिलाघवाय सङ्कलय्य तात्पर्यमाह—**आकाशादिसमस्तं च तज्जं तेनैव लीयते । सोऽनुत्पत्तिलयः कर्ता इति ॥**

[3]अत्राकाशादिपदेन अव्याकृताकाशभूताकाशतदभिमानिनां ग्रहणम् । आदिपदेन वाय्वादिभूतानां तदभिमानिनां च ग्रहणम् । [4]तथा सौत्रवियत्पदोपलक्षितानां प्रकृतिजीवकालवेदमहदहङ्कारमनोबुद्ध्यादीनां तदभिमानिनां च ग्रहणम् । तदुक्तं सुधायां "वियदिति [5]च प्रकृतिजीवकालवेदमहदहङ्कार-[6]मनोबुद्धीन्द्रियादीनां तदभिमानिनां चोपलक्षणमि"ति । एवं च [7]आकाशादिसमस्तं च—आकाशादिकं समस्तमपि, तज्जं—तस्मात् हरेः जातमित्यर्थः ॥

अनेन—॥ ओं ॥ न वियदश्रुतेः ॥ ओं ॥
॥ ओं ॥ एतेन मातरिश्वा व्याख्यातः ॥ ओं ॥
॥ ओं ॥ तेजोऽतस्तथा ह्याह ॥ ओं ॥
॥ ओं ॥ आपः ॥ ओं ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे व्योमसंहितावाक्यत्वेनोदाहृतम् ।

1 "उत्पद्यन्ते परात्मानो नित्याः नित्यानित्याः परात्मनः"—ग. "उत्पद्यन्ते परात्मानो नित्यानित्याः परात्मनः"—घ. 2 इति वचनाच्च । इति वचनादिति—क. इति सिद्धान्तः कृतः—घ 3 अत्राकाशशब्देन—क. अत्राकाशादिशब्देन—घ. 4 "तथा सौत्र" इत्यारभ्य "च ग्रहणं" इत्यन्तो भागः – क. नास्ति ॥ 5 "च"—क. नास्ति । 6 मनोबुद्धीन्द्रियादीनां चोपलक्षणमिति—क. 7 "आकाशादिसमस्तं च"—घ. नास्ति ।

॥ ओं ॥ [1]पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॥ ओं ॥

॥ ओं ॥ ज्ञोऽत एव ॥ ओं ॥

इत्येवं षण्णां [2]एतेषां अधिकरणानां तात्पर्यं उक्तमिति ज्ञातव्यम् । अत्रोत्पत्तेः प्रतिपादनात् । तेनैव लीयत इत्यत्र आकाशादिसमस्तमित्यनुवर्तते । [3]आकाशादि पूर्वोक्तं समस्तमपि, तेनैव–प्रस्तुतहरिणैव लीयते न रुद्रेणेत्यर्थः ॥

अनेन—॥ ओं ॥ [4]तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ ओं ॥

॥ ओं ॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ ओं ॥

॥ ओं ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्न अविशेषात् ॥ ओं ॥

इति त्रयाणां अधिकरणानां तात्पर्यमुक्तमित्यवगन्तव्यं, अत्र लयस्य समर्थनात् ॥

"सोऽनुत्पत्तिलयः कर्ता" इत्यत्र तच्छब्देन अशेषजन्मलयहेतुत्वेन प्रस्तुतस्य हरेः परामर्शः । [5]न विद्येते उत्पत्तिलयौ यस्य सोऽनुत्पत्तिलयः इत्यर्थः । [6]कुतः? कर्तेति [7]हेतुगर्भं, कर्तृत्वात् स्वतन्त्रत्वादित्यर्थः । स्वतन्त्रः कर्तेति स्मरणात् ॥

अनेन—॥ ओं ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ओं ॥

॥ ओं ॥ नात्मा श्रुतेः [8]नित्यत्वाच्च ताभ्यः ॥ ओं ॥

इत्युभयोरधिकरणयोः तात्पर्यमुक्तमिति बोध्यम् । अत्र विष्णोः [9]यथाक्रमं उत्पत्तिलयाभावस्योक्तत्वात् [10]इति ॥ ११ ॥

---

[1] पृथिव्यधिकारिरूप—ग. [2] "एतेषां"—ग.घ. नास्ति ॥ [3] आकाशादिसमस्तं पूर्वोक्तमपि —क. [4]तदभिध्यानादेव लिङ्गात् सः—घ. [5] न उत्पत्तिलयौ—क. [6] कुतः स्वतन्त्रत्वादित्यर्थः ।—ग. [7] हेतुगर्भः—क. [8] नियतत्वाच्च—क. [9] यथाक्रम उत्पत्ति—क. [10] "इति"—क. नास्ति ।

जीवस्तद्वशगः सदा।

---

[जीवस्याणुत्वसमर्थनम्]

॥ ओं ॥ उत्क्रान्तिगत्यागतीनाम् ॥ ओं ॥ २-३-१२

जीवोऽणुरेव, कुतः ? उत्क्रान्तिगत्यागतीनां श्रुत्युक्तानां हेतूनां सकाशादिति शेषः। [1]उत्क्रान्त्यादिमत्त्वादिति सूत्रार्थः ॥

अत्र जीवो व्याप्त एव नाणुः। १"व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्चे"ति श्रुतेरिति प्राप्ते—

जीवोऽणुरेव [2]व्याप्तो न। उत्क्रान्तिगत्या[3]गतिमत्त्वात्। पतत्त्रिशरीरवत्। न हि व्याप्तद्रव्यस्य व्योमादेरुत्क्रान्त्याद्यस्ति। [4]न चात्र प्रमाणाभावः। २"सोऽस्माच्छरीरात् उत्क्रम्य अमुं लोकं अधिगच्छति अमुष्मादिमं लोकं आगच्छती"ति श्रुतेः। [5]मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गात्। न चोक्तश्रुतिविरोधः। ३'स आत्मेद सृजती"त्यादिना प्रकृतस्य [6]परमात्मन एवात्राभिधानात्। न च बहुवचनविरोध इति वाच्यम्। ४"स आत्मा, स [7]आत्मानः, स ईशः, स विष्णुः," इत्यादिना बहुवचनान्तपद[8]वाच्यत्वेन तस्यैव प्रकृतत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**जीवः तद्वशगः सदेति** ॥ गच्छतीति

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे काषायणश्रुतित्वेनोदाहृतम्।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे पौष्यायणश्रुतित्वेनोदाहृतम्।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः।

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः।

[1] गत्यादिमत्वादिति—क. [2] न व्याप्तः—घ. [3] गतित्वात्—क. [4] नन्वत्र—क. [5] मध्यमपरिणवत्वेन—क. मध्यमपरिणवत्वे वा—ग. [6] परमात्मैव—क [7] आत्मनः—क. [8] वाचित्वेन—क.

गमेर्डः । जीवः सदा [1]उत्क्रान्तिकाले [2]परलोकादिगमनागमनकाले [3]च प्रस्तुतहर्यधीन[4]गमनादिमानित्यर्थः । तस्माज्जीवोऽणुरेव न व्याप्त इत्यर्थः ॥ १२ ॥

---

[जीवस्य स्वरूपतः एकत्वेऽपि अंशतः बहुत्वोपपादनम्]

**॥ ओं ॥ व्यतिरेको गन्धव[5]त्तथा च दर्शयति ॥ ओं ॥ २-३-१३**

जीवस्य अणुत्वेऽपि तदंशानां च गन्धवत् व्यतिरेको विभागोऽस्ति । कुतः ? यतः श्रुतिः तथा दर्शयति, च शब्दात् स्मृतिरिति सूत्रार्थः ॥

अत्र जीवो नैकधा [6]अनेकशरीरावच्छिन्नः, किन्तु एकेनैव । १"स नित्यो निरवयः पुण्ययुक् पापयुक् [7]च स इमं लोक अमुञ्चावर्तते स [8]विमुच्यते स एकधा न सप्तधा [9]न दशधे"ति [10]श्रुतेरिति प्राप्ते—

न जीवस्य एकरूपत्वमेवेति नियमः । किं तर्हि [11]योगाद्यापादितेश्वरानुग्रहेण केषाञ्चिद्युगपदनेकरूपत्वमपि । न चांशिनं विहाय अंशस्य गमनानुपपत्तिः । दृश्यते खलु गुणस्यापि गन्धस्य धर्मिणं विहाय अन्यत्र गतिः । सति चैवं काऽनुपपत्तिः, द्रव्यस्यांशस्य अंशिनं विहाय अन्यत्र गमने २[12]"स एकधे"ति श्रुतिविरोधः । तस्याः स्वरूपैक्यविषयत्वात् ।

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे पाराशर्यायणश्रुतित्वेनोदाहृतम् ।

[1] उत्क्रामिकाले—क. [2] परलोकादिह गमनादिकाले च—क. [3] "च"—घ. नास्ति । [4] गमानित्यर्थः—क [5] तथा हि—ग.घ. [6] अनेकरूपावच्छिन्नः—क. [7] "च"—क. नास्ति । [8] विच्यते—क. [9] "न दशधेति"—घ. नास्ति । [10] श्रुतिरिति—क. [11] यौगपद्यापादित—क. [12] न चैकश्रुति—क.

कुत एतत्सर्वं इति चेन्न । १[1]''अथैक एव सन् गन्धवद्व्यतिरिच्यते । अथ एकीभवती''ति [2]श्रुतेः ॥

२''[3]अचिन्त्ययैशशक्त्यैव ह्येकोऽवयववर्जितः !
आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा'' ॥ इति

स्मृतेश्चेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**जीवस्तद्वशगस्सदेति** ॥ [4]योगिभूतोंऽशी जीवः भगवद्वश[5]स्सन्नेव गन्धवदंशतोऽन्यत्र गतिमानित्यर्थः । तस्मात् केषाञ्चि-ज्जीवानां युगपदनेकरूपत्वमपि सम्भवतीति भावः ॥ १३ ॥

———

[जीवस्य भगवद्भिन्नत्वसमर्थनम् ]

**॥ ओं ॥ पृथगुपदेशात् ॥ ओं ॥ २-३-१४**

पृथक्=ईशाज्जीवो भिन्न एव । कुतः ? उपदेशात्, तथा श्रुते-रिति सूत्रार्थः ॥

अत्र परमात्माभिन्न एव जीवः तत्त्वमसीत्यादिश्रुतेः इति प्राप्ते—

परमात्मभिन्न एव जीवः । ३''भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः'' इति श्रुतेः । न चाभेदेऽपि अस्ति श्रुतिरिति

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे शाण्डल्यश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे पद्मपुराणवाक्यत्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौशिकश्रुतित्वेनोदाहृतम् ।

[1] अथैव एव —क. [2] श्रुतिः—क. [3] ''अचिन्त्य'' इत्यारभ्य ''स्मृतेश्च'' इत्यन्तं—घ. नास्ति ॥ [4] योगिभूतोऽसौ—क. [5] स्सन्नेवांशतोऽन्यत्र—क.

वाच्यम् । विरुद्धधर्माधिकरणत्वरूपयुक्तियुक्तत्वेन भेदश्रुतेः प्राबल्यादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**जीवस्तद्वशगस्सदेति** ॥ जीवः सर्वोऽपि सदा तद्वशगः हर्यधीनत्वेन वर्तमानो न [1]कदाचित्तदैक्यं प्राप्नोतीत्यर्थः ॥ १४ ॥

———

[जीवस्य स्वरूपतः नित्यत्वसमर्थनम् ]

## ॥ ओं ॥ यावदात्मभावित्वाच्च न दोषः तद्दर्शनात् ॥ ओं ॥ २-३-१५

यावदात्मभावित्वात्=यावत्कालं परमात्मा तिष्ठति तावज्जीवस्य भावित्वात्=विद्यमानत्वात् नित्य एव जीवः, तस्मान्न दोषः=जीवस्यानादिकर्म[2]सम्बन्धबोधिकाया १ "सोऽनादिना पुण्येन पापेन चानुविद्ध" इति [3]श्रुतेरप्रामाण्यदोषो नास्ति । कुतः? [4]तद्दर्शनात् । तस्य यावदात्मभावित्वस्यदर्शनात् । २च [5]शब्दात् श्रवणाच्चेति सूत्रार्थः ॥

अत्र अनित्य एव जीवः, अनित्यत्वश्रुतेः । न च वाच्यं [6]सोऽनादिनेति श्रुतिः [7]जीवनित्यत्वेऽप्यस्तीति । अनित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । उक्ता खलु जीवस्योत्पत्तिः ज्ञोऽत एवेति उत्पत्तिमतः [8]च अनित्यत्वं नियतमेव घटादौ दृष्टत्वादिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतेयं श्रुतिः ।

२ चशब्दः भाष्यदीपिकोक्तप्रकारेण युक्तिसमुच्चायकः इति भाति ॥

[1] कदाचिदैक्यं—क. [2] सम्बन्धः सोऽनादि—क. [3] श्रुत्यतिप्रामाण्याद्दोषो—क. [4] तदर्शनात्—ग. [5] शब्देन श्रवणाच्चेति—क. [6] "सोऽनादिनेति श्रुतिः"—घ. नास्ति । [7] जीवनित्यत्वेऽपि श्रुतिरस्तीति—घ. [8] "च"—क. नास्ति ।

नित्य एव जीवः । १"नित्यः परो नित्यो जीवो अनित्यास्तस्य धातवः । [1]अत उत्पद्यते च म्रियते च विमुच्यते च" [2]इति श्रुतेः । २"आत्मा नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो धातुरस्य त्वनित्यः" ॥ इति स्मृतेश्च । न च [3]सयुक्तिकनित्यत्वश्रुतिविरोधः । [4]तस्याः उपाधिविषयत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**जीवस्तद्वशगस्सदेति** ॥ जीवः सदा तद्वशत्वेन [5]विद्यमानो न कदाचित् उपाधिनाशादिना नश्यतीत्यर्थः ॥ १५ ॥

———

[जीवस्य स्वरूपतः ज्ञानानन्दात्मकत्वसमर्थनम् ]

**॥ ओं ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ओं ॥ २–३–१६**

पुंस्त्वादिवत्—यथा बालस्य [6]सत एव पुंस्त्वस्य यौवने अभिव्यक्तियोगः एवं सतस्तु—प्राग्विद्यमानस्यैवास्य ज्ञानानन्दादेः ईश्वरप्रसादेन मुक्तावभिव्यक्ति[7]योगात् "स आनन्दः आनन्दीभवति" इति व्यपदेशोपपत्तेः इति सूत्रार्थः ॥

अत्र न जीवो ज्ञानानन्दादिस्वरूपः ३"स दुःखाद्विमुक्तः आनन्दीभवति सोऽज्ञानाद्विमुक्तो ज्ञानी भवती"ति श्रुतेः इति प्राप्ते—

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे अग्निवेश्यश्रुतित्वेनोदाहृता ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे महाभारतवाक्यत्वेनोदाहृतम् । महाभारतम् । (सूक्तङ्करः) १८—५—५०

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे पैङ्गिश्रुतित्वेनोदाहृता ॥

[1] "अत उत्पद्यते" इत्यारभ्य "विमुच्यते च" इत्यन्तं—क.ग. नास्ति ॥ [2] इति श्रुतेः । न चोत्पत्तिमत्त्वयुक्तिविरोधः । उपाध्यपेक्षयैव उत्पत्तेः उक्तत्वादिति सिद्धान्तः कृतः ॥—घ. [3] स युक्तिमनित्यत्व—क. [4] तस्य पुरुषाधिविषयत्वादिति—क. [5] विद्यमानो कदाचित् न नश्यतीत्यर्थः—क. [6] स्वत एव—क. [7] योगात् आनन्दीति व्यपदेशोपपत्तेः इति—क.

भवत्येवानन्दादिरूपो जीवः । १"बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः" ॥ इति श्रुतेः । [1]न चा"नन्दीभवतीत्या"दि श्रुतिविरोधः । यथा पुरुष[2]योषिदादीनां [3]अपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालतस्तदभिव्यक्तेः नायं पूर्वं पुमान् [4]इदानीं पुमान् इत्यादि युज्यते, [5]एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेः ईश्वरप्रसादेन अभिव्यक्तिनिमित्तत्वेन आनन्दीभवतीत्यादिव्यपदेशोपपत्तेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**जीवः तद्वशगः सदेति** ॥ गतिरत्र ज्ञानार्थः । एवं च [6]जीवः हर्यधीनप्राग्विद्यमानानन्दाद्यनुभववानित्यर्थः । तथा च [7]बाल्ये विद्यमानस्य पुंस्त्वस्य तारुण्येऽभिव्यक्तिवत् पूर्वं [8]विद्यमानस्यैव आनन्दादेः ईश्वरप्रसादेन मुक्तावभिव्यक्तिः युज्यत इति भावः ॥ १६ ॥

---

[जीवस्य अस्वतन्त्रकर्तृत्वनिरूपणम्]

**॥ ओं ॥ कर्ता शास्त्रार्थवत्वात् ॥ ओं ॥ २-३-१७**

जीवोऽपि कर्ता, कुतः? [9]शास्त्रार्थवत्वात्, जीवस्य कर्तृत्वाङ्गीकारे विधिनिषेधशास्त्रस्य अर्थवत्त्वसिद्धेः इति सूत्रार्थः ॥

[10]अत्र जीवो न कर्ता । २"नान्यः कर्तेति श्रुते"रिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृता ॥

२ भाष्यदीपिकाभिनवचन्द्रिकयोः एतदधिकरणे उदाहृता श्रुतिः ।

[1] न चानन्दादी भवति—ग. [2] योषितादीनां—क. [3] अपत्याभिव्यक्तिस्वरूपत्वेऽपि—क. अपत्योत्पत्तिस्वरूपत्वेऽपि—ग [4] "इदानीं"—ग. नास्ति । [5] जीवं एवं जीव—क. [6] "जीवः"—क. नास्ति । [7] बाल्येऽस्य—क. [8] विद्यमानस्यानन्दादेः—क. [9] "शास्त्रार्थवत्वात्"—ग. नास्ति ॥ [10] "अत्र जीवो" इत्यारभ्य "अन्यथा विधि" इत्यन्तं—क. नास्ति ।

[1]अस्त्येव जीवस्यापि कर्तृत्वं अन्यथा विधिनिषेधशास्त्रस्य वैयर्थ्य-प्रसङ्गात् । न चोदाहृतश्रुतिविरोधः । तस्याः परमात्माऽतिरिक्तचेतनस्य स्वातन्त्र्यनिषेधपरत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**जीवः तद्वशगस्सदेति** ॥ [2]कर्तेति वर्तते । तद्वशगः कर्ता तदधीनकर्तेत्यर्थः । जीवः कर्तेत्येवोक्ते स्वतन्त्रकर्तेति प्रतीतिः स्यात्, अतः तद्वशग इत्युक्तम् । सदा=मुक्तौ संसारे चेत्यर्थः ॥ १७ ॥

———

[जीवस्य भगवदंशत्वसमर्थनम् ]

**॥ ओं ॥ अंशो नानाव्यपदेशादन्यथा चापि दाश-कित[3]वादित्वमधीयत एके ॥ ओं ॥२–३–१८**

अंश एव जीवः परमात्मनः । कुतः? नानाव्यपदेशात् । १"नाना ह्येनं व्यपदिशन्तीति" श्रुतौ [4]पितृत्वादिनानाप्रकारेण ईशसम्बन्धित्व-व्यपदेशात् । किञ्च दाशकितवादित्वं २"ब्रह्मदाशा ब्रह्मकितवाः ब्रह्मैवेते दाशाः" इति ब्रह्माभिन्नत्वं, अन्यथाऽपि=३"अन्यः परोऽन्यो जीवः" इति ब्रह्मभिन्नत्वमपि एके शाखिनः अधीयते । जीवेशयोर्भेदाभेदोक्त्यन्यथाऽ-नुपपत्त्या भेदमुपेत्याभेदस्थाने प्रतिबिम्बांशत्वं [5]निवेश्यते अभेदस्य [6]बाधात्, [7]उक्तं चा४"भेदश्रुतयोंऽशत्वा"दिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पाराशर्यायणश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रशाङ्करभाष्ये एतदधिकरणे ब्रह्मसूक्तवचनत्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे काषायणश्रुतित्वेनोदाहृतम् ।

४ अनुव्याख्याने एतदधिकरणे परमश्रुतित्वेनोदाहृतम् ।

[1] अस्त्यैव—क. [2] "कर्तेति वर्तते"—क. ग. नास्ति । [3] वादित्वे मधीयते—क. [4] पितृत्वादिना प्रकारेण—क. [5] निर्दिशते—क. [6] बोधात्—ग. [7] युक्तं चाभेदतयांशत्वादिति सूत्रार्थः—क.

अत्र न जीवो हरेरंशः । १"नैवांशो [1]न सम्बन्धो नापेक्ष्यो [2]जीवः परस्ये"ति [3]श्रुतेरिति प्राप्ते—

अंश एव [4]जीवः परमात्मनः । २"अंशो ह्येष [5]परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति [6]सखेति चे"ति श्रुतेः । ३"पादोऽस्य विश्वा भूतानी"ति मन्त्रवर्णाच्च । ४"ममैवांशो जीवलोके" इति स्मृतेश्च [7]इति । [8]न चानंशत्वश्रुतिविरोधः । तस्याः [9]मत्स्यादिवत् स्वरूपांशत्वाभावपरत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[10]जीवस्तद्वशगस्सदा तदाभास इति ॥ [11]गतिरत्र प्रवृत्त्यर्थः । सदा हर्यधीनप्रवृत्तिमान् जीवः तत्प्रतिबिम्बांश इत्यर्थः ॥ १८ ॥

---

[जीवस्य भगवत्प्रतिबिम्बत्वसमर्थनम्]

## ॥ ओं ॥ अदृष्टानियमात् ॥ ओं ॥ २–३–१९

[12]जीवानामेकब्रह्मप्रतिबिम्बत्वेऽपि मिथो वैचित्र्यं विद्यते । कुतः ? अदृष्टस्य विद्याद्यदृष्टस्य अनियमात्=वैचित्र्यादिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतम्

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे पाराशर्यायणश्रुतित्वेनोदाहृतम् ।

३ (पुरुषसूक्तम्) ऋक्संहिता—(१०—९०—३)

४ भगवद्गीता । (१५–७)

1 नैव—क. 2 जीवपरस्येति–क. 3 श्रुतिरिति–क 4 "जीवः"—क. नास्ति । 5 परस्योऽयं पुमानुत्पद्यते म्रियते नानाह्येनं—क. 6 "सखेति चेति"—क. नास्ति । 7 "इति"—क. घ. नास्ति । 8 न चांशत्वविरोधः—ग. 9 मत्स्यादिस्वरूपांशत्वाभाव—क. 10 जीवस्तदाभास इति—क. 11 "गतिरत्र" इत्यारभ्य "प्रवृत्तिमान्" इत्यन्तो भागः—क.ग. नास्ति । 12 जीवानामेव ब्रह्मप्रतिबिम्ब—क.

अत्र न जीवाः भगवत्प्रतिबिम्बाः "[1]नैवांश" इति श्रुतेः। न च प्रतिबिम्बत्वेऽपि १"रूपं रूपं प्रतिरूपो बभूव" इति श्रुतिरस्तीति वाच्यम्। [2]प्रतिबिम्बत्वाभावश्रुतेः सयुक्तिकत्वात्। तथाहि। अस्ति खल्वय जीवानां अन्योन्यभेदः सुरासुरनर[3]तिर्यगादिरूपः। [4]न चैकप्रतिबिम्बानां मिथो वैचित्र्यं सम्भवति। तदयं [5]प्रयोगः। न जीवाः [6]एकप्रतिबिम्बाः भेदवत्त्वात् [7]दर्पणे प्रतीयमान[8]घटपटवदिति। अतः [9]सयुक्तिकश्रुतिविरोधात् [10]-[11]प्रतिबिम्बत्वश्रुतिः अप्रमाणमेवेति प्राप्ते –

जीवाः भगवत्प्रतिबिम्बाः २रूपं रूपं [12]प्रतिरूप इति श्रुतेः। न चोक्तश्रुतिविरोधः। तस्याः [13]अर्थान्तरपरत्वात्। [14]न च प्रतिबिम्बत्वाभावप्रतिपादकयुक्तिविरोधः। ३"द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः। प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च॥ प्रतिबिम्बांशका जीवाः प्रादुर्भावाः [15]परे स्मृताः। प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु"॥ इति स्मृतिविरोधात्। न च वैचित्र्यान्यथानुपपत्त्या सर्वेषां प्रतिबिम्बत्वाभावो वाच्यः। अशेषजीवानां भगवत्प्रतिबिम्बत्वेऽपि[16]विद्यादृष्टादिवैचित्र्येण देवदानवमानवादिवैचित्र्योपपत्तेः इति सिद्धान्तः कृतः॥

---

१ ऋक्संहिता। ४—७—३३

२ ऋक्संहिता ६—४७—१८

३ ब्रह्मसूत्रभाष्ये अंशाधिकरणे (२—३—१८) वराहपुराणवाक्यत्वेनोदाहृतम्॥

[1] नैकांश इति–ग. [2] प्रतिबिम्बत्वाभावत्वश्रुतेः—क. [3] तिर्यगादिरूपं—क. [4] न चैव प्रतिबिम्बानां—क. [5] प्रतिप्रसङ्गः—क. [6] भगवत्प्रतिबिम्बाः—घ. [7] दर्पणप्रतीयमान—क [8] घटवदिति—क. [9] सयुक्तिकश्रुतिविरोधात् प्रतिबिम्बत्वश्रुतिविरोधः—ग. [10] प्रतिबिम्बश्रुतिः—क. [11] "प्रतिबिम्बत्वश्रुतिः" इत्यारभ्य "कश्रुतिविरोधः" इत्यन्तं—ग. नास्ति। [12] "प्रतिरूप"—घ. नास्ति। [13] अर्थान्तरत्वात्—क [14] न चाप्रति—क. [15] हरेः स्मृताः—क. [16] विद्यादृष्टवैचित्र्येण—क. अदृष्टादिवैचित्र्येण—घ.

**तदाभासो हरिस्सर्वरूपेष्वपि समः सदा ।**

तस्य तात्पर्यमाह—[1]**तदाभास इति** ।। [2]वक्ष्यमाणं हरिरित्यादि-[3]पदत्रयं अत्रापि सम्बध्यते । जीव इत्यनुवर्तते । अपि यद्यपि [4]हरिः समः एकरूपः तथापि जीवः तदाभासः हरिप्रतिबिम्बांश इत्यर्थः । [5]बिम्बावैचित्र्येऽपि [6]तत्तदीय[7]विद्यावैचित्र्यात् देवदानवमानवादिवैचित्र्यसम्भवेन [8]प्रतिबिम्बत्वं युक्त इति भावः ।।

[9]ननु जीवस्य ईश्वरांशत्वमयुक्तं [10]तथा सत्यंशत्वाविशेषात् मत्स्यादिसाम्यापातादित्याशङ्क्य [11]जीवानां मत्स्यादीनां च भगवदंशत्वाविशेषेऽपि न सर्वसाम्यं, मत्स्यादीनां स्वरूपांशत्वात् । जीवानां भिन्नांशत्वात् । [12]स्वरूपांशानामेव [13]साम्यमित्यर्थप्रतिपादक[14]प्रकाशादिवन्नैवं पर इत्यादिसूत्रजातस्य तात्पर्यमाह—**हरिः [15]सर्वरूपेष्वपि समस्सदेति** ।। १अपिशब्दो गुणादिसमुच्चयार्थः ।। १९ ।।

[16]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।

---

१ "अपीत्यस्य यद्यपीत्यर्थः" इति तत्त्वमञ्जरी ।।

[1] सदाभास इति—क. [2]वक्ष्यमाणहरिरित्यादि —क [3] पदजातं—क. [4] हरिः सदाभासः समः—क. हरिः सदा समः—ग. [5] बिम्बाद्वैचित्र्येऽपि—क. [6] तदीयानाद्यदृष्टादिवैचित्र्येण—घ. [7] विद्यादृष्टादिवैचित्र्येण —ग. [8] प्रतिबिम्बवत्त्वं—क. [9] ननु न जीवस्येश्वरांशत्वं युक्तं—ग [10] तथासत्यविशेषात्—क. [11] जीवानां तत्तदीयविद्यावैचित्र्यात् देवदानवमानवादिवैचित्र्यसम्भवेन भिन्नांशत्वात् किन्नाम स्वरूपांशानामेव साम्यमित्यर्थप्रमत्स्यादीनां—क. [12] किन्नाम स्वरू—क. [13] साम्यमित्यर्थः प्रकाशादिवत्—ग. [14] प्रवेशादिवत्—क. [15] सर्वरूपोऽपि – क. [16] "मदाचार्य" इत्ययं श्लोकः—क. ग. नास्ति ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्म-
सूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्या-
णां निजशिष्येण शेषेण विरचितायां तात्पर्य-
प्रकाशिकायां द्वितीयाध्यायस्य
तृतीयः पादः ॥

# अथ द्वितीयाध्यायस्य चतुर्थः पादः

श्रीगुरुभ्यो नमः

## मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः ॥

---

हरिः ओम्

[1]जानुमात्रं भवाब्धिस्स्यात् कण्ठावधि सुखं भवेत् ।
मत्सेवयेति हस्ताभ्यां रामो रक्षतु सूचयन् ॥

श्रुतीनां युक्त्युपेतश्रुतिविरोधाभावं [2]प्रदर्शयत्यस्मिन् पादे ।

[इन्द्रियाणां परमात्मनः सकाशात् स्थूलरूपेणोत्पत्तिमत्त्वनिरूपणम् ]

॥ ओं ॥ तथा [3]प्राणाः ॥ ओं ॥ २-४-१

उत्पत्तिमन्त एव प्राणाः, कुतः ? तथा आकाशादौ कथितयुक्तिसमुदायादेवेति सूत्रार्थः ॥

[4]अत्र न प्राणाः उत्पत्तिमन्तः ; १"प्राणा एवानादयः, प्राणा एव नित्याः" इति श्रुतेः । २"नोपादानं हीन्द्रियाणां अतोऽनुत्पत्तिरिष्यते । उपादानकृता सृष्टिः सर्वलोकेषु दृश्यते" ॥ इति स्मृतिसिद्धयुक्तेश्चेति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे काषायणश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पर्ववचनत्वेनोदाहृतम् ।

[1] अयं श्लोकः—क. ग. नास्ति ॥ [2] प्रतिपादयति—क. दर्शयति – ग.
[3] प्राणः—ग. [4]"अत्र"—घ. नास्ति ।

उत्पत्तिमन्त एव प्राणाः । १"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इति श्रुतेः । न चोक्तसयुक्तिकश्रुतिविरोधः । तस्यानादिसूक्ष्मेन्द्रियपरत्वेन गौणार्थत्वात् । न चात्र मानाभावः । २"नित्यान्येतानि सौक्ष्मेण [1]हीन्द्रियाणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते ॥ [2]परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यता" ॥

इति स्मृतेरिति सिद्धान्तः कृतः ॥ १ ॥

---

[मनसः स्थूलरूपेणोत्पत्तिमत्त्वनिरूपणम् ]

## ॥ ओं ॥ तत्प्राक् श्रुतेश्च ॥ ओं ॥ २-४-२

[3]तत् मनः उत्पत्तिमदेव । कुतः ? तत्प्राक् श्रुतेः=तस्य [4]मनसः ३"मनस्सर्वेन्द्रियाणी"ति इन्द्रियेभ्यः प्रथमोत्पन्नत्वेन श्रुतत्वात् । चशब्देन [5]स्मृतिर्ग्राह्येति सूत्रार्थः ॥

अत्र मनो नोत्पत्तिमत् । ४"[6]द्विधा हैवेन्द्रियाणि नित्यान्यनित्यानि च । [7]तत्र नित्यं मनोऽनादित्वादिति सयुक्तिकश्रुतेः । न च "मनस्सर्वेन्द्रियाणि चे"त्युत्पत्तिश्रुत्यनुसारेण इन्द्रियानुत्पत्ति[8]श्रुतिवत् अनादि-

---

१ मुण्डकोपनिषत् । २—१—३

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पर्ववचनत्वेनोदाहृतम् ।

३ मुण्डकोपनिषत् । २—१—३

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

[1] हीन्द्रियाणि च—क. [2] "परेण" इत्यारभ्य "नित्यता" इत्यन्तं क. ग. नास्ति ॥ [3] ननु मनः—क. [4] "मनसः" —ग. नास्ति । [5] स्मृतिबाह्येति—क. [6] "द्विधाह्येवेन्द्रियाणीति नित्यानि चानित्यानि च"—क. [7] "तत्र"—ग. नास्ति । [8] श्रुतिमत् – क.

त्वश्रुतेः गौणार्थत्वमिति [1]साम्प्रतम् । इन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसो नित्यत्वाभिधानादिति प्राप्ते—

[2]नानुत्पत्तिर्मनसो युज्यते । "मनस्सर्वेन्द्रियाणि चे"ति [3]उत्पन्नत्वे श्रुतिसद्भावात् । [4]न चान्येन्द्रियवन्मनसोऽप्युत्पत्तिमत्वे तस्येन्द्रियान्तर्गतस्य पृथगभिधानं व्यर्थमिति वाच्यम् । अन्येन्द्रियेभ्यो प्रागुत्पन्नत्वाभिप्रायेण तदुपपत्तेः । न च [5]तस्य उत्पत्तिमत्त्वे [6]अनुत्पत्तिश्रुतिविरोधः इति वाच्यम् । तस्याः सूक्ष्मरूपमनोविषयत्वात् । न च विशिष्य नित्यत्वोक्तिविरोधः । [7]अन्येन्द्रियेभ्योऽल्पोपच [8]याभिप्रायकत्वात् तस्याः । [9]न चात्र मानाभावः ।

१ "पूर्वं मनस्समुत्पन्नं ततोऽन्येषां समुद्भवः ।
तदनुत्पत्तिवचनमल्पोपचयकारणात् ॥"

इति [10]स्मृतेरिति सिद्धान्तः कृतः ॥ २ ॥

———

[वाचः स्थूलरूपेणोत्पत्तिमत्त्वनिरूपणम्]

## ॥ ओं ॥ तत्पूर्वकत्वाद्वाचः ॥ ओं ॥ २–४–३

वाचः वागिन्द्रियस्य [11]नानुत्पत्तिः । कुतः ? तत्पूर्वकत्वात् । मनः कारणकत्वेन श्रुतत्वादिति सूत्रार्थः ॥

———

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे वायुप्रोक्तवचनत्वोनोदाहृतम् ।

[1] सम्भवति—क. सम्प्रति—ग. [2] ननु नानुत्पत्तिः—क. [3] उत्पन्नश्रुतिसद्भावात्—क. [4] "न चान्येन्द्रिय" इत्यारभ्य "तदुपपत्तेः" इत्यन्तं—घ. नास्ति । [5] "तस्य"—घ. नास्ति । [6] अनुत्पन्नत्वश्रुति—ग. [7] अन्येन्द्रियेभ्योपचय—क. [8] याभिप्रायत्वात्—घ. [9] "न चात्र" इत्यारभ्य "समुद्भवः" इत्यन्तं—घ. नास्ति । "तदुक्तं"—घ. [10] "स्मृतेरिति"—घ. नास्ति । [11] नानुत्पत्तिः ओं—ग.

अत्र [1]न वागुत्पत्तिमती । १"वाग्वाव नित्या, न ह्येषोत्पद्यते, [2]अस्यां हि [3]श्रुतिरवतिष्ठते" इति सयुक्तिकश्रुतेः । [4]न चेयं श्रुतिः वेद-विषयेति वाच्यम् । अस्यां "श्रुतिरवतिष्ठत इति श्रुतश्रुत्याश्रयत्वायोगादिति प्राप्ते--

वागुत्पत्तिमती । २"[5]तस्मान्मन एव पूर्वरूपं वागुत्तररूपमि" ति श्रुतेः । अत्र पूर्वोत्तरशब्दयोः कार्यकारणपरत्वात् । न चोक्तश्रुति-विरोधः । श्रुतावुपचारेण नित्यत्वाभिधानात् । तदुक्तम् । ३"[6]वागि-न्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यते"ति । [7]इति सिद्धान्तः कृतः ॥

समानन्यायानां एतेषां [8]त्रयाणामप्यधिकरणानां सहैव तात्पर्यमाह — **मुख्यप्राणश्चेन्द्रियाणीति** ॥ मुख्यप्राण इत्यस्य उत्तरत्रोपयोगं वक्ष्यामः । इन्द्रियप्रेरकत्वेन प्राधान्यात्प्रथमतो निर्देशः । इन्द्रियाणीत्यत्र [9]लिङ्गवचन-विपरिणामेन तदुद्भवानीत्यनुषङ्गः । [10]तच्छब्देन [11]हरेः परामर्शः । तेनो-द्भवः उत्पत्तिः येषां तानीति विग्रहः ॥ ३ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पौष्यायणश्रुतित्वेनोदाहृतम् ॥

२ ऐतरेयारण्यकम् । २—११—८

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे वायुप्रोक्तवाक्यत्वेनोदाहृतम् ।

1 "न"—ग. नास्ति । 2 अस्याः—क॰ अस्यां—घ. 3 श्रुतिरवति इति—क. 4 न चेन्द्रियश्रुतिः 5 तस्यां मन एव—क. 6 वागिन्द्रियनित्यत्वं—ग. 7 "इति"—ग॰ नास्ति । 8 त्रयाणामधिकरणानां—क. 9 लिङ्गविभक्ति—घ. 10 "तच्छब्देन" इत्यारभ्य "विग्रहः" इत्यन्तं—घ. नास्ति । 11 हरिपरामर्शः—ग.

[प्राणानां द्वादशसंख्यावत्त्वनिरूपणम्]

॥ ओं ॥ सप्त गतेर्विशेषितत्वाच्च ॥ ओं ॥ २-४-४

गतेर्ज्ञानस्य साधनानीन्द्रियाणि सप्तसंख्याकानि। कुतः? विशेषितत्वात्। [1]गुहायां गुहाशयायां, बुद्धौ बुद्ध्यर्थमित्यर्थत्वात्। चशब्दात् स्मृतेश्चेति सूत्रार्थः॥

अत्र [2]सप्तैव प्राणाः, १ "सप्त प्राणाः [3]प्रभवन्ति तस्मा"दिति श्रुतेः। किञ्च अभिमानिनां सप्तत्वात् प्राणानां सप्तत्वम्। अभिमान्यभिमन्यमानयोः [4]समसंख्याकत्वनियमादिति। अथ वा द्वादश प्राणाः। २ "द्वादश वा एते प्राणाः" इति श्रुतेः। न च सयुक्तिकत्वेन बलवत्या सप्तत्वश्रुत्यबाधः। सप्तत्वे कथितयुक्तेरत्रापि [5]साम्यात्। एवञ्च श्रुत्योः विरुद्धत्वादप्रामाण्यमिति प्राप्ते—

द्वादशैव प्राणाः। "द्वादश वा एते प्राणाः इति श्रुतेः। न च सप्तत्वतिश्रुविरोधः। द्वादश प्राणेषु सप्तत्वस्यापि भावात्। न च विवक्षाविशेषमन्तरेण [6]सप्तत्वोक्तिर्व्यर्थेति वाच्यम्। श्रोत्रचक्षु[7]स्पर्शनरसनाघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वेन तद्विवक्षया सप्तत्वोक्तिसम्भवात्। तदुक्तं—

---

१ मुण्डकोपनिषत्। २—१—८

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम्।

[1] गुहायां निहिताः सप्तेति सप्तत्वस्य ज्ञानार्थत्वेन विशेषितत्वात् गुहायां बुद्धौ—क. [2] "सप्तैव प्राणाः"—ग. नास्ति। [3] भवन्त्यस्मात्—क. प्रभवन्त्यस्मात्—ग. [4] समसम—क.ग. [5] सामान्यात्—ग. [6] सप्तत्वोक्तिव्यर्थत्वेति—क. [7] स्पर्शनघ्राणमनो—क.

१ "सप्त प्राणास्त्ववगतेः पञ्च [1]प्राणाश्च कर्मणः ।
एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम्" ॥

इति । ततश्च श्रुत्योः विरोधाभावात् नाप्रामाण्यमिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**इन्द्रियाणीति** ॥ द्वादशैवेति शेषः । ज्ञानेन्द्रियाणि सप्त कर्मेन्द्रियणि पञ्च, एवं इन्द्रियाणि द्वादशैवेत्यर्थः ॥ ४ ॥

---

[प्राणानां अणुत्वनिरूपणम् ]

॥ ओं ॥ **अणवश्च** ॥ ओं ॥ २–४–५

अणव एव प्राणाः । [2]कुतः ? तथा श्रुतेः । तेजसा व्याप्ताश्चेति चार्थः इति सूत्रार्थः ॥

अत्र व्याप्ताः प्राणा,: २ "दिवीव चक्षुराततं" इति व्याप्तिश्रुतेः । [3]दूरश्रवणदर्शनादित्युक्तेश्चेति प्राप्ते—

अणव एव प्राणाः ३ "अणुभिः पश्यति अणुभिः [4]कृणोति प्राणा [5]वाऽणवः" इति श्रुतेः । न च व्याप्तिश्रुतिविरोधादणुत्वाभावः । अणुत्वस्याप्युक्तश्रुतिसिद्धत्वात् । नचैवं [6]..त्यनिर्णयः । ४ "तच[7]था

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पर्ववचनत्वेनोदाहृतम् ।

२ ऋक्संहिता १—२२—२०

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ।

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे शाण्डिल्यश्रुतित्वेनोदाहृतम् ॥

[1] प्राणास्तु—क. [2] "कुतः ? तथाश्रुतेः" इत्यारभ्य "अणव एव प्राणाः" इत्यन्तं—क. नास्ति । [3] दूरदर्शनादि—ग [4] शृणोति क. [5] एवाणवः—क. [6] व्याप्तिनिर्णयः—क. सप्तनिर्णयः—ग. [7] थात्वणवश्चक्षस—क

ह्यणुनश्चक्षस प्रकाशो व्यातत'' इति श्रुतेः विस्पष्टवादित्वेन व्याप्तिश्रुतितोऽपि बलवत्वात् । न च तदप्रामाण्यम् । तद्यथेति श्रुत्यनुसारेण व्याप्तिश्रुतेः तेजसा व्याप्त्यर्थकत्वनिर्णयादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**इन्द्रियाणीति** ॥ अत्राणूनीति शेषः । [1]इन्द्रियाण्यणुपरिमाणान्येव न [2]व्याप्तानीत्यर्थः ॥ ५ ॥

---

[मुख्यप्राणस्य स्थूलरूपेणोत्पत्तिमत्त्वसमर्थनम् ]

**॥ ओं ॥ श्रेष्ठश्च ॥ ओं ॥ २-४-६**

इतरप्राणवत् श्रेष्ठश्च=मुख्यप्राणोऽपि जायत एव ईश्वरात् तथा श्रुतेरिति सूत्रार्थः ॥

अत्र मुख्यप्राणो नोत्पत्तिमान्, १''नैष प्राण उदेति नास्तमेती''ति श्रुतेः ।

२''यत्प्राप्तिर्यत्परित्यागः उत्पत्तिर्मरणं तथा ।
[3]तस्योत्पत्तिः मृतिश्चैव कथं प्राणस्य युज्यते''

इति [4]स्मृतिसिद्धयुक्तेश्चेति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे वायुप्रोक्तवाक्यत्वेनोदाहृतम् ।

[1] प्राणा वा अणवः इति श्रुतेः, इन्द्रियाण्यनु—घ. [2] व्याप्तानीति शेषः—क. [3] तस्योत्पत्तिमृतिश्चैव—क. [4] सिद्धयुक्तेश्चेति—क.

यथेतरे [1]प्राणा उत्पद्यन्ते तथा [2]श्रेष्ठोऽपि । १"सौक्ष्मेण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेती"ति श्रुतेः । न चोक्तश्रुतिविरोधः, सूक्ष्मरूप-विषयत्वात् [3]तस्याः । इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[4]**मुख्यप्राणः तदुद्भवः इति** ॥प्राण इत्येव पूर्तौ मुख्यप्राण इत्युक्त्या, २"मुख्यप्राणादिदं जगत् । मुख्यप्राणः परस्माच्च न परः कारणान्वित" इत्यादिस्मृतिसिद्धं हरेः मुख्यप्राणजन्मेति सूचयति ॥ ६ ॥

———

[मुख्यप्राणस्य परमात्माधीनत्वसमर्थनम् ]

**॥ ओं ॥ चक्षुरादिवत्तु [5]तत्सहशिष्टयादिभ्यः ॥ ओं ॥ २-४-७**

चक्षुरादिवत् मुख्यप्राणोऽपि भगवदधीन एव । कुतः? तत्सह शिष्टयादिभ्यः ३[6]प्राणश्च प्राणाश्च प्राणिनश्चेति श्रुतौ [7]तैः चक्षुरादिभिस्सह तद्वशत्वेन [8]शिष्टेः=शासनात् । ईशद्वयायोगरूपयुक्तेश्चेति आदिपदार्थ इति सूत्रार्थः ॥

[9]अत्र स्वतन्त्र एव मुख्यप्राणः । ४"प्राणादिदमाविरासीत् प्राणो धत्ते, प्राणे [10]लयमभ्येति न प्राणः [11]किञ्चिदाश्रित" इति श्रुतेः ।

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे वायुप्रोक्तवाक्यत्वेनोदाहृतम् ॥

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे अग्निवेश्यश्रुतित्वेनोदाहृतम् ।

[1] प्राणादुत्पद्यन्ते—क. [2] श्रेष्ठोऽपीति—क. [3] "तस्याः"—क. नास्ति । [4] मुख्यप्राणश्च—क. [5] तत्सहसिष्टयादिभ्यः—क. [6] प्राणश्च प्राणाश्चेति श्रुतौ—क. [7] "तैः"—क.घ. नास्ति ॥ [8] सृष्टेः शंशन तु—क. [9] अतः—क. [10] लय-मभ्युपैति—क. [11] किञ्चिदाश्रुतः—क.

**मुख्यप्राणवशे सर्वं स विष्णोर्वशगस्सदा ॥**

१"यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् ।
यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत् ॥"

इति युक्तेश्चेति प्राप्ते –

मुख्यप्राणः [1]परमात्माधीन एव । २"सर्वं ह्येवैतत्परमेऽवतिष्ठते [2]प्राणश्च प्राणाश्च [3]प्राणिनश्च [4]स ह्येक [5]एवैतान्नयत्युन्नयति वशीकरोती"ति श्रुतेः । न चोक्तयुक्त्युपेतवचनविरोधः । तस्यावान्तरेश्वरपरत्वात् । तदुक्तं—३"सर्वकर्ताऽपि सन् प्राणः परमाधारतस्स्थितः ।

अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ॥
अतो मध्यमतामाहुः तस्य वेदेषु वेदिनः" ॥ इति ॥

[6]इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा इति** । सर्वं रुद्रादिजगत् । सः विष्णोः [7]वशग इत्येव पूर्तौ मुख्यप्राणवशे [8]सर्वमित्युक्तिः मुख्यप्राणस्वातन्त्र्यश्रुत्यादेः अवान्तरेश्वरपरत्वरूपगतिसूचनायेति ध्येयम् ॥ ७ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे महाभारतवाक्यत्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं प्रमाणम् ॥

[1] परमात्माधीन एवेति—क. [2] प्राणश्च—क. नास्ति । [3] प्राणिनः—घ. [4] सैह्येक ग. [5] एवैतान्युन्नयति —क. एवैतान्नुन्नयति—ग. [6] "इति"— क.ग. नास्ति ॥ [7] वश इत्येव—ग. [8] सर्वमित्युक्तेः—क.

[प्राणादयः पञ्च मुख्यप्राणस्य दासभूताः, पञ्च स्वरूपभूताः इति निरूपणम्]

## ॥ ओं ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ओं ॥ २-४-८

मुख्यप्राणः पञ्चवृत्तिः=प्राणादिपञ्चस्वरूपः प्राणादि[1]पञ्चदासवांश्च [2]कुतः यतो मनोवद्व्यपदिश्यते । यथा वर्गद्वयोपेतं मनः, १"यथा ह वै मनः पञ्चधा व्यपदिश्यते । मनोबुद्धिरहङ्कारश्चित्तं चेतनेति तेभ्यो वा एतेभ्यो पञ्च दासाः प्रजायन्ते । मनसो वा व मनो, बुद्धेः बुद्धिः अहङ्कारादहङ्कारः, चित्ताच्चित्तं, चेतनाया एव [3]चेतनैवमिति श्रुतौ व्यपदिश्यते । एवं [4]मुख्य-प्राणोऽपि वर्गद्वयवान्, २"प्राणो वा व पञ्चवृत्तिः, प्राणोऽपानो व्यानोदान-स्समान इति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । प्राणाद्वाव प्राणोऽपानादपानो, व्यानाद्व्यान, उदानादुदानः, [5]समानादेव समान" इति श्रुतौ व्यपदिश्यत इति सूत्रार्थः ॥

अत्र प्राणादयः मुख्यप्राणदासा एव । ३"सर्वे वा एते मुख्य-दासाः प्राणोऽपानो व्यानोदानः समानः" इति श्रुतेः ॥

४"प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् ।
अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते ॥"

[6]इति युक्तेश्चेति एकः पूर्वः पक्षः ।

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥
३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ।
४ ब्रह्मसूत्रभाष्ये एतदधिकरणे वायुप्रोक्तवाक्यत्वेनोदाहृतम् ।

[1] पञ्चभेदांश्च – क. [2] कुतः—क. घ. नास्ति । [3] चेतन एवमिति—क. घ. [4] मुख्यप्राणः—ग. [5] समानात् समानः —क. [6] इत्युक्तेत्येकः पूर्वः पक्षः—क. इति श्रुतेः युक्तेश्चेत्येकः पूर्वः पक्षः – ग. इति युक्तेश्चेति कश्चित् घ.

प्राणादय: मुख्यप्राणस्वरूपाण्येव ।

१ "[1]मुख्यस्यैव स्वरूपाणि प्राणाद्या: पञ्च वायव: ।
स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम् ॥"

इति श्रुते: । [2]व्यक्तसद्गुणत्वादि[3]युक्तेश्च । न च [4]व्यक्तसद्गुणत्वं असिद्धमिति वाच्यम् । २ "पायूपस्थेऽपानं, चक्षु: श्रोत्रे [5]मुखनासिकाभ्यां प्राण: स्वयं [6]प्रतिष्ठते । मध्ये तु समान: [7]एष ह्येतद्धुतमन्नं समं नयति । तस्मात् [8]एता: सप्तार्चिषो भवन्ति । नाडीसहस्राण्यासु व्यानश्चरत्येकयोर्ध्वमुदान:" [9]इति श्रुते: ॥ नचैतद्व्यक्त[10]सद्गुणत्व दासेषु भवति । उभयत्रापि तद्भावे स्वामिभृत्यभावानुपपत्ते: [11]इति अपर: पूर्व: पक्ष: ।

[12]एवं च [13]श्रुत्यो: समबलत्वेन विरुद्धत्वादप्रामाण्यमिति प्राप्ते—

न केवलं प्राणादयो [14]मुख्यप्राणदासा: [15]एव अपि तु [16]तत्तत्स्वरूपाण्यपि । [17]कुत: पूर्वोदाहृतोभय[18]विधश्रुते: ।

३ "अशेषगुणपूर्णानि [19]मुख्यरूपाणि पञ्च च ।
तद्दासा: पञ्च चान्योऽपि [20]प्राणाद्या: सद्गुणैर्युता:" ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

२ षटप्रश्नोपनिषत् । (३ ·६)

३ न्यायविवरणे एतदधिकरणे उदाहृता श्रुतिः ।

[1] मुख्यप्राण—क. [2] व्यक्ततद्गुग—क [3] युक्तेश्चेत्यपर: पूर्व: पक्ष:—क.ग. [4] व्यक्ततद्गुणत्वं—घ. [5] मुख्यनासिकाभ्यां – घ. [6] तिष्ठते—घ. [7] "एष:"–घ नास्ति । [8] "एता:" – घ. नास्ति । [9] "इति"—घ. नास्ति । [10] तद्गुणत्वं—घ. [11] इति कश्चित्—घ. [12] एवं श्रु—क. [13] श्रुत्या – ग. श्रुत्यो: विरुद्धत्वात्—घ. [14] मुख्यदासा:—क. [15] "एवं"—क.ग. नास्ति । [16] "तत्"—क. नास्ति ॥ [17] कुत: प्राणो वाव पञ्चवृत्ति: प्राणोऽपानोव्यान उदान: समान: इति । तेभ्यो वा एतेभ्य: पञ्च दासा: प्रजायन्त इति श्रुते: ।—घ. [18] विरोधश्रुते:—क. [19] मुख्यप्राणानि—ग. [20] प्राणाद्य:—क.

इति [1]श्रुतेश्च । [2]ततश्च श्रुत्योः विरोधाभावात् [3]नाप्रामाण्यमिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह –**मुख्यप्राण इति** ॥ मुख्यप्राण इत्यस्यावृत्तिः । एकं विशेष्यं अपरं विशेषणम् । प्राणशब्दोऽत्र १"एषः प्राणः इतरान् प्राणान् पृथक्[4]पृथगेव सन्निधत्ते" इत्यत्रेव प्राणापानादिपञ्चप्राणपरः । तन्त्रेण वर्गद्वयवाची । एवं च मुख्याः प्रधानाः स्वरूपभूताः इति यावत् । [5]प्राणाः प्राणशब्दवाच्याः प्राणापानादयः [6]पञ्च वायवो यस्य सः [7]तथोक्तः । [8]प्रधानाद्वायोः उत्पन्ना इति यावत् । दासभूताः प्राणशब्दवाच्याः [9]पञ्च वायवो यस्य स तथा । [10]स्वरूपभूतप्राणादिपञ्चकवान् [11]दासभूतप्राणादि-पञ्चकवांश्च २मुख्यप्राण इत्यर्थः । ततश्च श्रुत्योः विरोधाभावात् नाप्रामाण्य-मिति भावः ॥ [12]८ ॥

---

[मुख्यप्राणः प्राणरूपेण अणुः वायुरूपेण व्याप्तः इति निरूपणम् ]

## ॥ ओं ॥ अणुश्च ॥ ओं ॥ २–४–९

मुख्यप्राणः शरीरान्तःप्राणरूपेण अणुः बहिः वायुरूपेण [13]महांश्च । कुतः तथा श्रुतेरिति सूत्रार्थः ।

---

१ षट्प्रश्नोपनिषत् । (३–६)

२ मुख्याः प्राणाः यस्य सः मुख्यप्राणः । अथवा मुख्यात् उत्पन्नाः प्राणाः यस्य सः मुख्यप्राणः इति विग्रहद्वयमत्राभिप्रेतम् ॥

[1] स्मृतेश्च—क. [2] ततः श्रुत्योः—क. [3] नाप्राण्यमिति—क. [4] पृथक्–घ ग. [5] दासभूताः प्राणाः–क. [6] पञ्च अवयवाः–क. [7] "तथोक्तः इत्यनन्तरं "तथा मुखे प्रधाने भवाः मुख्याः मणिर्मुखं प्रधानं चेत्युत्रमस्य वचो भवेत्'' इति बृहद्भाष्योक्तेः इति —ग.घ. मातृकयोः अधिकः पाठः । [8] प्रधानवायोः—ग.घ [9] पञ्चावयवा—क. [10] तत्स्वरूपभूतप्राणपञ्चकवान्–क. [11] दासप्राणादि–क. [12] ॥ ८ ॥ —क ग नास्ति । [13] महान्तश्च—ग.

अत्र व्याप्त एव मुख्यप्राणः । १"प्राण एवाधस्तात्प्राण उपरिष्टात् प्राणो मध्यतः प्राणः [1]सर्वतः प्राणः एवेदं सर्वं" इति व्याप्तिश्रुतेः । २"यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु । अतो धृत जगत्सर्वं अन्यथा केन धार्यते" ॥ इति स्मृतिसिद्धयुक्तेश्चेति प्राप्ते—

अणुरेव मुख्यप्राणः ३"स वा एष प्राणोऽणु"रिति श्रुतेः । न च व्याप्तिश्रुतिविरोधः । [2]तस्याः देहाद्बहिर्वर्तमानवायुरूपविषयत्वात् । कुत एतदिति [3]चेन्न । ४"अन्तर्वा अणु[4]र्बहिर्महानि"[5]ति विशेषश्रुतेरिति सिद्धान्तः कृतः ।

तस्य तात्पर्यमाह—**मुख्यप्राणश्चेति** ॥ अणुरिति शेषः । चशब्दाद्व्याप्तश्चेति समुच्चीयते । उभयविधश्रुतेः इति भावः ॥ ९ ॥

---

[इन्द्रियाणां ब्रह्मसम्बंधित्वसमर्थनम् ]

## ॥ ओं ॥ ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥ ओं ॥ २-४-१०

तदिति [6]व्यस्तं समस्तं च, ज्योतिराद्यधिष्ठान[7]मित्यस्यावृत्तिः । ज्योतिरादि अधिष्ठानं यस्य सः तथा । चक्षुरादिमूलभूततेजःप्रभृतिभूतनियामकं इति यावत् । यद्ब्रह्म [8]तत्तु तदेव ज्योतिराद्यधिष्ठानं [9]ज्योतीरूप-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतेयं श्रुतिः ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे वायुप्रोक्तवाक्यत्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ॥

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ।

[1] सर्वतः प्राणः — क. ग. नास्ति ॥ [2] तस्याः बहिर्देहाद्वर्तमान— घ. [3] चेत्. क. [4] बर्हिर्वा महानिति—घ. बर्हिर्महानिति—क. [5] ति चेत्—क. [6] व्यस्तसमस्तं तेति—क. [7] मित्यावृत्तिः—क. [8] तत्—ग. [9] ज्योतीरूप—क.

तदंशभूतचक्षुरादिनियामकं, कुतः ? तदामननात्, तस्य ज्योतिराद्यधिष्ठानत्वस्य चक्षुराद्यधिष्ठानत्वस्य [1]च १ "[2]यः प्राणे तिष्ठन्" इत्यादिना आमननादिति सूत्रार्थः ॥

अत्र इन्द्रियाणि जीवसम्बन्धीनि !

२ "जीवस्य करणान्याहुः [3]प्राणानेतांस्तु सर्वशः । [4]यस्मात्तद्वशगा [5]एते दृश्यन्ते सर्वदेहिषु" इति सयुक्तिकजीवसम्बन्धित्वश्रुतेः इति प्राप्ते—

ब्रह्मैव चक्षुरादिभिः करणैः दर्शनादि कारयतीति [6]ब्रह्मसम्बन्धीन्येवेन्द्रियाणि [7]न पुनर्जीवस्य । चक्षुरादिमूलभूततेजःप्रभृति भूतस्य ब्रह्मनियम्यत्वेन सुतरां तदंशभूतानां एतेषां तन्नियम्यत्वात् । [8]सर्व[9]प्राणिप्रेरकमुख्यप्राणप्रेरकत्व[10]प्रतिपादिकायाः ३ "यः प्राणे तिष्ठन्नि"त्यादिश्रुतेः । [11]"यश्चक्षुषि तिष्ठन् [12]यस्तेजसि तिष्ठन्" इत्यादिश्रुतेश्च । [13]नन्वेवं तर्हि जीवसम्बन्धित्वश्रुत्यप्रामाण्यप्रसङ्गः इति चेन्न । जीवकरणसम्बन्धित्वस्य अनादिनित्यत्वेन तदभिप्रायेण प्रवृत्तायाः तस्याः प्रामाण्योपपत्तेः । दृश्यते खलु लोके परकीयेऽपि बहुकाल[14]सम्बन्धिनि तदीयत्वोपचार इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **इन्द्रियाणि तदुद्भवानीति** ॥ तथा च सूक्ष्मरूपेण नित्यानामपीन्द्रियाणां सृष्टिकाले भूतोपचय[15]रूपेशाधीनो[16]त्पत्तिमत्वेनेश्वर-

---

१ बृहदारण्यकोपनिषत् । (५—७—१६)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे सौत्रायणश्रुतित्वेनोदाहृतम् ।

३ बृहदारण्यकोपनिषत् । (५—७—१६)

[1] "च"—ग. नास्ति । [2] यं—क. [3] प्राणानेतास्तु—क.ग. [4] तस्मात्—क. [5] ह्येते—क. [6] ब्रह्मसम्बन्धिनी—क [7] "न"—क. नास्ति । [8] "सर्व" इत्यारभ्य "श्रुतेः" इत्यन्तं - घ नास्ति [9] प्राणप्रेरक - ग. [10] प्रतिपादको यः—क. प्रतिपादकादयः प्राणे —ग. [11] यश्चक्षुषि— घ. [12] "यस्तेजसि तिष्ठन्"—घ.नास्ति । [13] न चैवं—ग. [14] सम्बन्धेति —क. [15] रूपेण—क. [16] त्पत्तिनेश्वर—क.

प्रयोज्यत्वाद्ब्रह्मसम्बन्धीन्येवेन्द्रियाणि न पुनः जीवसम्बन्धीनीति भावः ॥ [1]१० ॥

———

[मुख्यप्राणादन्यद्वादशप्राणानां इंद्रियत्वसमर्थनम्]

॥ ओं ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ ओं ॥ २-४-११

श्रेष्ठादन्यत्र [2]मुख्यप्राणादन्ये ते प्राणाः चक्षुराद्याः इन्द्रियाणि [3]मुख्यप्राणस्त्वनिन्द्रियम् । कुतः तद्व्यपदेशात् । तत्प्रतिपादकश्रुतेरिति सूत्रार्थः ।

अत्र सर्वेऽपि प्राणाः इन्द्रियाणि । १"प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्तीति" सयुक्तिकश्रुतेः सामान्यश्रुतेश्च सर्वगामित्वादिति प्राप्ते—

न सर्वे प्राणाः इन्द्रियाणि । किन्तु मुख्यप्राणमृते द्वादशैव ॥
२"द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् ।
[4]द्रवतामिन्द्रियाणान्तु नियन्ता [5]प्राण एकराट् ॥"

इति विशेषश्रुतेरिति सिद्धान्तः कृतः ॥

———

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पौत्रायणश्रुतित्वेनोदाहृतम् ॥
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे पौत्रायणश्रुतित्वेनोदाहृतम् ॥

[1] ॥ २० ॥—क.　[2] मुख्यप्राणादन्यत्र—ग　[3] "मुख्यप्राण" इत्यारभ्य "इन्द्रियाणि" इत्यन्तं—क. नास्ति ।　[4] द्रवतां हीन्द्रियाणान्तु—क.　[5] प्राण एव—क.

तस्य तात्पर्यमाह – **मुख्यप्राणश्चेन्द्रियाणीति** । तथा च मुख्य-
ाणश्चेंद्रियाणीति [1]मुख्यप्राणस्येंद्रियाणां [2]च [3]प्रार्थक्येन निर्देशात् मुख्यप्राण-
यानिंद्रियत्वं तदन्येषां [4]इंद्रियत्वं [5]च [6]सूचितमिति बोद्धव्यम् । अन्यथा
र्वेऽपि प्राणाः तदुद्भवाः इत्यवक्ष्यत् ॥ [7]११ ॥

——————

[इंद्रियाश्रयीभूतशरीरस्य परमात्मस्रष्टृत्वनिरूपणम्]

**॥ ओं ॥ संज्ञा[8]मूर्तिक्लृप्तिस्तु [9]त्रिवृत्कुर्वत उपदेशात् ॥ ओं ॥ २-४-१२**

संज्ञामूर्त्योः नामात्मकरूपात्मकप्रपञ्चयोः क्लृप्तिः सृष्टिः त्रिवृत्कुर्वत एव त्रीणि तेजोबन्नानि वृणोति मिश्रयति [10]इति त्रिवृत् । १"तासां [11]त्रिवृतं त्रिवृतं एकैकामकरो"दिति श्रुतेः । त्रिवृदित्येतत् भावप्रधानं तेजोबन्नानां मिश्रणं कुर्वतो विष्णोरेव, कुत. उपदेशात् । तथा श्रुतेरिति [12]सूत्रार्थः ।

अत्र विरिञ्च एव नामरूपात्मकदेहादिप्रपञ्चकर्ता, २"विरिञ्चो वा इदं विरेचयति विदधाति ब्रह्मा [13]वा व. विरिञ्चः [14]एतस्माद्धीमे रूपनामन्नी" इति श्रुतेः । ३"यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते ।

१ छान्दोग्योपनिषत् । षष्ठाध्यायः

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्राह्मपुराणवाक्यत्वेनोदाहृतम् ।

1 मुख्यप्राणश्चेंद्रियाणां —ग. 2 "च"—क. नास्ति । 3 प्रार्थिक्येन—ग. 4 अनिंद्रियत्वं —ग. 5 "च"—घ. नास्ति । 6 "सूचितमिति" इति वाक्यभागः—ग. नास्ति । 7 ॥ २१ ॥ – क. 8 मूर्तिस्तु—क. 9 त्रित्कुर्वत —क. 10 "इति"—क. नास्ति 11 "त्रिवृतं"—ग नास्ति । 12 अर्थः-ग. 13 वै–क 14 तस्माद्धि रू

एको हि कर्ता जगतो ब्रह्मैव [1]तु चतुर्मुखः" ॥

इति स्मृतिसिद्ध [2]युक्तेश्चेति प्राप्ते—

परमात्मैव नामरूपात्मकदेहादिप्रपञ्चकर्ता । १"सर्वाणि रूपाणि [3]विचित्य [4]धीरः [5]नामानि कृत्वा[6]ऽभिवदन्यदास्ते" इति पुरुषसूक्त-मन्त्रोक्तत्वात् ।

न च विरिञ्चस्यापि नामादिकर्तृत्वे श्रुतिरस्तीति वाच्यम् । तस्याः श्रुतेः अवान्तरकारणत्वमात्रार्थत्वात् ।

२"सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः ।
एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः" ॥

इति स्मृतेरिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[7]देहश्चैव तदुद्भवः इति । देह इत्युपलक्षणम् । नामरूपकाशेषप्रपञ्चश्च । [8]न केवलं [9]मुख्यप्राणादिरिति चार्थः । तदुद्भव एव=तज्जन्य एव, न [10]विरिञ्चोद्भवः [11]इत्येवकारार्थः ॥ १२ ॥

———

[इन्द्रियाश्रयशरीरं पृथिव्यादिभ्यः उत्पद्यते इति निरूपणम् ]

**॥ ओं ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ ओं ॥ २-४-१३**

मांसादि=[12]देहस्थं अस्थिमांसाद्येव [13]यत्कठिणं वस्तु, भौमं=पार्थिवं

---

१ तैत्तिरीयारण्यकान्तर्गतपुरुषसूक्तम् । ३-१२

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे पद्मपुराणवाक्यत्वेनोदाहृतम् ।

[1] च—क. [2] युक्तश्चेति—क. [3] विचिन्त्य—क. [4] धीराः—क. [5] नामाक्रत्वा—क [6] भिवदन्य आस्ते—घ. [7] देहस्यैव—क. [8] "न"—क. नास्ति । [9] मुख्यप्राण इति—क. [10] विरिञ्चाद्भवः इत्यर्थः ॥ २२ ॥—क. [11] इत्येवकारार्थः विरिञ्चकर्तृकत्वश्रुतिस्तु ब्रह्माद्यास्त दवान्तरा इति स्मृत्या अवान्तरकत्वपरेति भावः ॥—घ [12] देहन्तु—क. [13] कठिणं—ग.

न सर्वशरीरं, किं तर्हि [1]इतरयोश्च अप्तेजसोश्च कार्यं शोणितमज्जादि शरीरे वर्तते । तच्च यथाशब्दं=१ "यत्कठिणमिति" श्रुत्यनुसारेण [2]अङ्गीकर्तव्यमिति । यद्वा [3]मांसादि भौमं=भूमिकार्यं नैतावदेव किन्तु [4]अप्तेजसोश्च कार्यं, यथा शब्दं २ "[5]मिश्राणि [6]हि भूतानि" इति शब्दोक्तदृशा अङ्गीकार्यमिति सूत्रार्थः ।

अत्र आप्यमेव शरीरं ३ "अद्भ्यो हीदमुत्पद्यत" इति श्रुतेः । शरीरावयवेषु [7]मांसादिषु अप्धर्मकत्वदर्शनादित्येकः पक्षः ।

[8]पार्थिवमेव शरीरं ४ "[9]पृथिवीं शरीरमप्येती"ति श्रुतेः । कार्यस्य स्वकारण एवाप्ययनियमात् । काठिण्यादि[10]युक्तेश्चेत्यपरः ॥

तैजसमेव शरीरं, तथा [11]श्रुतेः औष्ण्यदर्शनाच्चेत्यन्य इति प्राप्ते—

[12]यच्छरीरं कठिणं [13]मांसादि तदेव पार्थिवम् । यच्च [14]शोणितादि तदेवाप्यं, यच्च मज्जादि, तदेव तैजसं, [15]शरीरन्तु त्र्यात्मकं, ५ "यत्कठिणं सा पृथिवी, यद्द्रवं [16]तदापो, [17]यदुष्णं [18]तत्तेज" इति श्रुतेः । यदि शरीरं

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गर्भश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे काषायणश्रुतित्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ।

४ ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिकायां एतदधिकरणे उदाहृता श्रुतिः ।

५ ब्रह्मसूत्रभाष्ये एतदधिकरणे गर्भश्रुतित्वेनोदाहृतम् ॥

[1] तयोश्च—ग. [2] अङ्गीकार्यमिति—क. [3] मासादि—क. [4] अप्तेजसः—क. [5] मित्राणि—क. [6] हि तानि—क. [7] मांसादिषु अब्धर्मयुक्तश्च न कः पक्षः—ग. मांसादिषु अब्धर्मतर्पकत्वदर्शनाच्चेति कश्चित् ।—घ. [8] पार्थिवशरीरं—क. [9] पृथिवीशरीरमप्येति—क. [10] युक्तेश्चैवमेवेत्यपरः—क. [11] श्रुते शोषणदर्शनाच्चेत्यन्यः—क. [12] यच्छरीरमेव—ग. [13] मासादि क. [14] शोणितं—क. [15] शरीरं श्रुत्यात्मकं—क. [16] तदपो—क. [17] यदौष्ण्यं—ग. [18] तत्तेजस इति—क.

**सर्वदोषोज्झितस्तस्मात् भगवान् पुरुषोत्तमः ।**
**उक्ताः गुणाश्चाविरुद्धाः तस्य वेदेन सर्वशः ॥**

---

नैकभूतकार्यं कथं तर्हि विशेषोक्तिरिति चेन्न । तत्तच्छरीराणां [1]तत्तद्भूतसंयोगविशेषसद्भावेन वैशेष्यात् तद्व्यपदेशोपपत्तेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**देहश्चैव [2]तदुद्भवः** १इति ॥ इन्द्रियोपचयकारणत्वेन प्रकृतं [3]पृथिव्यादिभूतत्रयं तदिति परामृश्यते । देहश्च=सर्वोऽपि देहः तदुद्भव एव [4]भूतत्रयजन्य एव न त्वेकैकमात्रजन्य इत्येवकारार्थः ।

केचित्तु [5]पूर्वोक्तसर्वकर्तृत्वसिध्यर्थं [6]इतरादित्वशङ्का[7]निवर्तनेन तदुत्पत्तिसमर्थनपरप्रधानाधिकरणप्रमेयस्यैव अस्मिन्नणुभाष्ये सङ्ग्रहः कृतः । [8]न त्ववान्तराधिकरणप्रमेयस्यापि । अनुव्याख्यानेऽपि तत्र [9]तत्र किञ्चिन्निरूपणस्य दर्शनादित्याहुः ॥

तेषां "पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसङ्ग्रहः" इत्येतद्ग्रन्थविरोधः । तथा—

"अनन्तोऽर्थः प्रकटितः त्वयाऽणौ भाष्यसङ्ग्रहे ।
[10]अहो आत्मपरिज्ञप्त्यै कृष्णेनेवाननान्तरे" ॥

इति [11]मध्वविजयविरोधश्च दुष्परिहरः ॥

अध्यायार्थं उपसंहरति—**तस्मात् सर्वदोषोज्झित** [12]इति । च

---

१ इति इत्यनन्तरं इन्द्रियेत्यतः पूर्वं "पूर्वप्रकृतो हरिः" इति "क" मातृकायां अधिकःपाठः । स च प्रकृतानुपयुक्तत्वात् परित्यक्तः ॥

[1] तत्तद्भूतविशेषसद्भावेन—ग. [2] तदद्भवः—क. [3] पृथिव्यादिभूतत्रयं च—क. [4] हरिप्रेरितभूतत्रयजन्य एव—क. [5] पूर्वोक्तसर्वकर्तृत्वे—क [6] इति रनादित्वशङ्का—घ. [7] निवृत्तत्वेन—क. [8] न त्ववान्तराधिकरणे—क. [9] "तत्र"—ग. नास्ति । [10] अतो—ग. [11] श्रीमन्मध्वविजयविरोधः–ग. श्रीमन्महामध्वविजयविरोधः—घ. [12] इति स च शब्दो—क.

शब्दो यस्मादित्यर्थे । [1]यस्मात् कारणात् तस्य पुरुषोत्तमस्य सर्वशः=सर्वेण, [2]वेदेन [3]जातावेकवचनम् । [4]सर्वैः वेदैरुक्ताः कृत्स्नवेदसमन्वयेन पूर्वाध्याये [5]प्रतिपादिता इति यावत् । सर्वशः सर्वे गुणाः [6]स्रष्टृत्वादयो गुणाः सर्वशः सर्वैः [7]युक्तिपमयादिभिः अविरुद्धाः पूर्वोक्तप्रकारेण विरुद्धा न भवन्ति, तस्मात् पुरुषोत्तमः सर्वदोषोज्झितः [8]सर्वदोषरहित इत्यर्थः । भगवानिति मध्येऽपि मङ्गलं कर्तव्यमिति सूचयति । विशिष्टवस्तुसङ्कीर्तनस्यैव मुख्यतः मङ्गलत्वादिति ॥ १३ ॥

मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्म-
सूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहा-
चार्याणां निजशिष्येण शेषेण विरचितायां
तात्पर्यप्रकाशिकायां द्वितीयाध्यायस्य
चतुर्थः पादः ॥

द्वितीयाध्यायः समाप्तः ॥

श्री कृष्णार्पणमस्तु ॥

---

[1] यस्मात्तस्मात्—क. [2] वेदेनैव—ग. [3] ज्ञातावेकवचनम्—क. [4] सर्ववेद-रुक्ताः—क ग. [5] प्रतिपादित इति—क. [6] स्रष्टृत्वादिगुणाः—क. [7] युक्तिसमुदा-यादिभिः—क. [8] सर्वदोष इति यावत्—क. सर्वदोषरहित इत्यर्थः—ग घ.

## अथ तृतीयाध्यायस्य प्रथम पादः

श्रीगुरुभ्यो नमः

## शुभेन कर्मणा स्वर्गं ॥

---

हरिः ओम्

[१]-[२]चतुर्दोषं च निर्दोषं निर्गुणं षड्गुणं परम् ।
[३]अश्रीकं चैव सश्रीकं वेङ्कटेशमहं भजे ॥ १ ॥

एवं अध्यायद्वयेन समन्वयाविरोधाभ्यां गुणपूर्ण[1]निर्दोषब्रह्मस्वरूपे सिद्धे एवंविधस्य प्रसादः कया विधया सिध्यतीत्यतः वैराग्यभ[2]क्त्युपासनापरोक्षज्ञानलक्षणैः साधनैरित्यभिप्रेत्य तत्स्वरूपनिरूपणा[3]र्थं अयं तृतीयाध्यायः प्रवृत्तः ॥

तत्र प्रथमे पादे वैराग्यजननाय [4]दुःखरूपगत्यागतिस्वर्गनरकगर्भवासादिस्वरूपं निरूप्यते ॥

---

१ अयं श्लोकः—ग.क. नास्ति ॥

२ चतुर्भुजमित्यर्थः ।

३ "ताः शीर्षन् श्रियः श्रिताः" इति ऐतरेयोपनिषदनुसारेण चक्षुरादिप्राकृतेन्द्रियाणि श्रीशब्देन कथ्यन्ते । "अचक्षुःश्रोत्रं" इति श्रुत्यनुसारेण प्राकृतेन्द्रियरहितत्वात्, अत्र अश्रीकत्वं तदभिप्रायेण युज्यते । तथा च अश्रीकं इत्यस्य प्राकृतेन्द्रियरहितं इत्यर्थः ॥

[1] निर्दोषस्वरूपे—ग. [2] क्त्युपासनापरोक्षलक्षणैः—ग. क्त्युपासनाज्ञानलक्षणैः—घ. [3] र्थं अध्यायः प्रवृत्तः—ग. र्थं तृतीयाध्यायः प्रवृत्तः—घ. [4] दुःखस्वरूपगत्या—क.

[ देहनाशेऽपि जीवस्य भूतसम्बन्धः न निवर्तते इति निरूपणम् ]

**॥ ओं ॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ओं ॥ ३-१-१**

[1]जीवः पूर्वदेहं हित्वा गच्छन् भूतैः सम्परिष्वक्तः रंहति गच्छति, [2]स्वर्गं प्रतीति शेषः । किमर्थं? तदन्तरप्रतिपत्तौ=तदिति [3]प्रागुक्तदेह-परामर्शः, देहान्तरप्राप्त्यर्थं, कुतः? प्रश्ननिरूपणाभ्यां=१ "वेत्थ यथा पञ्चम्या-माहुतावापः पुरुषवचसो भवन्ती"ति श्वेतकेतुं प्रति प्रवाहणस्य राज्ञः प्रश्न-लिङ्गात् । [4]तथा श्वेतकेतोः [5]परिहारासामर्थ्ये तत्पित्रा गौतमेन पृष्टस्य प्रवाह-णस्यैव "इति तु पञ्चम्यामाहु[6]तावापः [7]पुरुषवचसो भवन्ती"ति परिहार-लिङ्गाच्च । पञ्चम्यामाहुतौ योषिति हुताया आपः अद्भिः सम्परिष्वक्तः जीवो लब्धदेहः, पुरुषवचसः [8]पुरुष इति नामवान् भवतीति श्रुत्यर्थ इति सूत्रार्थः ॥

[9]अत्र नानुष्ठेयमेव वैराग्यादिसाधनम् । फलार्थं खलु साधनानुष्ठानं, फलं च [10]बन्धनिवृत्तिरूपा मुक्तिः न मरणादतिरिच्यते ।

२ "[11]भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम् ॥"
३ "भूतानां [12]विनिवृत्तिस्तु मरणं [13]समुदाहृतम् ॥"

---

१ छान्दोग्योनिषत् ॥ (५—३—१)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे वराहपुराणवाक्यत्वेनोदाहृतम् ॥

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे महाभारतवाक्यत्वेनोदाहृतम् ।

[1] जीवः सम्परिष्वक्तः जीवः पूर्वदेहं—क. [2] सर्वं प्रतीति—क. [3] प्राक्तनदेह-परामर्शः— [4] तथा च—क. [5] परिहारसामर्थ्ये—क. [6] ता आपः—क. [7] पुरुषो भवन्तीति—ग. [8] "पुरुष इति"—क. नास्ति ॥ [9] अत्र अनुष्ठेयमेव—क. [10] बन्धनिवृत्तिः—घ. [11] "भूतबन्धस्तु" इत्यारभ्य "विमोचनम्" इत्यन्तं—घ. नास्ति । भूतबन्धो हि—क. [12] विनिवृत्तिस्तु—ग. [13] समुदीरितम्—क.

इति वचनात् । न च मरणार्थमेव साधनमनुष्ठेयम् । वैराग्या[1]द्यननुष्ठानेऽपि [2]मरणदर्शनादिति प्राप्ते--

अनुष्ठेयमेव वैराग्यादि, बन्धनिवृत्तिरूपफलसद्भावात् । न च मरणमेव बन्धनिवृत्तिः मरणे भूतसम्परिष्वक्तस्यैव जीवस्य गमनाङ्गीकारात् । न चात्र प्रमाणाभावः । [3]प्रश्नपरिहारवाक्ययोः जीवस्य भूतपरिष्वङ्गाभिधानात् ।

१"भूतयुक्तः परं लोकं इमं लोकं च गच्छति" इति स्मृतेश्च । न च भूतानां [4]विनिवृत्तिरिति वचनविरोधः । तस्य भूतभागनिवृत्त्यभिप्रायत्वादिति सिद्धान्तः कृतः ॥ १ ॥

---

[सर्वभूतसम्परिष्वक्त एव जीवो गच्छति इति साधनम् ।]

**॥ ओं ॥ त्र्यात्मकत्वात्तु [5]भूयस्त्वात् ॥ ओं ॥ ३-१-२**

जीवः सर्वभूतैः सम्परिष्वक्तः रंहति, न तु अद्भिरेव । न च प्रश्नादि[6]स्थाप्शब्दविरोधः । अपां त्र्यात्मकत्वात्=तेजोऽन्नात्मकत्वात् । त्र्यात्मकत्वेऽपि [7]श्रुतौ अप्शब्दः कुतः इत्यत उक्तं-भूयस्त्वादिति । श्रुतावप्शब्दस्तु पार्थिवादिसर्वदेहेषु सम्भूय पृथिवीतेजसो[8]रप्यपां बाहुल्याद्युज्यत इति सूत्रार्थः ॥

---

१ न्यायविवरणे एतदधिकरणे उदाहृतं वचनम् ।

[1] द्यनुष्ठानेऽपि — क. [2] मरणादर्शनात् — क. [3] "प्रश्न" इत्यारभ्य "अभिधानात्" इत्यन्तं—घ. नास्ति । [4] निवृत्तिरिति —क. [5] भूतयस्त्वात् – क.ग. [6] स्था अप्शब्द-क. [7] श्रुता-. वात्मशब्दः —क. [8] रप्यपां—क.

अत्र [1]न जीवेन सह [2]आप एव गच्छन्ति, [3]न सर्वाणि भूतानि । "आपः पुरुषवचसो भवन्ती"त्यत्र अपामेव गतिश्रवणात् । अन्यथा [4]श्रुतौ भूतानीति [5]सामान्यप्रयोगः स्यात् इति प्राप्ते—

सर्वभूतपरिष्वक्त एव जीवो गच्छति । [6]नाद्भिरेव । न चैवं विशेषनामविरोधः । अपां क्षितिसलिलानलात्मकत्वेन तद्ग्रहणेन अन्य भूतानामपि [7]प्राप्तेः । १"तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" । २"मिश्राणि हि भूतानि" इति [8]श्रुतेरिति सिद्धान्तः कृतः ॥ २ ॥

---

[भूतानि जीवेन सह गच्छन्तीति निरूपणम्]

॥ ओं ॥ प्राणगतेश्च ॥ ओं ॥ ३-१-३

३[9]भूतव्यापकप्राणानां सहगतिवचनाच्च भूतानि सह गच्छन्तीति सूत्रार्थः ॥

अत्र न भूतानि जीवेन सह गच्छन्ति विशेषप्रमाणाभावादिति प्राप्ते—

गच्छन्त्येव भूतानि सह जीवेन विशेषप्रमाणस्य अनुमानस्य विद्यमानत्वात् । अस्ति तावद्भूतानां [10]इन्द्रियाणां च अविनाभावः ।

---

१ छान्दोग्योपनिषत् । (६—२—२)

२ ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य चतुर्थपादे मांसाद्यधिकरणे काषायणश्रुतित्वेनोदाहृतम् ।

३ "भूतानां प्राणानां च सहगतिवचनाच्च" इति पाठः अत्र भाति ॥

[1] "न"—क.घ. नास्ति । [2] अप एव—क. [3] न च सर्वापि भूतानि—क. न च सर्वाणि भूतानि—ग [4] "श्रुतौ"—ग. नास्ति । [5] सामान्यप्रयोगात् इति प्राप्ते—ग. [6] नोद्भिरेव—क. [7] प्राप्ते—क [8] "श्रुतेरिति"—क. नास्ति । [9] भूतप्रापक—ग. [10] इन्द्रियैरविनाभावः क.ग.

१' यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि [1]भूतानि करणानि च [2]न चैतानि कदाचिद्वियुज्यन्ते, न च विलीयन्त'' इति श्रुतेः । [3]-[4]प्राणानां च अस्ति जीवेन सह [5]गतिः २"प्राणैर्वाव [6]न वियुञ्जन्त" इति श्रुतेः । [7]अतः प्राणाविनाभूतभूतानां च अस्ति जीवेन सह गतिरिति ज्ञायत इति । तथाचेत्थं प्रयोगः । भूतानि जीवेन सह गच्छन्ति तत्सह[8]गन्तृप्राणाविनाभूतत्वात् । यद्येन सह [9]गन्त्रविनाभूतं तत्तेन सह गच्छति । यथा राज्ञा सह गन्तृ अमात्याविनाभूतो भृत्यो राज्ञा सह गच्छतीति सिद्धान्तः कृतः ॥ ३ ॥

---

[प्राणानां जीवेन सह भागतो गमननिरूपणम्]

**॥ ओं ॥ [10]अग्न्यादिगतिश्रुतेरिति चेन्न [11]भाक्तत्वात् ॥ ओं ॥ ३–१–४**

न प्राणाः जीवेन सह गच्छन्ति [12]कुतः ? ३"अग्निं [13]वागप्येती''ति वागादीन्द्रियाणां अग्न्यादीन् प्रति गतिश्रुतेरिति चेन्न । भाक्तत्वात्, अग्न्यादिगतिश्रुतेः भागविषयत्वात् । अतः नानुपपत्तिरिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतम् ॥

२ भाष्योदाहृतश्रुतौ "प्राणैर्वाव" इति शब्दः नोपलभ्यते । तथापि वियुज्यन्ते इति शब्दस्य साकांक्षत्वात्, तदर्थं "प्राणैर्वाव" इति शब्दः अध्याहृतः इति भाति ॥

३ बृहदारण्यकोपनिषत् । (५–२–१३)

[1] भूतानि च करणानि च—घ. "करणानि च''—क. नास्ति । [2] नैतानि—क. [3] "प्राणानां च'' इत्यारभ्य "इति श्रुतेः" इत्यन्तं—ग. नास्ति ॥ [4] प्रमाणानां च—क. [5] गीतः—क. [6] न युज्यत—क. [7] "अतः'' इत्यारभ्य "ज्ञायत इति" इत्यन्त—घ. नास्ति ॥ [8] गन्तृप्रमाणाविनाभूतत्वात्—क. [9] गन्तृविनाभूतं—ग. [10] अग्न्याविगति श्रुतेः—क. [11] भक्तत्वात्—क. [12] "कुतः"—ग. नास्ति । [13] वागत्येतीति—क.

अत्र न प्राणाः जीवेन सह [1]गच्छन्ति १"यत्रास्य [2]पुरुषस्य मृतस्याग्निं वागप्येति [3]वातं प्राणः चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रं", इति प्राणानां अग्न्यादिगतिश्रुतेरिति प्राप्ते—

प्राणाः जीवेन [4]सह गच्छन्ति । "प्राणैर्वाव [5]न वियुज्यते" इति श्रुतेः । न "चाग्निं वागप्येती"ति विशेषश्रुतिविरोधः । प्राणानां भागेन अग्न्यादौ गत्यङ्गीकारेण श्रुतेस्तत्परत्वात् । तदुक्तम् । २"पुरुषस्य मृतौ ब्रह्मन् प्राणाः भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्" ॥ इति सिद्धान्तः कृतः ॥ ४ ॥

---

[भूतानां जीवेन सह गमनविषयकाक्षेपपरिहारः]

**॥ ओं ॥ प्रथमे श्रवणादिति चेन्न ता [6]एव ह्युपपत्तेः ॥ ओं ॥ ३–१–५**

प्रथमे ३"एतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती"त्युपक्रमे भूतैस्सह [7]गमनाश्रवणान्न भूतसम्परिष्वक्तो रंहति जीव इति चेन्न । हि यस्मात् ता एव=[8]प्रस्तुता आप एव अजहल्लक्षणया श्रद्धाशब्देनोच्यन्ते । कुतः? उपपत्तेः=आपः पुरुषवचसो भवंतीत्युपसंहारस्योपपत्तेः अन्यथानुपपत्तेरिति सूत्रार्थः ॥

---

१ बृहदारण्यकोपनिषत् । (५—२—१३)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्राह्मपुराणवाक्यत्वेनोदाहृतम् ।

३ छान्दोग्योपनिषत् । (५—४—२)

[1] आगच्छन्ति—क. [2] "पुरुषस्य"—ग. नास्ति ॥ [3] वाचं—क. [4] सह आगच्छन्ति—क. [5] न युज्यते—क. [6] एवेह्मुह्यपपत्ते—क. [7] गमनश्रवणात्—क. [8] "प्रस्तुता आप एव"—क घ. नास्ति ।

अत्र न भूतानि [1]जीवेन [2]सह गच्छन्ति । १"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती"त्युपक्रमे उत्क्रान्तस्य श्रद्धा[3]सहितस्यैव द्युनामके प्रथमाग्नौ होमश्रवणात् । भूतानामपि सह गतौ उपक्रमे तथोक्तिप्रसङ्गादिति प्राप्ते—

उपक्रमे भूतसहितस्य [4] होमाश्रवणात् न [5]भूतानामसहगतिः कल्प-नीया । २"[6]आपः पुरुषवचसो भवन्ती"त्युपसंहारे त्र्यात्मकानां अपां जीवेन सह गतिश्रवणात् [7]तदनुसारेण [8]श्रद्धां जुह्वतीत्युपक्रमस्य [9]श्रद्धया अद्भिश्च युक्तं [10]जीवं जुह्वतीति व्याख्येयत्वादिति सिद्धान्तःकृतः ॥ ५ ॥

———

[प्रत्यक्षश्रुत्यभावेन जीवानामसहगतिः इति आक्षेपपरिहारः]

**॥ ओं ॥ अश्रुतत्वादिति चेन्न इष्टादिकारिणां प्रतीतेः ॥ ओं ॥ ३-१-६**

[11]प्राणानामग्न्यादिगतिवज्जीवेन सह [12]भूतगतेः साक्षा[13]दश्रवणात् [14]उक्तमयुक्तमिति चेन्न । इष्टादिकारिणां=ईष्टापूर्तादिकारिणां, ३"[15]अथै-नमिति" श्रुत्या भूतैस्सह गतिप्रतीतेरिति सूत्रार्थः ॥

---

१ छान्दोग्योपनिषत् । (५ - ४ - २)

२ छान्दोग्योपनिषत् । (५—९ — १)

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ॥

1 "जीवेन"-ग. नास्ति । 2 "सह"—घ. नास्ति । 3 सहितस्य —क. 4 होमश्रवणात्—क. 5 भूवानामह गतिः—क. 6 अपः—क. 7 तदनुसारिणः—क. 8 "श्रद्धजुह्वतीति"—घ नास्ति ॥ "तदनुसारेणोपक्रम्य व्याख्येयत्वादिति सिद्धान्तः कृतः" ॥—घ. 9 "श्रद्धया" इत्यारभ्य "जुह्वतीति" इत्यन्तं—घ. नास्ति ॥ 10 "जीवं"-ग. नास्ति । 11 प्राणानामाग्न्यादि - ग. 12 भूतगतः—ग. 13 "दश्रुतत्वात्"—ग. नास्ति । 14 साक्षादुक्तमयुक्तं—ग. 15 अथ हैनमिति—क.

[1]अत्र [2]न भूतानि जीवेन सह गच्छन्ति । १ "यत्रास्य पुरुषस्य मृतस्य अग्निं वागप्येती"त्यादिवद्विशिष्य जीवेन भूतगतेः अश्रुतत्वादिति प्राप्ते—

न प्रत्यक्षश्रुत्यभावेन भूतानामसहगतिः मन्तव्या । यजमानमरणे भूतानां सह गतेः २ "[3]अथैनं [4]यजमानं किं न जहाति, भूतान्येव भूतैरेव गच्छति, [5]भूतैर्भुङ्क्ते, भूतैरुत्पद्यते, [6]भूतैश्चरति भूतैर्विचरतीति श्रुतौ विस्पष्टमभिहितत्वेन तद्दृष्टान्तेन सर्वत्रापि भूतगतिसिद्धेः इति सिद्धान्तः कृतः ॥ ६ ॥

---

[ वैराग्यादिभिरेव मोक्षः कर्मणा तु गौण इति निरूपणम् ]

**॥ ओं ॥ भाक्तं वाऽनात्मवित्वात्तथाहि दर्शयति ॥ ओं ॥ ३-१-७**

अमृतत्वमिति शेषः । काम्यकर्म[7]साध्यं अमृतत्वं भाक्तं गौणमल्पकालीनमिति यावत् । कुतः? अनात्मवित्त्वात्, [8]काम्यकर्मकर्मिणः [9]अनात्मज्ञानित्वात् । [10]आत्मज्ञानिन एव मुख्यामृतत्वं, वाशब्दा३ "दपाम सोमे"ति श्रुतेरर्थविशेषः सूचितः । [11]जिज्ञासुकृताकाम्यकर्मणा शुद्धान्तःकरणस्य ज्ञानद्वारा मुख्यामृतत्वं; तथा अपरोक्षज्ञानिकृताकाम्यकर्मणा ज्ञानेन सेध्यति मोक्षेऽ[12]तिशय इति । किमत्र मानमित्यत उक्तं—तथाहि

---

१ बृहदारण्यकोपनिषत् । (५—२—१३)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ।

३ ऋक्संहिता । (८—४८—३)

[1] "अत्र"—ग नास्ति । [2] "न"—क. नास्ति ॥ [3] अथ हैनं—क. [4] "यजमानं"—घ. नास्ति ॥ [5] भूतैरेव भुङ्क्ते—ग. [6] भूतै श्चरहि—क. [7] साध्यत्वं—ग. [8] काम्यकर्मणः—ग. [9] आत्मज्ञानित्वात्—क. [10] आत्माज्ञानिनः—क. [11] जिज्ञासुः कुतो—क. [12] तिशयति—क.

दर्शयतीति । हि यस्मात् १"[1]तमेवं विद्वानित्यादिश्रुतिसमूहः तथा दर्शयतीति सूत्रार्थः ॥

अत्र न [2]मुमुक्षुणा अवश्यमनुष्ठेयं, वैराग्यादि, कर्मणैव मोक्षसिद्धेः । २"अपाम सोमममृता अभूमे"ति श्रुतेरिति प्राप्ते—

अवश्यानुष्ठेयमेव मुमुक्षुणा वैराग्यादि, तद्विना मोक्षासिद्धेः । न चैवं श्रुतिविरोधः । तस्याः अन्यार्थत्वात् । तथा हि । कर्म द्विविधं, काम्यमकाम्यं च । अकाम्यमपि द्विविधम् । ज्ञानात्पूर्वभावि पश्चाद्भावि चेति । तत्सर्वमपि श्रुत्यर्थ एव, अधिकारिभेदात् । [3]अत्र यदा [4]काम्यकर्मपरा श्रुतिः तदा[5]मृतपदेन [6]न मुख्यामृतत्वमाह । किन्तु [7] बहुकालावस्थायित्वरूप[8]गौणार्थमाह । [9]यदा तु [10]ज्ञानात्पूर्वभाव्यकाम्यकर्मपरा, तदा [11]मुख्यामृतत्वरूपमर्थमाह । किं नाम [12]न साक्षात् । किन्तु कर्मणा [13]शुद्धसत्त्वस्य वैराग्यादिद्वारा मोक्षसाधनत्वमाह । यदा [14]तु ज्ञानोत्तरकर्मपरा तदा ज्ञानेन मोक्षेऽतिशयाधायकत्वमाहेति [15]कथमपि कर्मणां साक्षान्मोक्षसाधनत्वं नास्तीति सिद्धान्तः कृतः ॥ ७ ॥

———

१ तैत्तरीयारण्यकम् । (३—१२—७)

२ ऋक्संहिता । (८—४८—३)

[1] तमेव - क [2] मुमुक्षुणो —क. [3] तत्र—ग. [4] काम्यपरा – ग. [5] "मृत पदेन"—घ. नास्ति ॥ [6] "न"—क. नास्ति । [7] अल्पकाल—क. [8] गौणमर्थमाह—क. [9] "यदा तु" इत्यारभ्य "मर्थमाह" इत्यन्तं—क. नास्ति । [10] यज्ज्ञानात् पूर्वभाविकर्मपरा ।—ग. [11] मुख्यामृतसाधनत्व—घ. [12] "न"—क ग. नास्ति । [13] शुद्धतत्त्वस्य वै ज्ञानद्वारा पारम्पर्येणैव । यदा—क. [14] "तु" —घ. नास्ति ॥ [15] कथमपि—क.ग. नास्ति ॥

[ वैराग्यादिसाधनस्य आवश्यकत्वनिरूपणम् ]

**॥ ओं ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॥ ओं ॥ ३-१-८**

कृतस्य कर्मणः अत्यये स्वर्गादौ भोगेन क्षये अनुशयवान् कर्मशेष-सम्बन्धवानेवेमं लोकमायाति, कुतः, [1]दृष्टस्मृतिभ्यां=तथा श्रुतेः स्मृतेश्चेति सूत्रार्थः ॥

अत्र अनपेक्षितमेव वैराग्यादि । कृतस्य कर्मणः भोगेनैव क्षये बीजाभावेन [2]संसाराभावरूपमोक्षसम्भवादिति प्राप्ते—

अपेक्षितमेव वैराग्यादि । १"ततः शेषेणेमं लोकमायाति । पुनः कर्म कुरुते । पुनर्गच्छति । [3]पुनरागच्छतीति" श्रुतेः । २"भुक्त-शेषानुशयवानिमां प्राप्य भुवं पुनः । कर्म कृत्वा पुनर्गच्छेत् पुनरायाति नित्यशः । आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्ययम् । [4]अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ॥ इति स्मृतेश्चेति सिद्धान्तः कृतः ॥ ८ ॥

---

[जीवः न यथा गतस्तथायाति किन्त्वन्यथापीति समर्थनम् ]

**॥ ओं ॥ यथेतमनेवं च ॥ ओं ॥ ३-१-९**

यथा येन मार्गेण इतं स्वर्गं प्रति गतं तथेमं लोकमायाति । अनेवं च=[5]गमनमार्गादन्यमार्गेण चायाति । कुतः तथा [6]श्रुतेरिति सूत्रार्थः ।

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः ॥

[1] दृष्टश्रुतिस्मृतिभ्यां—ग. [2] संसाराभावरूपो—क. संसाराभावमोक्षसम्भवात् ।—ग. [3] "पुनरागच्छति"—क. नास्ति ॥ [4] ततः—ग. [5] गत मार्गादन्य—ग. [6] श्रुतेरिति शास्त्रार्थः सूत्रार्थश्च ॥—क

अत्र गमनानुसारेणैव आयाति जीवः । १"यथेतमागच्छती"ति श्रुतेः इति प्राप्ते—

न जीवो यथा गतस्तथायाति । किन्त्वन्यथाऽ[1]पि । २"धूमादभ्रं अभ्रादाकाशं आकाशाच्चन्द्रलोकं, यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षतीति" श्रुतेः । न चैवं प्राचीनश्रुतिविरोधः । आकाश[2]पर्यन्तं गमनानुसारेणागमनस्याङ्गीकृतत्वेन श्रुतेः तद्विषयत्वादिति सिद्धान्तः कृतः ॥ ९ ॥

---

[जीवस्य गमनागमनं कर्मणैवेति निरूपणम् ]

**॥ ओं ॥ चरणादिति चेन्न तदुपलक्षणार्थेति [3]कार्ष्णाजिनिः ॥ ओं ॥ ३–१–१०**

गतागतं चरणात् [4]कर्माङ्गाचारात् भवति न [5]यज्ञादिकर्मणः, कुतः, [6]तथा श्रुतेरिति चेन्न । [7]तदुपलक्षणार्था=यज्ञा[8]द्युपलक्षणार्था [9]श्रुतिरिति [10]कार्ष्णाजिनिराचार्यो मन्यते इति सूत्रार्थः ॥

अत्र आचारफलमेव गतागतं न यज्ञादिकर्मणः, ३"तद्य इह रमणीयचरणाः रमणीयां योनिमापद्यन्ते । [11]कपूयचरणाः कपूयां [12]योनिमापद्यन्ते" । इति श्रुतेरिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे काषायणश्रुतित्वेनोदाहृतम् ।

३ छान्दोग्योनिषत् । (५—१०—७)

[1] "अपि" इति—घ. पुस्तके नास्ति ॥ [2] पर्यन्तगमनानुसारेण ।—क. [3] काष्ण्यीजिनिः ।—घ. [4] कर्माचारात्—ग [5] यज्ञादिति कर्मणः—क. [6] तथाश्रुश्रुतेः—क [7] तथोपलक्षणार्था - क. [8] द्युपलज्ञणा — ग. [9] श्रुतिः — ग. [10] कार्ष्णाजिनिरयमर्थो — ग [11] 'कपूयचरणाः'—ग नास्ति । [12] योनिमिति श्रुतेः ।—ग.घ.

न गतागतस्य कर्मफलत्वाभावः शङ्क्यः । १ "इष्टापूर्तं मन्यमाना [1]वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा[2]इमं लोकं हीनतरं वा विशन्ति" । इति श्रुत्या, [3]२ त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते", इति स्मृत्या च गतागतस्य कर्मफलत्वोक्तेः । न च ३ "तद्य इहेति" श्रुतिविरोधः । तस्याः उदाहृतश्रुत्याद्यनुरोधेनाजहत्स्वार्थलक्षणया [4]यज्ञाद्यर्थत्वोपपत्तेः । अथ ४ यज्ञेन दानेन तपसा [5]लोकान् जयन्तीति [6]विस्पष्टश्रुतेश्चेति सिद्धान्तः कृतः ॥

एतेषां दशानां अधिकरणानां युगपदेव तात्पर्यमाह—**शुभेन कर्मणा स्वर्गमिति** ॥ काम्येनेति [7]शेषः । यातीति वाक्ष्यमाणं अत्रापि सम्बध्यते । [8]स्वर्गमित्युपलक्षणम् । तथा च काम्येन शुभेन पुण्येन कर्मणा स्वर्गं गत्यागतिगर्भवासादिकं च यातीत्युक्तं भवति ॥

नन्वेतेषामधिकरणानां अनेन [9]तात्पर्यं कथं प्रतिपादितमिनि [10]चेदित्थम् ।

प्रथमाधिकरणे जीवानां सामान्यतः भूतसाहित्येन स्वर्गगमनप्रतिपादनात् । द्वितीये समस्तभूतसाहित्येन गमनसमर्थनात् । तृतीये [11]भूतानां जीवेन सह गतिसाधनाय [12]भूताविनाभूतप्राणानां सह गतेः समर्थितत्वात् ।

---

१ आथर्वणोपनिषत् ॥

२ छान्दोग्योपनिषत् । (५—१०—७)

३ भगवद्गीता । (९—२०)

४ ब्रह्मसूत्रभाष्यटीकायां तत्त्वप्रकाशिकायां उदाहृतं प्रमाणम् ॥

[1] वरिष्ठं—घ. [2] हीमं—क [3] त्रैय्या मां—क [4] यज्ञाद्यर्थतोपपत्तेः ।—क. यज्ञाद्यर्थत्वापत्तेः ।—घ. [5] लोयन्तीति—क. [6] विस्पष्टश्रुतिश्चेति—घ. स्पष्टश्रुतेश्चेति —क. [7] शेषः । जीवः भूतैस्सहेति शेषः ।—क ग [8] स्वर्गं यातीत्युपलक्षणम् । तस्मादायातीत्यादिक मपि ज्ञेयम् ।—क ग. [9] कथं तात्पर्यं—क [10] चेन्न इत्थं —ग. चेन्न—घ. [11] भूतानां जीवानां—क. [12] भूतव्यापकप्राणानां—क.

चतुर्थे [1]पूर्वोक्तप्राणगतेः एवाक्षिप्य समाधानात् । पञ्चमषष्ठयोः पुनः पूर्वोक्तभूतगतेरेवाक्षिप्य समाधानात् । सप्तमाष्टमयोः वैराग्यादेरावश्यकत्वप्रतिपादनेन एतयोरपि गत्याद्युपयुक्तार्थप्रतिपादकत्वात् । न हि वैराग्यादेरनावश्यकत्वे [2]तदर्थं गत्यादिप्रतिपादनं युक्तम् । नवमे [3]स्वर्गादागतिप्रकारस्योपपादनात् । दशमे [4]गत्यादेः [5]कर्मफलत्व[6]स्योपपादितत्वादिति ॥ १० ॥

———

[पापकृतामपि जीवानां गमनागमनमस्तीति समर्थनम् ]

### ॥ ओं ॥ [7]अनिष्टादिकारिणां च श्रुतम् ॥ ओं ॥　३-१-११

[8]इष्टं यागः दत्तादिरादिपदार्थः । नञ् तदभावे तद्विरुद्धे च [9]वर्तते । न केवलं [10]इष्टादिकारिणामेव गतं, किन्नाम, इष्टाद्यकारिणां तद्विरुद्धपापकारिणामपि । कुतः, [11]श्रुतं इति हेतुगर्भं, श्रुत्युक्तत्वात् । च शब्दः दुःखान्तरसमुच्चये इति सूत्रार्थः ॥

अत्र इष्टादिपुण्यकृतामेव गतागतादिक्लेशः नत्विष्टाद्यकारिणां [12]तत्तद्विरुद्धब्राह्मणहननादिकारिणामपि । इष्टादि[13]कारिणां विधिनिषेधभीतियुक्तत्वात् । अन्येषां तदभावात् । [14]बिभ्यत्पतति पादपात् इति [15]न्यायादिति प्राप्ते—

---

1 पूर्वोक्ते—क. 2 तदर्थंगत्यादि—क. 3 स्वर्गादौ—ग. 4 गतागतस्य—क 5 कर्मफलस्य —घ 6 स्योपपादनात् –ग. 7 अनिष्टारिणामपि—क. 8 इष्टं यागः तटाकादिनिर्माणगमादिपदार्थाः—क. 9 "वर्तते" ग नास्ति ॥ 10 इष्टादिकारिणामपि इष्टाद्यकारिणामपि—क. इष्टादिकारिणामेव गतं किन्नामानिष्टादिकारिणामपि इष्टाद्यकारिणां —ग. 11 श्रुतहेतुगर्भं—क. 12 तद्विरुद्धब्राह्मण—क तत्तद्विरुद्धानां—ग. 13 कारिणा —क. 14 बिभ्यत्पतति पादपातित – ग. 15 न्यायापादिति—क.

न केवलमिष्टादिकारिणामेव [1]गतागतादिक्लेशः। किन्नाम, इष्टाद्य-कारिणां तद्विरुद्धब्राह्मणहननादिकारिणामपि। १"तद्य इह [2]शुभकृतो ये चाशुभकृतः ते अशुभमनुभूयावर्तन्ते। पुनः कर्म कुर्वन्ति, पुनः गच्छन्ति। पुनरागच्छन्तीति [3]श्रुतेः। २"सर्वे वा एते अशुभकृतः संयमने प्रपन्तीति" श्रुत्यन्तराच्च।

३"गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः"॥ इति स्मृतेश्चेति सिद्धान्तः कृतः॥ ११॥

---

[नरकाणां सप्तसंख्यावत्त्वसाधनम्]

॥ ओं ॥ अपि सप्त ॥ ओं ॥ ३-१-१२

ब्रह्महननादिफलानि वैराग्यादीनि नरकाणि पञ्च। मिथ्या[4]ज्ञानफले [5]तामिस्रान्धतामिस्राख्ये द्वे नरके। एवं सप्तापि सन्ति, कुतः तथा स्मृते-रिति सूत्रार्थः॥

[6]अत्र [7]नरकभोगो न नित्यः। ४"यावदि[8]न्द्राश्चतुर्दशेत्यादौ अवधिमत्त्वश्रवणादिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतम्॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्ठरव्यश्रुतित्वेनोदाहृतम्॥

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः।

४ ब्रह्मसूत्रभाष्यटीकायां तत्वप्रकाशिकायां एतदधिकरणे उदाहृता श्रुतिः॥

[1] गतागतक्लेशः—ग. [2] शुभमनुभूयावर्तन्ते अशुभकृतः संयमने पतन्ति—क. शुभकृतो ये वाशुभकृतः—घ. [3] श्रुतेः इति सिद्धान्तः कृतः—घ. [4] ज्ञानादिफले—क. [5] तामिश्रान्धतामिश्रे- ग. [6] "अत्र"—घ. नास्ति। [7] नरकभागो—क. [8] न्द्राश्चतुर्दश—क.

नरकभोगो भवत्येव नित्यः । १"[1]नैवेत [2]उत्तिष्ठन्ते अपि कर्हिचिदिति" श्रुतेः । [3]अनित्यत्वप्रतिपादकमानविरोध इति चेन्न । भवेदयं विरोधः यदि नरकैक्यं स्यात् । नचैवं । किन्नाम, सप्त नरकाणि सन्ति । कुतः,

२" रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ॥
[4]तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ [5]सम्प्रकीर्तितौ ॥"

इति वचनादिति सिद्धान्तः कृतः ॥ १२ ॥

---

[भगवतः जीवान्तस्स्थित्वा जीवप्रेरकत्वेऽपि न तस्य नरकानुभव इति निरूपणम् ]

**॥ ओं ॥ तत्रापि च [6]तद्व्यापारादविरोधः ॥ ओं ॥ ३-१-१३**

[7]तत्रापि सदुःखेऽपि नरके तद्व्यापारात् । ईश्वरप्रेरणाख्य[8]व्यापाराभ्युपगमात् । च शब्देन दुःखाननुभवेनेति [9]सूचयति । तथाचाविरोधः । ईश्वरस्यापि दुःखं स्यादिति विरोधो नास्ति । कुतः तथा श्रुतेः स्मृतेश्चेति सूत्रार्थः ।

अत्र [10]न नरकं सदुःखं ईश्वरस्यापि तद्गतस्य दुःखप्रसङ्गादिति प्राप्ते—

भवत्येव नरकं सदुःखं, न चेश्वरस्य तद्गतस्य दुःखप्राप्तिः । नरकस्य तद्वशत्वेन दुःखानुभवाभावेऽपि तत्प्रेरकत्वाभ्युपगमात् । न च तत्र

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्ठरव्यश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे महाभारतवाक्यत्वेनोदाहृतम् ।

[1] नैवत —क. [2] उत्तिष्ठन्ति—क. [3] अनित्यप्रतिपादक—ग. [4] तामिश्रश्चान्धतामिश्रौ —ग. [5] परिकीर्तितौ —क. [6] तद्व्यापारादिविरोधः—क. [7] तत्रापि दुःखे नरके—ग. [8] व्यापारात् इत्यभ्युपगमात्—क. [9] सूचितम्—क. [10] "न" —घ. नास्ति ॥

प्रमाणाभावः । १"स स्वर्गे स भूमौ स नरके सोऽन्धे तमसि [1]प्रवृत्तिकृदेक एवानुप्रविष्टो नासौ दुःखभुगीश्वरः । प्रभुत्वात्सर्वं पश्यति । सर्वं कारयती''ति श्रुतेः ।

२"नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते ।
नीचोच्चतैव दुःखादेः भोग इत्यभिधीयते ।
नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः" ॥

इति स्मृतेश्चेति सिद्धान्तः कृतः ॥ १३ ॥

---

[देवयानपितृयानगमनविषये जीवानां स्वातन्त्र्याभावनिरूपणम्]

## ॥ ओं ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ओं ॥ ३-१-१४

३"[2]अथ एतयोः पथोः न कतरेण च ४गच्छन्ती''ति श्रुतिबलेन भूतानां [3]फलरूपगतिस्वातन्त्र्यं न मन्तव्यं, कुतः? विद्याकर्मणोरिति तु प्रकृतत्वात् । अत्रेति शब्दो वाक्यविशेषद्योतकः । तुशब्दोऽपिशब्दार्थः । ५"तद्य [4]इत्थं विदु''रित्यत्र [5]विद्याकर्ममार्गयोः प्रकृतत्वेन श्रुतेस्तद्विषयत्वोपपत्तेः इति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पौत्रायणश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे भागवततन्त्रवाक्यत्वेनोदाहृतम् ।

३ छान्दोग्योपनिषत् । ५—१०—८

४ "गच्छन्ति" इत्यध्याहारः ।

५ छान्दोग्योपनिषत् ५—१०—१

[1] प्रवृत्तिकृदेककदे एव—ग. [2] एतयोः पथोः नैकतरेण गच्छन्ति—क. [3] फलगतिस्वातन्त्र्यं—क. [4] इह—ग. [5] विद्याकर्ममार्गयोरपि—क. विद्याकर्मणोरिति—ग.

अत्र भवन्त्येव [1]जीवाः गत्यादिकाले स्वतन्त्राः "[2]तेऽर्चिषमभिसम्भवन्ति । ते धूममभिसम्भवन्ती"त्युक्त्वा १"अथैतयोः [3]पथोः न कतरेण च तानीमानि क्षुद्रमिश्राणि [4]असकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमि"त्युक्तत्वात् । न हि स्वातन्त्र्याभावे [5]गच्छन्ति न गच्छन्तीति व्यपदेशो युज्यत इति प्राप्ते—

न जीवाः [6]गत्यादिफले स्वतन्त्राः, प्रमाणाभावात् । न च पूर्वोक्तश्रुतिरेव प्रमाणमिति वाच्यम् । तस्याः [7]मार्गद्वयरूपविद्याकर्मविषयत्वात् । २"तद्य इत्थं विदुर्ये [8]चेमेऽरण्ये श्रद्धातप इत्युपासते, तेर्चिषमभिसम्भवन्ति" । ३"अथ य [9]इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते [10]धूममभिसम्भवन्ती'ति विद्याकर्ममार्गयोः प्रकृतत्वात् । न च विद्याकर्मवत् फलभूत[11]देवयानपितृयानयोः अपि प्रकृतत्वात् अनिर्णय एवेति वाच्यम् । ४[12]विद्यापथः [13]कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ ।

तद्वर्जितः त्रिधा याति तिर्यग्वा नरकं तमः" ॥ इति [14]स्मृतिसमाख्याना[15]न्निर्णयोपपत्तेः । न च साधनवत्फलेऽपि स्वातन्त्र्यं स्यादिति युक्तम् । साधने विधिसद्भावात्, फले तदभावात् । विध्यादिशास्त्रा-

---

१ छान्दोग्योपनिषत् । (५—१०—८)

२ छान्दोग्योपनिषत् । (५—१०—१)

३ छान्दोग्योपनिषत् । (५—१०)

ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिकायां तथा अभिनवचन्द्रिकायां च इयं श्रुतिः उदाहृता ॥

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः ॥

[1] जीवगत्यादिकाले—क. [2] तेऽर्चिषमभिसम्भवन्तीत्युक्त्वा—क [3] पथोः नैकतरेण गच्छन्ति—क. [4] असकृदावृत्तीनिभवन्ति—क. [5] "गच्छंति"—क. नास्ति ॥ [6] गत्यादिफलस्वतन्त्राः–ग. [7] मार्गद्वयसाधनविद्या—क. [8] चारण्ये—क. [9] इमे वा ग्राममिष्टापूर्ते—क. [10] भूममभि—क. [11] दैवयान—क. [12] पथ्या पथः—क. [13] कर्मपथोः—क. [14] "स्मृति"—क. नास्ति । [15] न्निर्णयोपपत्तेः इति सिद्धान्तः कृतः ।—क.

## निरयं च विकर्मणा ॥

वैयर्थ्यायैव हि साधनेषु ईश्वरः स्वातन्त्र्यं ददातीति प्रागुक्तमिति सिद्धान्तः कृतः ॥

एकादशाधिकरणमारभ्य चतुर्णामधिकरणानां युगपदेव तात्पर्यमाह—**निरयं च विकर्मणा इति** ॥ च शब्दः विकर्मणेत्यनेन सम्बध्यते । स च तु शब्दार्थः । [1]सदुःखमिति [2]शेषः । [3]यातीत्यस्यात्राप्यनुषङ्गः । [4]गत्यादा[5]वस्वतन्त्र इति [6]शेषः । विकर्मणेत्यत्र [7]वीत्यभावार्थो विरुद्धार्थश्च, नामरूपा[8]द्विमुक्ता इत्यत्रापि [9]नामरूपादमुक्तत्वमुच्यते [10]विप्रियमित्यादिवदिति षट्प्रश्नोपनिषद्भाष्ये वीत्यस्याभावार्थत्वोक्तेः ।

[11]"कृष्णस्य विप्रियो राजा धार्तराष्ट्रः सहानुजः" ॥ इति भारतोक्तेश्च । [12]विरुद्धार्थत्वं [13]तु स्फुटमेव । [14]एवं च विकर्मणा तु यज्ञादिकर्माकरणेन ब्राह्मणहननादिविरुद्धकर्मणा निषिद्धकर्मणेति यावत् । [15]उक्तविधं निरयं यातीत्यर्थ उक्तो भवति । कथं तात्पर्यमुक्तमिति चेन्न । एकादशे विहितकर्माकारिणां निषिद्धकर्मकारिणां च निरयप्राप्तेः समर्थनात् । [16]द्वादशे विहितकर्मफलस्य निरयस्य नित्यत्वसमर्थनात् । त्रयोदशे विकर्मफलस्यैव निरयस्य सदुःखत्वसमर्थनात् । चतुर्दशे विकर्मफलनरकादिगतिस्वातन्त्र्य[17]निरासादिति ॥ १४ ॥

———

[1] "सदुःखमिति शेषः"—घ. नास्ति । [2] विशेषार्थः तुशब्दः इति पाठः भाति ॥ [3] यातीत्यस्याप्यत्राप्यनुषङ्गः—क. [4] "गत्यादावस्वतन्त्र" इत्यारभ्य "विकर्मणेत्यत्र" इत्यन्तं—घ. नास्ति ॥ [5] वस्वातन्त्र-क. [6] "शेषः"—ग. नास्ति । [7] वीत्युभयार्थो—क. [8] द्विमुक्त इत्यपि—क. [9] नामरूपाद्विमुक्तत्व—क. [10] विप्रिय इति यावत् । इति—क. [11] "कृष्णस्य विप्रियो इत्यारभ्य "भारतो क्तेश्च" इत्यन्तं —घ. नास्ति । [12] विरुधार्थत्वं—क [13] "तु"—घ. नास्ति । [14] एवं विकर्मणा यज्ञादि—क. [15] "उक्तविधं"—घ. नास्ति । [16] द्वादश विकर्मफलस्य—क. [17] निरसनादिति—क.

[तमसि सुखाभावसाधनम् ]

## ॥ ओं ॥ न तृतीये तथोपलब्धेः ॥ ओं ॥ ३-१-१५

तृतीये अन्धे तमसि तिर्यग्यातनापेक्षया तमसस्तृतीयत्वम् । सुखं न मन्तव्यं कुतः तथोपलब्धेः श्रुतौ स्मृतौ च तथा दर्शनादिति सूत्रार्थः ॥

अत्र अन्धन्तमोऽपि सुखयुक्तमेव । दुःखयुक्तत्वात् । दुःखं हि सुखाविनाभूतम् ।

१ "यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते ।
अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः" ॥

इति वचनादिति प्राप्ते—

नान्धे तमसि सुखलेशो मन्तव्यः । २ "[1]अथाविद्वानकर्माऽवाग्गच्छति । [2]त्रिधा ह वा वाग्गतिस्तिर्यग्यातना तम इति । द्वे वाव सुखानुवृत्ते न तमः सुखानुवृत्तमिति" श्रुतेः ।

३ "तिर्यक्षु नरके चैव सुखलेशो विधीयते ।
नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन" ॥

इति स्मृतेश्चेति सिद्धान्तः कृतः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं स्मृतिवचनम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पर्ववाक्यत्वेनोदाहृतम् ॥

[1] अथाविद्वानकर्मावाग्गच्छति ।—क. अथाविद्वानकर्मा वा गच्छति ।—ग

[2] "त्रिधा ह वा" इत्यारभ्य "ग्गतेस्ति" इत्यन्तं ग. नास्ति । त्रेधा—क.

## मिथ्याज्ञानेन च तमो

तस्य तात्पर्यमाह **मिथ्याज्ञानेन च तम इति** ॥ च शब्दः पूर्वोक्तविकर्मसमुच्चायकः । हरिद्वेषादिरूपविकर्मणा मिथ्याज्ञानेन च [1]तमः इति सुखलेशरहितं नित्यनरकं यातीत्यर्थः ॥ १५ ॥

---

[कर्मिणः धूमादिदैवतैक्यं तत्पदप्राप्तिर्वा नास्तीति समर्थनम् ]

### ॥ ओं ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ओं ॥ ३-१-१६

तत्स्वाभाव्यापत्तिः—तस्य धूमादेः स्वभाव इव स्वभावो यस्य सः [2]तत्स्वभावः तस्य भावः तत्स्वाभाव्यम् । धूमादिदेवतास्वभावसदृशस्वभावत्वं तस्यापत्तिः प्राप्तिः न तु तदैक्यं तत्पदप्राप्तिर्वा. [3]कुतः? [4]उपपत्तेः । अन्यस्यान्यभावानुपपत्या अस्यैवार्थस्योपपत्तेः इति सूत्रार्थः ॥

अत्र कर्मिणः स्वर्गादागतौ [5]धूमदिदेवतैक्यं तत्पदप्राप्तिर्वा भवतीत्यभ्युपेयम् । "१धूमो भूत्वाभ्रं भवती" ति सामानाधिकरण्यश्रुतेरिति प्राप्ते—

न [6]कर्मिणस्तत्तादात्म्यं तत्पदप्राप्तिर्वा [7]सम्भवति अन्यस्य अन्यभावासम्भवात् तत्पदस्य नियताधिकारिभिः ज्ञानेनैव प्राप्यत्वात् । तस्माद्धूमादिषु प्रविश्य तद्गतौ गति. तत्स्थितौ स्थिति[8]रित्यादिरूपधूमादिदेवतास्वभावसदृश[9]स्वभावत्वप्राप्तिरेव श्रुत्यर्थः । न तु तदैक्यं तत्पदप्राप्तिर्वा ।

---

१ ब्रह्मसूत्रभाष्ये गुतदधिकरणे काषायणश्रुतित्वेनोदाहृतम् ।

[1] तपः सुखलेशरहित—ग. तमः इति तित्यनरकं—घ. [2] तत्स्वाभावः—क. [3] कुतः उपपत्या—ग. [4] "उपपत्तेः" । इत्यारभ्य "भावानु" इत्यन्तं—ग. नास्ति । [5] धूमादिदैवतैक्यं—क. [6] कर्मिणां तादात्म्यं—क. [7] भवतीति—क. सम्भवतीति—ग. [8] रित्यादिधूमादि—ग. [9] स्वभावप्राप्तिरेव—ग.

१ "धूमादि[1]भावप्राप्तिश्च तद्गतौ गतिरेव तु ।
[2]स्थिति: स्थितौ प्रवेशश्च लघुत्वादिस्तथैव च" ॥

[3]इति स्मृतेरिति सिद्धान्त: कृत: ॥ १६ ॥

———

[कर्मी स्वर्गतः संवत्सरादर्वाक् देहं प्राप्नोतीति समर्थनम्]

## ॥ ओं ॥ नातिचिरेण विशेषात् ॥ ओं ॥ ३-१-१७

[4]कर्मिण: अतिचिरेण स्वर्गादागमनं नास्ति । किन्त्वचिरेण । कुत: ? विशेषात् । [5]शीघ्रागमनप्रतिपादकविशेषवचनादिति सूत्रार्थ: ॥

अत्र कर्मी [6]स्वर्गान्निर्गतश्चिरेणैव देहं प्राप्नोति । २यथेतमाकाश-माकाशाद्वायुं वायुर्भूत्वा [7]धूमो भवति, धूमो भूत्वाऽभ्रं भवति, अभ्रं भूत्वा मेघो भवति, इत्यादावागमनवेलायां [8]बहुस्थानप्राप्तिश्रवणात् । बहुस्थानगमनं च [9]नाचिरेण [10]सम्भवतीति प्राप्ते—

कर्मी अचिरेणैव संवत्सरादर्वाक् देहं प्राप्नोति । ३"तद्य इह रमणीयचरणा: अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते इति [11]श्रुते: ।

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गरुडपुराणवाक्यत्वेनोदाहृतम् ।
२ ब्रह्मसूत्रभाष्ये यथेताधिकरणे काषायणश्रुतित्वेनोदाहृतम् ॥
३ छान्दोग्योपनिषत् (५—१०—७)

[1] भावप्रावप्राप्तिश्च—क. [2] स्थित:—क. [3] इति सिद्धान्त: कृत: ।—क. [4] कर्मणि अतिचिरेण स्वर्गादागमनं—क. [5] शीघ्रमागमन—क [6] स्वर्गान्निर्गत्य निर्गतश्चिरेण—क. [7] भूमोभवति—क. [8] "बहु" इत्यारभ्य "णात्" इत्यन्तं—ग. नास्ति । [9] नातिचिरेण—ग. [10] भवतीति—क. [11] "श्रुते:"—क. नास्ति ।

१ "स्वर्गाल्लोका[1]दवाक् प्राप्तो वत्सरात्पूर्वमेव तु ।
मातुः [2]शरीरमाप्नोति पर्यटन् [3]यत्र तत्र च" ॥

[4]इति स्मृतेरिति सिद्धान्तः कृतः ॥ १७ ॥

---

[स्वर्गादवरोहणे कर्मिणां दुःखाभावनिरूपणम्]

॥ ओं ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ओं ॥ ३-१-१८

आगतौ कर्मिणः श्रुत्युक्तव्रीह्यादिभावो नाम अन्याधिष्ठिते व्रीह्यादिदेहे प्रवेश एव न तु तदभिमानित्वम् । येन छेदनादिना दुःखं स्यात् । कथं तर्हि व्रीहियवा इत्यैक्येनोक्तिरित्यत उक्तं—पूर्ववदिति । धूमो [5]भूत्वेति पूर्वोक्तयुक्तिर्यथा तथेति, कुतः? श्रुतौ स्मृतौ च तथाभिलापादिति सूत्रार्थः ॥

अत्र अस्त्येव कर्मिणामागमने दुःखं [6]त इह २ [7]व्रीहियवा ओषधिवनस्पतयस्तिला [8]माषा इति जायन्त इति [9]श्रुतौ [10]तेषां व्रीह्यादिभावदर्शनात् । तद्भावे छेदनादिना [11]दुःखं भवति नियमादिति प्राप्ते—

नागतौ कर्मिणां व्रीह्यादिभावेन दुःखं मन्तव्यम् । तत्रैव मानाभावात् । नचोक्तश्रुतिर्मानं, यतोऽस्यां श्रुतौ कर्मिणो [12]धूमादाविव व्रीह्यादिशरीरप्रवेश एवोच्यते । न तु तच्छरीरा[13]भिमानित्वम् । न च तच्छरीराभिमानाभावे वृद्ध्याद्ययोगः । तदन्येनाधिष्ठितत्वादिति सिद्धान्तः कृतः ॥ १८ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे नारदीयपुराणवाक्यत्वेनोदाहृतम् ॥

२ छान्दोग्योपनिषत् (५—१०—६)

[1] दर्वाक्—क. [2] शरीरं प्राप्नोति—क. [3] तत्र–क. [4] इति सिद्धान्तः कृतः ।–क [5] भूमत्वेति —क. [6] तद्य—क. [7] व्रीहियावा —घ. [8] माषा जायन्त इति —क. [9] श्रुतेः—क [10] एषां —ग. [11] दुःखनियमादिति —ग.घ. [12] "धूमादाविव" —घ नास्ति । [13] भिम नत्वं—क.

[जीवः पितृदेहप्रवेशानन्तरमेव मातृदेहं प्रविशतीति समर्थनम् ]

## ॥ ओं ॥ रेतः सिग्योगोऽथ ॥ ओं ॥ ३-१-१९

कर्मिणः प्रथमं रेतः सिग्योगः पितृप्रवेशः, अथ पितृप्रवेशानन्तरं मातृप्रवेशः । कुतः ? तथा श्रुतेः इति सूत्रार्थः ॥

अत्र न जीवस्य पितृप्रवेशोऽस्ति ।

१ "[1]स्वर्गादवाग्गतो देही व्रीह्यादीतरदेशगः" ॥

इति वचनादिति प्राप्ते—

अस्त्येव पितृप्रवेशो जीवस्य । २ततो [2]रेतस्सिचमेवानुप्रविशति, अथ मातरं, अथ प्रसूते, स कर्म कुरुते इति श्रुतेः । न च पितृप्रवेशो व्यर्थः । [3]पितृप्रवेशस्योत्पत्स्यमानजीवसंस्कारतया [4]ईशक्लृप्त्या तस्य संस्कारार्थत्वात् ।

३ "ईशक्लृप्त्यैव पितरं [5]प्रविश्यायाति मातरम्" । [6]इत्यादेः । न च मातुरेवोदरं [7]व्रजेदित्यवधारणानुपपत्तिः । अवधारणस्यायोग[8]व्यवच्छेदार्थत्वाङ्गीकारादिति सिद्धान्तः कृतः ॥ १९ ॥

[सामान्यविशेषजननयोः निरूपणम् ]

## ॥ ओं ॥ योनेः शरीरम् ॥ ओं ॥ ३-१-२०

कर्मी पितृद्वारा मातृयोनेः प्रवेशानन्तरं शरीरं प्राप्नोतीति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे वराहपुराणवाक्यत्वेनोदाहृतम् ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्ठरव्यश्रुतित्वेनोदाहृतम् ॥

३ ब्रह्मसूत्रन्यायविवरणे एतदधिकरणे उदाहृतं वचनम् ॥

[1] स्वर्गादर्वा (वा) ग्गतश्चापि मातुरेवोदरं व्रजेत् ॥—क. [2] रेतस्सिग्रे वा—क. [3] अत्र वाक्यपातःऊह्यते । योग्यपाठस्तु—"पितृप्रवेशस्योत्पत्स्यमान जीवसंस्कारतया सार्थक्यात्" इति भाति ॥ [4] ईशतिथा—क. [5] प्रविश्यत्यथ—क. [6] इत्यादिश्रुतेः—क. [7] व्रजेदित्येवं धारणा—क. [8] व्यवच्छेदकत्वा—ग.

अत्र स्वर्गा[1]दागतस्य कर्मिणः [2]पितृशरीरं [3]प्रविश्य योनिद्वारा मातरं प्रविश्य कललबुद्बुदादिक्रमेण देहप्राप्तिर्नास्ति किन्तु [4]केषाञ्चिच्छुकादि-जीवानां मातृप्रवेशादिकमन्तरेण देहप्राप्तेः [5]दर्शनात् । कस्यचित्पितरं प्रविष्टस्य योनिप्रवेशमन्तरा संस्पर्शद्वारेण मातृप्रवेशेन देहलाभः । अपरस्य तु पितृप्रवेशं विनैव अन्नादिद्वारा मातृप्रवेशेन देहलाभः । अपरस्य मातृ-प्रवेशमन्तरा पितुरेव देहप्राप्तिः । कस्यचित् अन्तर्वा बहिर्वा सिद्धदेह-प्राप्तिः । अतो अत्यायासाभावान्नातिवैराग्येण कृत्यमिति प्राप्ते—

[6]अस्त्येव स्वर्गादागतस्य कर्मिणः पितृप्रवेशः । ततो योनिद्वारा मातृप्रवेशः, ततः कललबुद्बुदादिक्रमेण देहप्राप्तिश्च । कुतः ? १ [7]दिवः स्थास्नून् गच्छति, स्थास्नुभ्यः पितरं, पितुः मातरं मातुश्शरीरं शरीरेण जायत इति श्रुतेः ।

२ "स्थावराणि दिवः [8]प्राप्तः स्थावरेभ्यश्च पूरुषम् ।
पुरुषात् स्त्रिय[9]मापन्नः ततो देहं यथाक्रमम् ॥
देहेन जायते जन्तुः इति सामान्यतो जनिः ।
विशेषजननं चापि प्रोच्यमानं निबोध मे ॥
स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा ।
गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु च ॥"

इति स्मृतेश्च । अतः सामान्यजन्मनि [10]अत्यायासाभवादितरत्रातिवैराग्येण भगवान् भजनीय इति सिद्धान्तः कृतः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पौष्याणश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्राह्मपुराणवाक्यत्वेनोदाहृतम् ।

[1] दागकर्मिणः—ग. [2] पितरं—क. [3] प्रवेश्य—घ. [4] "केषाञ्चित्" इत्यारभ्य "दर्शनात्" इत्यन्तं—घ. नास्ति । [5] दर्शनात् । अत्यायासाभावाच्च वैराग्येण कृत्य-मिति प्राप्ते ॥—क ग. [6] अस्त्येव खलु—क. [7] दिवः स्थास्नू गच्छति—ग. दिव-स्थास्नून् गच्छति—घ [8] प्राप्ताः—क. [9] मापन्नाः—क. [10] अत्यायासाभावा—क.

**ज्ञानेनैव परं पदम् ।**
**याति तस्माद्विरक्तस्सन् ज्ञानमेव समाश्रयेत् ॥**

---

षोडशाधिकरणमारभ्य एतेषां पञ्चानां अधिकरणानान्तु [1]तात्पर्यस्योपलक्षणया शुभेन कर्मणा [2]स्वर्गं इत्यनेनैवोक्तत्वात् न पृथगुक्तम् । कथमिति चेन्न । षोडशाधिकरणे [3]स्वर्गादागतस्य [4]धूमादिभावप्राप्तेः प्रतिपादितत्वात् [5]सप्तदशाधिकरणे स्वर्गादागतस्य [6]अचिरेण गर्भवासादिप्राप्तेः समर्थनात् । [7]अष्टादशाधिकरणे [8]आगमनकाले व्रीह्यादि[9]शरीरप्रवेशस्योक्तत्वात् । [10]एकोनविंशत्यधिकरणे आगतिकाले पितृप्रवेशसमर्थनात् । विंशत्यधिकरणे स्वर्गादागतस्य पितुःसकाशात् योनिद्वारा मातृप्रविष्टस्य शरीरप्राप्तेः समर्थनादिति । एवं पादत्रयेण पादतात्पर्यमभिधाय चतुर्थपादेन परिशेषसिद्धमर्थमाह—**ज्ञानेनैव परं पदमिति** । एवकारेण काम्यकर्मादिव्यावृत्तिः । ज्ञानेनैव परं [11]पदं उत्तमस्थानं मोक्षं यातीत्यर्थः ॥

पादार्थमुपसंहरति ॥ **तस्मादिति** ॥ [12]यस्मात् काम्यकर्मादिना स्वर्गादिप्राप्तिः, यस्माच्च ज्ञानेनैव नित्यपुमर्थो मोक्षः, तस्मान्मोक्षादितरत्र विरक्तस्सन् [13]मोक्षार्थं ज्ञानमेव समाश्रयेदित्यर्थः ॥ २० ॥

[1] तात्पर्यस्य शुभेन—क. [2] स्वर्गं यान्तीत्यनेन—क. स्वर्गं यातीत्यनेन—ग. [3] स्वर्गादागत्य—क. [4] धूमादिप्राप्तेः—क. [5] सप्तदशे—क. [6] चिरेण—क. [7] अष्टादशे—क. [8] आमनकालव्रीह्यादि—क. [9] शरीरस्योक्तत्वात्-क. [10] एकोनविंशे—क. [11] पदन्तूत्तमस्थानं—क. [12] तस्मात्—ग. [13] मोक्षार्थज्ञानमेव—क.ग.

[1] मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य प्रथमः पादः ॥

॥ श्री कृष्णार्पणमस्तु ॥

---

[1] अयं श्लोकः—क.ग. नास्ति ।

## अथ तृतीयाध्यायस्य द्वितीयः पादः

श्रीगुरुभ्यो नमः

### सर्वावस्थाप्रेरकश्च

---

हरिः ओम्

१ [1]सर्वदेवमुखान्तस्थं २अर्चितं समयद्वये ।
परश्वधधनुष्मन्तं भार्गवं राममाश्रये ॥ १ ॥

वैराग्यनिरूपणानन्तरं [2]अवसरसङ्गत्या प्राप्ता भक्तिरस्मिन्पादे निरूप्यते ॥

[स्वप्नपदार्थः सत्यः तत्प्रदर्शकश्च भगवान् इति निरूपणम्]

**॥ ओं ॥ सन्ध्ये सृष्टिराह हि ॥ ओं ॥ ३-२-१**

सन्ध्ये जाग्रत्सुषुप्तिसन्धौ [3]भवे स्वप्ने सृष्टिः=[4]स्वाप्नार्थानां ईश्वरादेव उत्पत्तिरनन्तरमेव [5]निरोधश्च भवति । कुतः? हि यस्मात् श्रुतिरिममर्थमाहेति सूत्रार्थः ॥

अत्र स्वप्नविषयो नेश्वराधीनः असत्त्वात् । न चासिद्धो हेतुः प्रागूर्ध्वमनुपलम्भात् । न च [6]तात्कालिकसृष्टि[7]निरोधाभावात् अनुपलम्भो

---

१ "अग्निर्वै देवानां मुखमिति" श्रुतेः सर्वदेवमुखभूते अग्नौ अन्तर्यामितया विद्यमानमित्यर्थः ।

२ प्रातस्सायङ्कालाख्यसमयद्वये अग्निहोत्रिभिः आहुतिप्रदानेन पूजितमित्यर्थः ॥

[1] अयं श्लोकः—क.ग. नास्ति । [2] अवसरप्राप्ता—ग.घ. [3] भवेत्—क. भावे—ग. [4] स्वप्नार्थानां—क. [5] विरोधश्च—क. [6] तत्काले-ग.घ. [7] विरोधा-क.

न दोषायेति वाच्यम् । प्रमाणाभावात् । [1]कर्तृपादाननिमित्तानां अभावाच्चेति प्राप्ते —

[2]ईश्वराधीन एव स्वप्नविषयः, सत्यत्वात् । न च प्रागूर्ध्वमुपलम्भप्रसङ्गः । तत्काल एव सृष्टिनिरोधाङ्गीकारात् । न चात्र प्रमाणाभावः । १ "अथ रथान् रथयोगान् पथः सृजते" इति श्रुतेः । न च कर्तुरभावात् [3]सृष्ट्ययोगः । २ "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो [4]निर्मिमाण" इति श्रुत्या ईश्वरस्यैव कर्तृत्वाङ्गीकारात् । न चोपादाननिमित्ताभावः । वासनायाः उपादानत्वेन ईश्वरेच्छायाश्च निमित्तत्वेनाङ्गीकारात् । [5]न चात्र मानाभावः ॥

३ "मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः ।
प्रदर्शयति जीवाय स स्वप्न इति गीयते ॥"

इति [6]स्मृतेश्चेति सिद्धान्तः कृतः ॥ १ ॥

— ———

[स्वप्नतिरोभावस्य ईश्वराधीनत्वसमर्थनम् ]

## ॥ ओं ॥ [7]पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ओं ॥ ३-२-२

[8]पराभिध्यानात्तु [9]ईश्वरेच्छयैव तिरोहितं स्वप्नतिरोधानं न [10]प्रबोधेन ।

१ बृहदारण्यकोपनिषत् । (६—३—१०)
२ कठोपनिषत् । (५ ८)
३ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्माण्डपुराणवाक्यत्वेनोदाहृतम् ॥

[1] कर्त्रुपादान—घ कर्तृपादान—ग. [2] स ईश्वराधीन—क. [3] सृष्ट्यभावयोगः—क सृष्ट्यभावः—ग. [4] निर्ममाणः—घ. [5] न च मानाभावः—घ. [6] स्मृतेरिति—क. [7] परा भिध्यानात्—ग. [8] पराभियानात्—ग [9] परमेश्वरेच्छयैव—ग. [10] प्रबोधनं—ग.

कुतः ? हि यस्मात् अस्य जीवस्य बन्धमोक्षौ ततः परमेश्वरेच्छयैव इति सूत्रार्थः ॥

अत्र स्वप्न[1]तिरोभावो [2]नेश्वरेच्छाधीनः किन्तु [3]बाह्यज्ञानाधीनः, [4]तन्निमित्तत्वेन प्रतीयमानत्वादिति प्राप्ते—

स्वप्न[5]तिरोभावः [6]ईश्वराधीन एव । [7]ननु बाह्यज्ञाननिमित्तत्वेन [8]प्रतीयमानत्वात् कथमीश्वराधीनत्वमिति चेदित्थम् । यथा खलु बन्धमोक्षयोः अज्ञानज्ञान[9]निमित्तत्वेन प्रसिद्धावपि न [10]बन्धमोक्षौ अज्ञानज्ञानाधीनौ तयोः जडत्वेन अस्वातन्त्र्यात् । किन्नाम ।

१"बन्धको भवपाशेन भवपाशाच्च [11]मोचकः ।" इत्यादेरीश्वराधीनावेव । तथा स्वप्नाविर्भाव[12]तिरोभावावज्ञाननिमित्तत्वेन प्रतीयमानावपि ईश्वराधीनावेव । कुतः ?

२"स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च ।
तदिच्छया [13]यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ ॥"

इति [14]स्मृतेरिति सिद्धान्तः कृतः ॥ २ ॥

———

१ ब्रह्मसूत्रानुव्याख्याने जिज्ञासाधिकरणे उदाहृतप्रमाणम् ।
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कूर्मपुराणवाक्यत्वेनोदाहृतम् ।

1 तिरोधानो—ग. 2 नेश्वराधीनः—क. नेश्वरेच्छाधीनौ—घ. 3 बाह्याज्ञानज्ञानाधीनौ - घ. 4 तस्मिन्निमित्तत्वेन—क. 5 तिरोभावौ—घ. 6 ईश्वराधीनावेव—घ 7 न तु बाह्यज्ञाननिमित्तत्वेन—क. नन्वज्ञानज्ञाननिमित्तत्वेन—घ. 8 न प्रतीयमानत्वात्—क. अप्रतीयमानत्वात्—घ. 9 निमित्तत्वप्रसिद्धौ—ग. निमित्तत्वप्रसिद्धावपि–घ. 10 बन्धमोक्षावपि—क. 11 मोचनम्—क. 12 तिरोभावज्ञान—ग. 13 तयोर्ह्यस्य—क 14 स्मृतिरिति—क.

[जाग्रदवस्थायाः परमात्मैकाधीनत्वसमर्थनम् ]

**॥ ओं ॥ देहयोगाद्वासोऽपि ॥ ओं ॥ ३-२-३**

जीवस्य [1]देहयोगात् देहाभिमानेन वासोऽपि अवस्थितिरपि जाग्रदवस्थाऽपि पराभिध्यानादेव । [2]कुतः ? तथा श्रुतेरिति सूत्रार्थः ॥

अत्र न जागरणं [3]भगवदधीनं तस्य [4]कालाधीनत्वात् इति प्राप्ते—

१ "स एव [5]जागरिते [6]स्थापयति स स्वप्ने [7]स प्रभुरिति" श्रुतेः जागरणमपि भगवदधीनमेव । [8]न कालाधीनं तस्याचेतनत्वेन अस्वातन्त्र्यादिति सिद्धान्तः कृतः ॥ ३ ॥

---

[सुषुप्त्यवस्थानिरूपणम् ]

**॥ ओं ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॥ ओं ॥ ३-२-४**

तदभावः जाग्रत्स्वप्नाभावः सुषुप्तिरिति यावत् । नाडीष्वात्मनि नाडीस्थे परमात्मनि [[9]भवति] ह [10]प्रसिद्धं, कुतः ? तच्छ्रुतेः, तथा श्रुतेरिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्ठरव्यश्रुतित्वेनोदाहृतम् ॥

[1] देहायोगात्—ग [2] "कुतः"—क घ. नास्ति । [3] भगवदधीनं प्रमाणाभावात् इति प्राप्ते—घ. [4] कालाधीनमिति प्राप्ते—क. [5] जागरिति—घ. [6] स्थापति—ग. [7] "स"—क. नास्ति ॥ [8] "न कालाधीनं" इत्यारभ्य "अस्वातन्त्र्यात" इत्यन्तं—घ. नास्ति । [9] "भवति' इति पाठः भाति । [10] प्रसिद्धा—क.

अत्र [1]केवले परमात्मन्येव [2]सुषुप्तिः[3]न नाडीषु [4]परमात्मनोऽ[5]न्यत्राव-स्थाने [6]सुप्तस्य जाग्रत्स्वप्नयोरिव दुःखित्वप्रसङ्गात् । न च मुक्तवत् सुप्तस्य दुःखमस्ति तदा सुखमात्रानुभवात् इति प्राप्ते—

[7]नाडीषु सुप्तिर्जीवस्य । न चैवं दुःखप्राप्तिः । परमात्मनि सुप्त्यङ्गीकारात् । न चैकस्योभयत्र सुप्तिः विरुद्धा । नाडीस्थपरमात्मनि सुप्त्यङ्गीकारात् । परमात्मन्येव सुप्तिः अङ्गीक्रियतां किं नाडीस्थविशेषेण इति चेन्न । १"आसु तदा नाडीषु सुप्तो भवति" २"सता सोम्य तदा सम्पन्नो भवति" इति उभयविधश्रुतेः अन्यथानुपपत्तेरिति सिद्धान्तः कृतः ॥ ४ ॥

---

[सुप्तपुरुषं ब्रह्मैव बोधयतीति निरूपणम्]

**॥ ओं ॥ अतः [8]प्रबोधोऽस्मात् ॥ ओं ॥ ३–२–५**

[9]यतस्तस्मिन्सुप्तिरतः अस्माद्धेतोः अस्मादेव परमेश्वरात् प्रबोधो भवति । कुतः ? तथा श्रुतेरिति सूत्रार्थः ॥

---

१ छान्दोग्योपनिषत् । (८—६—३)

२ छान्दोग्योपनिषत् । (६—८—१)

[1] 'केवले'—क.ग. नास्ति । [2] सुप्तिः–ग.घ. [3] न नाडीषु, *"सता सोम्य तदा सम्पन्नो भवति" इति श्रुतेः । न च †"आसु नाडीषु सुप्तो भवती"ति श्रुतेः नाडीष्वपि सुप्तिरस्त्विति वाच्यम् । नाडीसम्बन्धे दुःखप्रसङ्गात् जाग्रत्स्वप्नयोः जीवस्य देहसम्बन्धेन दुःखदर्शनादिति प्राप्ते ॥—घ. [4] "परमात्मन" इत्यारभ्य "इति प्राप्ते" इत्यन्तं—घ. नास्ति । [5] न्यत्रानवस्थाने—क. [6] 'सुप्तस्य'—क.घ. नास्ति । [7] "नाडीषु" इत्यरभ्य "सिद्धान्तः कृतः" इत्यन्तं—घ नास्ति ॥ [8] प्रबोधो स्यात्—क. [9] यतोऽस्मिन्सुप्तिः – क.

---

* छान्दोग्योपनिषत् । (६—८—१) † छान्दोग्योपनिषत् । (८—६—३)

अत्र सुप्तप्रबोधो नेश्वराधीनः क्वचि[1] द्भेरीताडनादीनामपि कारणत्वदर्शनादिति प्राप्ते—

ईश्वराधीन एव सुप्तप्रबोधः। तस्मिन्नेव जीवानां सुप्तत्वेन तत्प्रेरणां विना प्रबोधायोगात्। [2]भेरीताडनादीनां कारणताप्रतीतेः। १"एष एव सुप्तं प्रबोधयति; एतस्माज्जीव [3]उत्तिष्ठती"ति [4]असाधारणश्रुतिविरुद्धत्वेन निमित्ततामात्रविषयत्वादिति सिद्धान्तः कृतः ॥ ५ ॥

———

[ब्रह्मणः सर्वस्वप्रकारणत्वप्रतिपादनम्]

**॥ ओं ॥ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥ ओं ॥ ३–२–६**

स एव परमात्मैव सर्वेषां सर्वदा सर्वत्र सर्वावस्थाप्रेरकः, कुतः? कर्मानुस्मृतिशब्दविधिभ्यः कर्मेति व्यापारमात्रस्य भगवदधीनत्वप्रतिपादकश्रुतिर्लभ्यते। २"एष ह्येव साधु कर्म कारयती"ति श्रुतेः। ३"प्रदर्शकस्तु सर्वेषां" [5]इत्यभिलपितार्थ[6]साधकतयानुसारिस्मृतेश्च। ४"एष स्वप्नान् दर्शयती"ति [7]विशेषश्रुतेश्च। ५"[8]आत्मानमेव लोकमुपासीते"ति परमात्मन एवोपास्यत्वविधेश्च। अन्यस्यापि प्रेरकत्वे [9]एवकारायोगादिति सूत्रार्थः ॥

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम्।
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्य (३–८) श्रुतित्वेनोदाहृतम्।
३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः ॥
४ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥
५ बृहदारण्यकोपनिषत्। (२—४—१५)

[1] द्भेरीदण्डादीनां— ग. [2] द्भेरीदण्डनादीनां— ग. [3] उदतिष्ठति—क. [4] साधारण—क. [5] इत्यभिलाषितार्थ—क. [6] साधकतयानुस्मृतेश्च— क. [7] विसेष स्मृतेश्च —क. [8] आमानमेव—क. [9] एव कारणयोगादिति ...क

अत्र न सर्वेषां जीवानां सार्वकालीनाः सर्वावस्थाः भगवदधीनाः । किन्नाम, केषाञ्चित्कादाचित्काः काश्चिदेव । राजादीनां खण्डेशत्वदर्शनादिति प्राप्ते—

परात्मैव सर्वेषां [1]सर्वत्र सर्वदा सर्वावस्थाप्रेरकः । "एष ह्येव साधु कर्म कारयति । एष ह्येवासाधु कर्म कारयति" इति सर्वकर्मणां भगवदधीनत्वस्य श्रुतत्वात् ।

१"प्रदर्शकस्तु सर्वेषां [2]स्वप्नादेरेक एव तु ।
परमः पुरुषो विष्णुः ततोऽन्यो नास्ति कश्चन ॥

इति [3]अनुस्मृतेः । २"[4]एष स्वप्नान् दर्शयती"ति विशेषश्रुतेः । ३"आत्मानमेवेति" विधेश्च इति सिद्धान्तः कृतः ॥ ६ ॥

———

[मूर्च्छायाः अवस्थान्तरत्वसमर्थनम् ]

॥ ओं ॥ [5]मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ ओं ॥ ३–२–७

मुग्धे=मूर्च्छावस्थायां, भावे क्तः । जीवस्य हृदयस्थे प्राज्ञेऽर्धप्राप्तिः=अर्धप्रवेशः । कुतः ? परिशेषात् । हृदयस्थाद्धरेः दूरस्थत्वसमीपस्थत्वसमग्रप्रवेशार्धप्रवेशेषु आद्यत्रयस्य जाग्रदाद्यवस्थात्रयधर्मत्वेनार्धप्रवेशस्यैव परिशेषप्रमाणसिद्धत्वादिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।

३ बृहदारण्यकोपनिषत् । (३—४—१५)

1 "सर्वत्र"—घ. नास्ति । 2 स्वप्नादेरेव—क. 3 स्मृतेश्चेति—घ. 4 "एष स्वप्नान्" इत्यारभ्य "विधेश्चेति" इत्यन्तं—घ. नास्ति । 5 मुग्धेऽर्धमसम्पत्तिः—क.

अत्र न मोहावस्था जीवस्य भगवदितरत्र किन्तु परमात्मन्येव जाग्रत्स्वप्नातिरिक्तावस्थात्वात्। न चैवं [1]सुप्तिसङ्करप्रसङ्गः। [2]बाह्यार्थाविषयत्वेन [3]तत्सङ्करस्येष्टत्वादिति प्राप्ते—

[4]मोहे भगवत्यर्धप्रवेश एव जीवस्य, न समग्रप्रवेशः परिशेषात्। तथाहि। मोहे तावत् हृदयस्थाद्धरेः जीवस्य दूरस्थत्वसमीपस्थत्वसमग्र[5]प्रवेशार्धप्रवेशाः प्रसक्ताः। न तावत्त्रयः [6]कल्पाः सम्भवन्ति। तेषां जाग्रदाद्यवस्थाधर्मत्वात्। जीवस्य [7]जाग्रदवस्थायां [8]अक्षिस्थत्वात्। स्वप्नावस्थायां कण्ठस्थत्वात्। सुषुप्त्यवस्थायां प्राज्ञे प्रविष्टत्वात्। [9]एवं च प्रसक्तप्रतिषेधे अन्य[10]स्याप्रसङ्गान्मोहे परिशिष्टोऽर्धप्रवेशः एव जीवस्य। [11]तदुक्तम्।

१ "हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति।
समीपस्थः तथा स्वप्ने [12]स्वपित्यस्मिन् लयं [13]व्रजन्॥
यत एवं त्रयोऽवस्थाः मोहस्तु परिशेषतः।
अर्धप्राप्तिरिति ज्ञेयो [14]दुःखमात्रप्रतिस्मृतेः" ॥

[15]इति। मोहस्यावस्थात्रयातिरेकित्वे भवेदेतत्। तदेव कुतः इति चेत्। अत्र वक्तव्यम्॥ किं मोहस्य सुप्तावन्तर्भावः उच्यते। उत जाग्रत्स्वप्नयोः। न तावदाद्यः। वैलक्षण्यात्। तथाहि। मुग्धः कदापि

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे वराहपुराणवाक्यत्वेनोदाहृतम्।

1 सुप्तिसंस्कार —क. 2 बाह्यार्थविषयत्वेन —क. 3 तत्संस्कारस्य—क. 4 मोहभोगवत्यर्थं प्रवेशः ग. 5 प्रवेशार्थप्रवेशाः—क. 6 कल्प्याः—क. 7 जाग्रदाद्यवस्थायां —ग. 8 अक्षिस्थितत्वात्—घ. 9 एवंप्रसक्त—क. 10 स्याप्रसङ्गात् परिशिष्टो—घ. 11 कुतः —क. 12 स्वपत्यस्मिन्—क. 13 व्रजेत्—क. 14 दुःखमात्रप्रवृत्तिस्मृतेः इति सिद्धान्तः कृतः ॥—क. दुःखमात्रप्रतिस्मृतेः इति सिद्धान्त कृतः ॥–ग. 15 "इति। मोहस्य" इत्यारभ्य "अवस्थान्तरमेव" इत्यन्तं—क.ग. नास्ति।

नोच्छ्वसति । सवेपथुश्चास्य देहो भवति । भयानकं चास्य वदनं भवति । विस्फारिते चास्य नेत्रे भवतः । सुप्तस्तु प्रसन्नवदनः तुल्यकालं पुनः पुनः उच्छ्वसति । निमीलिते चास्य नेत्रे भवतः । न चास्य देहो वेपते । पाणिपेषणमात्रेण च सुप्तमुत्थापयन्ति । न तु मुग्धं मुद्गरघातेनापीति महावैलक्षण्यस्य सत्त्वात् न सुप्तावन्तर्भावः । नापि जाग्रत्स्वप्नयोरन्तर्भावः । दुःखात्मकालातिरिक्तविषयादर्शनात् । अतः मोहो अवस्थान्तरमेव इति सिद्धान्तः कृतः ॥

एतेषां [1]सप्ताधिकरणानां युगपदेव तात्पर्यमाह— **सर्वावस्थाप्रेरकश्चेति** ॥ परमेश्वर इति [2]उत्तरत्र वक्ष्यमाणं अत्रापि सम्बध्यते । चशब्दस्य [3]निवर्तकश्चेत्यर्थः । प्रथमाधिकरणे स्वप्नावस्थायाः भगवदधीनत्वस्य समर्थितत्वात् । द्वितीये भगवतः स्वप्ननिवर्तकत्वस्य उक्तत्वात् । तृतीये जाग्रदवस्थाप्रवर्तकत्वस्य उक्तत्वात् । चतुर्थे सुप्तप्राप्यत्वकथनेन तदवस्थाप्रेरकत्वस्य उक्तत्वात् । [4]पञ्चमे सुप्तबोधकत्वस्य उक्तत्वात् । षष्ठे सार्वकालिकसर्वावस्थाप्रेरकत्वस्य उक्तत्वात् । सप्तमे मोहावस्थाप्रेरकत्वस्य [5]उक्तत्वात् सर्वमनवद्यम् ॥ ७ ॥

---

[जाग्रत्स्वप्नसुषुप्त्यवस्थाप्रवर्तकभगवद्रूपाणां ऐक्यसमर्थनम् ।]

**॥ ओं ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ओं ॥ ३-२-८**

स्थानतः स्थानभेदेऽपि परस्य परमात्मनः उभयलिङ्गं भिन्नरूपं

---

[1] सप्तानामधिकरणानां —घ. समानाधिकरणानां—ग. [2] 'उत्तरत्र'—ग.घ. नास्ति ॥ [3] निवृत्तकश्चेत्यर्थः—क. [4] "पञ्चमे" इत्यारभ्य "प्रेरकत्वस्योक्तत्वात्" इत्यन्तं —ग. नास्ति [5] उक्तत्वादिति ज्ञेयम्—क.ग.

**सर्वरूपेष्वभेदवान् ॥**

---

नास्ति । कुतः ? सर्वत्र हि यस्मात् सर्वस्थानेषु निर्भेदः परमात्मा सर्वेषु भूतेषु "एतमेव ब्रह्मेत्याचक्षते इत्यादौ श्रूयते इति सूत्रार्थः ॥

[1]अत्र सर्वशरीरेषु अक्ष्यादिस्थानेषु च [2]स्थितो [3]विश्वादिरूपो हरि-[4]रन्योन्यं भिन्न एव । भिन्नस्थानत्वात् । घटादिवदिति प्राप्ते—

विश्वादिरूपी हरिः भिन्नस्थानोऽप्यभिन्न एव प्रतिपत्तव्यः । १"सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षते" इति श्रुतेः । न चोक्तभेदसाधकानुमानविरोधः । तस्योक्तश्रुतिबाधितत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[5]**सर्वरूपेष्वभेदवानिति** ॥ परमेश्वर इत्यस्यात्राप्यनुषङ्गः । जाग्रदाद्यवस्थाप्रेरकविश्वादिरूपेषु अभेदवान् शरीराक्ष्यादिस्थानभेदात् भेदवान् [6]न भवतीत्यर्थः ॥ ८ ॥

---

[भगवान् अप्राकृतज्ञानानन्दादिरूपवान् इति प्रतिपादनम् ]

**॥ ओं ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ ओं ॥ ३-२-९**

तदिति व्यस्तं समस्तं च । तद्ब्रह्म अरूपवत् न प्राकृतभौतिकरूपवत् । कुतः तत्प्रधानत्वात् प्रकृत्याद्युत्तमत्वात् । एव शब्देन ज्ञानानन्दात्मकरूपवत्त्वं अङ्गीकरोति । हिशब्देन उक्तार्थे श्रुत्यादिप्रसिद्धिमाहेति सूत्रार्थः ॥

---

१ ऐतरेयारण्यकम् । (३—२—३)

[1] अत्र शरीरेषु—क. [2] स्थिते—क. [3] विश्वादिरूपी—क. [4] रन्योन्यभिन्न एव—क. [5] सर्वभूतेष्वभेदवान्—ग. [6] 'न'—क. नास्ति ॥

**सर्वदेशेषु कालेषु स एकः परमेश्वरः ।**

---

अत्र भगवान् रूपवान् न वा । नाद्यः । रूपवत्त्वे अनित्यत्व-प्रसङ्गात् । न द्वितीयः । १"यदा पश्यः पश्यते [1]रुक्मवर्णं" इत्यादि-श्रुतिविरोधापातादिति प्राप्ते—

भगवान् रूपरहित एव । कुतः ? [2]रूपं हि [3]भवत्प्राकृतं भौतिकं वा भवेत् । न च तत्सम्भवति । तस्य [4]प्रकृतिविलक्षणत्वात् । भूत-विलक्षणत्वाच्च । न च [5]रुक्मवर्णमित्यादिश्रुतिविरोधः । अप्राकृतरू[6]पा-ङ्गीकारात् । [7]न च तत्र प्रमाणाभावः । २"आनन्दरूपममृतं यद्वि-भाती"ति श्रुतेः । ३"शुद्धस्फटिकसङ्काशमि"ति स्मृतेश्च इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**परमेश्वर इति** ॥ [8]परमा सर्वेभ्यः परमा । [9]अथवा परा च सा मा च परमा सर्वोत्तमा प्रकृतिः तस्याः ईश्वरः [10]उत्तमः [11]प्रकृत्यादिप्रेरकत्वेन तदुत्तमः विलक्षण इत्यर्थः ॥ तस्मात्प्राकृतादिरूपरहित इत्यर्थः ॥ ९ ॥

---

१ मुण्डकोपनिषत् । (अथर्वणोपनिषत्) (३—१—३)

२ मुण्डकोपनिषत् । (अथर्वणोपनिषत्) (२—२—८)

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे मत्स्यपुराणवाक्यत्वेनोदाहृतम् ।

[1] रुक्मवर्णं—ग.घ. [2] रूपे हि—क. [3] भगवत्प्राकृतं-क. [4] प्रकृत्यादिप्रेरकत्वेन तदुत्तमत्वात् । न च—क.ग. [5] रुक्मवर्णं—क. [6] पाङ्गीकारादिति सिद्धान्तः कृतः—क.ग. [7] "न च" इत्यारभ्य "स्मृतेश्च" इत्यन्तं—क ग. नास्ति । [8] परमात्मा —क. [9] "अथवा" इत्यारभ्य "परमा" इत्यन्तं—क.ग. नास्ति । [10] "उत्तमः" इति पदं—क.ग. नास्ति । [11] प्रकृत्यादिविलक्षणः इत्यर्थः—घ.

[सूर्यसूर्यकयोरिव भगवज्जीवयोः भेदसमर्थनम् ]

॥ ओं ॥ अत एव चोपमा सूर्यकादिवत् ॥ ओं ॥ ३–२–१०

न भेदादिति [1]सूत्राच्चेन्नेत्यनुवर्तते । अत एव=भगवदंशत्वादिहेतोरेव, जीवस्योपमा मत्स्यादिसाम्यं मत्स्यादिवदीश्वराभेद इति यावत्, इति चेन्न । सूर्यकादिवत् यथा प्रतिबिम्बत्वात्सूर्यकादि सूर्येण नाभिन्नं तथा जीवोऽपि प्रतिबिम्बत्वा[2]न्नेश्वराभिन्न इति सूत्रार्थः ॥

अत्र [3]जीवः परमात्मनो न भिद्यते, चेतनत्वात्, [4]तदंशत्वाद्वा मत्स्यादिवदिति प्राप्ते—

जीवः न [5]परमात्माभिन्नः तत्प्रतिबिम्बत्वात् । यो यत्प्रतिबिम्बः नासौ तदभिन्नः यथा [6]सूर्यकादिः । न च असिद्धो हेतुः । १"रूपं रूपं प्रतिरूपो बभूवेति" श्रुतेः ।

२"बहवः सूर्यका यद्वत् सूर्यस्य सदृशा जले ।
एवमेवात्मका लोके परात्मसदृशा मताः ॥

इति स्मृतेश्च । न च प्राचीनानुमानविरोधः । [7]तस्याप्रतिबिम्बत्वोपाधिदुष्टत्वादिति सिद्धान्तः कृतः ॥

———

१ ऋक्संहिता (४–५–१९)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं वाक्यम् । ब्रह्मसूत्रभाष्यदीपिकायां श्रुतित्वेन व्याख्यातम् । अणुभाष्यटीकायां "इति स्मृतेः" इति वर्तते ॥ अतः इयं श्रुतिर्वा स्मृतिर्वा इति विचारणीया ॥

[1] सूत्रादिति चेन्न नेत्यत्यनुवर्तते—क [2] न्नेश्वराद्भिन्न इति—ग. [3] जीवपरमात्मानौ भिद्येते—क. [4] तदंशत्वात्—ग. [5] परमात्मभिन्नः—क. [6] सूर्यकादिवत्—क. [7] तस्य प्रतिबन्धकत्वादिदुष्टत्वात्—क. तस्याः प्रतिबन्धकत्वोपाधिदुष्टत्वात्—ग.

एतदधिकरणतात्पर्यस्य समन्वयाध्याय एव अन्यश्च [1]जीवत [2]इत्युक्तत्वात् अत्रानुक्तिरिति बोध्यम् ॥ १० ॥

———

[जीवस्य स्वस्वरूपाविर्भावार्थं भगवद्भक्त्यावश्यकतायाः समर्थनम् ]

॥ ओं ॥ **अम्बुवदग्रहणात्तु न तथात्वम्** ॥ ओं ॥ ३–२–११

स्नेहात्मकाम्बुपदेन मानसस्नेह उपलक्ष्यते । ग्रहणं ज्ञानं अम्बुवदिति ग्रहणस्य विशेषणं अम्बुवदग्रहणात् अम्बुवद्ग्रहणाभावात् स्नेहयुक्तज्ञानाभावात् भक्त्यभावादिति यावत् । तथात्वं ज्ञानानन्दादिभगवत्सादृश्यं न सम्यगभिव्यज्यते किन्तु [3]तद्भक्त्यैवेति सूत्रार्थः ॥

अत्र न मोक्षो भक्तिफलम् । अनादिसिद्धत्वात् । नित्यानन्दज्ञानादिमत्त्वं हि मोक्षः । तच्च स्वरूपमेवेति प्राप्ते—

भक्तिफलमेव मोक्षः, ज्ञानानन्दादेः जीवस्वरूपत्वेन नित्यसिद्धत्वेऽपि तदाविर्भावस्य [4]भक्तिसाध्यत्वात् । न चात्र प्रमाणाभावः । १"[5]यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वां" इति श्रुतेः ।

२"[6]महत्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते ।
तयैव व्यज्यते सम्यक् जीवरूपं सुखादिकम्" ॥

इति स्मृतेश्चेति सिद्धान्तः कृतः ॥ ११ ॥

१ काठकोपनिषत् ॥ (२—२३)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे पद्मपुराणवाक्यत्वेनोदाहृतम् ॥

[1] जीव इति—क. [2] इत्युक्तत्वात् अत्रानुक्तिरिति—ग. इत्युक्तत्वात् नानुपपत्तिः—घ. [3] तदुक्त्यैवेति—ग. [4] भक्तिसत्त्वात्—ग. [5] यमेवेष—घ. [6] महित्वबुद्धिः—क.

[साधनानुरोधेन फलतारतम्यनिरूपणम् ]

## ॥ ओं ॥ वृद्धिह्रास[1]भाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ ओं ॥ ३-२-१२

भक्त्यादेः वृद्धिह्रासभाक्त्वं वृद्धिह्रासवत्त्वं [2]तारतम्यं विद्यते। कुतः? अन्तर्भावात्। ब्रह्मादीनां [3]मनुष्योत्तमानां च [4]भक्तेष्वन्तर्भावात्। तेषां महदल्पफलत्वस्य प्रमाणसिद्धत्वादिति भावः। फलतारतम्येऽपि कुतो भक्त्यादितारतम्यं इत्यत उक्तम्। एवं उभय[5]सामञ्जस्यादिति। एवंभक्त्यादितारतम्याङ्गीकार एव तारतम्येन फलदातुरीश्वरस्य [6]उभयान् प्रति ब्रह्मादीन् अस्मदादीन् प्रति सामञ्जस्यात् समत्वसम्भवात्, अन्यथा वैषम्यादिदोषापत्तेरिति सूत्रार्थः॥

अत्र सर्वेषां मुक्तियोग्यानां एकप्रकारैव भक्तिः तत्फलस्य [7]मुक्तत्वानन्दित्वादेः सर्वेषु साम्यादिति प्राप्ते—

नैकप्रकारा [8]सर्वेषां भक्तिः। किन्तु वृद्धिह्रासवती। फलस्य वृद्धिह्रासवत्त्वात्। न चात्र प्रमाणाभावः। १"अथात आनन्दस्य मीमांसा भवति" इत्यादिश्रुतेः।

२"यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने"॥

इति स्मृतेश्च, इति सिद्धान्तः कृतः॥

---

१ तैत्तिरीयोपनिषत्। (२—८)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः॥

[1] भाक्तामन्तर्भावात्—क. [2] तारतम्येन—ग. [3] मनुष्योत्तमादीनां—ग. [4] मनुष्येष्वन्तर्भावात्—ग [5] सामस्यादिति—क. [6] उभयानुप्रति—क. [7] मुक्तत्वानन्दत्वादेः—क. मुक्तित्वानन्दत्वादेः—ग. [8] सर्वेषु—ग.

**तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ॥**

अनयोः अधिकरणयोः तात्पर्यमाह— **तद्भक्तितारतम्येन तारतम्यं विमुक्तिगं इति ॥** तस्य परमेश्वरस्य भक्तितारतम्येन [1]विमुक्तिगं मुक्तौ विद्यमानं तारतम्यं भवतीति [2]शेषः । भक्तितारतम्येन मुक्तितारतम्यं भवतीति योजनद्वय[3]मभिप्रेतम् । तत्र प्रथम[4]योजनया प्रथमाधिकरणस्य द्वितीययोजनया द्वितीयाधिकरणस्य [5]च तात्पर्यमुक्तमित्यवगन्तव्यम् ॥ १२ ॥

———

[परात्मनः सृष्टिसंहारकर्तृत्ववत् पालनकर्तृत्वमपि अस्तीति समर्थनम् ]

**॥ ओं ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ओं ॥　३-२-१३**

भगवानेव [6]पालनकर्ता, न [पालनस्य] स्वतःसिद्धिः । कुतः ? हि यस्मात् १ "नैतावदिति श्रुतिः [7]प्रकृतैतावत्त्वं हरेः प्रकृतस्य सृष्टिसंहारकर्तृत्वस्य एतावत्त्वं तावन्मात्रत्वं प्रतिषेधति, ततस्तदपेक्षया भूयः अधिकं पालनं च ब्रवीति तस्मादिति सूत्रार्थः ॥

अत्र नेश्वरः पालकः [8]जगत्सृष्ट्वा स्थितस्येश्वरस्य संहारे प्रवृत्त्यभावे स्वत एव [9]जगत्स्थितिसम्भवादिति प्राप्ते —

भवत्येवेश्वरः पालकः । नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्तीति [10]श्रुत्या हरेः पूर्वप्रकृतसृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य पालकत्वस्याप्यभिधानात् ।

———

१ ऋग्वेदः (१०—३१—८)

[1] मुक्तिगं—ग.घ.　[2] 'शेषः'—ग घ. नास्ति ।　[3] मभिमतम्—क.
[4] योजनस्य—ग.　[5] 'च'–ग. नास्ति ।　[6] पालनादिकर्ता-ग.　[7] 'प्रकृतैतावत्वं'-ग. नास्ति ।　[8] जगत्सृष्ट्या—क.　[9] जगत्सृष्टिसम्भवात्—क.　[10] श्रुत्या सृष्टिसंहार—घ

१ "सृष्टिं च पालनञ्चैव संहारं नियमं तथा ।
एक एव करोतीशः सर्वस्य जगतो [1]हरिः" ॥ इति

स्मृतेश्च । न च संहारविलम्बमात्रेणैव स्थितिसिद्धेः न तदर्थमीश्वरापेक्षेति वाच्यम् । सर्वस्य धारणार्थं चेतनानामन्नपानाद्यर्थं [2]ईश्वरव्यापारस्य आवश्यकत्वादिति सिद्धान्तः कृतः ॥

एतस्यापि तात्पर्यं समन्वयाध्याये सर्वकर्तेत्यनेनैव प्रतिपादितमिति न पृथगुक्तिरिति ॥ १३ ॥

———

[अव्यक्तस्वरूपोऽपि भगवान् स्वसामर्थ्येन व्यक्तो भवतीति प्रतिपादनम् ]

॥ ओं ॥ तदव्यक्तमाह हि ॥ ओं ॥ ३–२–१४

तत्तु ब्रह्म [3]अव्यक्तं पुरुषप्रयत्नेन द्रष्टुमशक्यं, [4]कुतः ? हि यस्मात्, २'अरूपमि'ति श्रुतिः तस्याव्यक्तत्वमाह इति सूत्रार्थः ॥

अत्र [5]व्यक्त एवायमीश्वरः । "यदा पश्यः पश्यते" इति श्रुतेः । [6]न हि अव्यक्तस्वभावत्वे साधनशतेनापि दर्शनमुपपद्यते इति प्राप्ते—

अव्यक्त एवायमीश्वरः । "अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलं" इति श्रुतेः । ननु [8]यदि सदाऽव्यक्तं ब्रह्म तर्हि व्यर्थैव

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्माण्डपुराणवाक्यत्वेनोदाहृतम् ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्ठरव्यश्रुतित्वेनोदाहृतम् ॥

[1] हरेः—ग. [2] ईश्वरस्य —ग. घ. [3] अव्यक्तपुरुष—क. [4] 'कुतः'—क. घ. नास्ति । [5] अव्यक्त एव—क. [6] 'न'—क. नास्ति । [7] निष्फलं —ग. [8] यदि—ग. घ. नास्ति ।

तद्भक्तिः । अव्यक्तस्वभावस्य साधनशतेनापि [1]व्यक्तीकर्तुमशक्यत्वादिति [2]चेन्न । अव्यक्तस्वभावस्य साधन[3]सामर्थ्येन ग्रहणासम्भवेऽपि [4]भक्तिपूर्वकं श्रवणाद्यभ्यासेन तत्प्रसादे जाते [5]तदपरोक्षाङ्गीकारात् । अत एव यदेति श्रुतिविरोधोऽप्यपास्तः । नन्वव्यक्तस्वभावस्य प्रसादेनापि कथं व्यक्तत्वमिति चेन्न । अघटितघटकानन्तशक्तित्वात् । तदुक्तम् ।

१"नित्याव्यक्तोऽपि भगवान् ईक्ष्यते निजशक्तितः ।
[6]तमृते परमात्मानं कः [7]पश्येतामितं प्रभुम्" ॥

इति । [8]इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**परमेश्वर इति** । अघटितघटकपरमैश्वर्योपेत इत्यर्थः । अत्र जीवशक्त्या [9]उपलब्ध्ययोग्यत्वरूपाव्यक्तत्वस्य स्वप्रसादेन व्यक्तत्वस्य [10]च समर्थितत्वात् । [11]तस्य चाचिन्त्यैश्वर्य[12]निर्वाह्यत्वादिति ॥ १४ ॥

---

[भगवति गुणत्वगुणित्वरूपविरुद्धधर्मयोः समर्थनम्]

## ॥ ओं ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ओं ॥ ३–२–१५

उभयव्यपदेशात् गुणत्व[13]गुणित्वरूपोभयस्य आनन्दमित्यादिश्रुतौ व्यपदेशात् । ब्रह्मणः गुणत्वं गुणित्वं च श्रौतमपि [14]कथमङ्गीकार्यं काप्य-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे नारायणाध्यात्मवाक्यत्वेनोदाहृतम् ॥

1 'व्यक्ती'–ग. नास्ति । 2 चेत्–क. 3 सामर्थ्यैन–क. 4 भक्तिपूर्वकश्रवण—क. 5 तदपरोक्ष्याङ्गीकारात्—घ. 6 अमृतं—क. 7 पश्योतामृतं—क. 8 'इति'—ग. नास्ति । 9 उपलब्धयोग्यत्व—क. 10 'च' – ग घ. नास्ति । 11 तस्याचिन्त्यैश्वर्य—क. 12 निर्वाहित्वात्—ग. 13 गुणित्वोभयरूपानन्दं—क. 14 कथं नाङ्गीकार्यं—ग

दृष्टेरित्यत उक्तं—अहिकुण्डलवदिति । यथाऽहिः कुण्डली कुण्डलं च एवं भगवानपीति सूत्रार्थः ॥

अत्र न भगवद्भक्तिर्युक्ता तस्यानन्दाद्यात्मकत्वेन [1]आनन्दित्वादिशून्यत्वात् । न ह्यगुणिनि भक्तिरुपपद्यत इति प्राप्ते—

कर्तव्यैव भगवद्भक्तिः । १"आनन्दं ब्रह्मणो विद्वान् । [2]आनन्दो ब्रह्म" । २"अथैष एव परमानन्दः" इत्यादिश्रुतिषु गुणात्मकत्वेन च व्यपदेशात् । कुण्डलात्मकस्याप्यहेः कुण्डलित्वव्यपदेशदर्शनादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**परमेश्वर इति** । परमैः सर्वोत्कृष्टैः ज्ञानानन्दादिगुणैः ईश्वरः समर्थः गुणपूर्ण इति यावत् । अतः तस्मिन् भक्तिरुपपद्यत इति भावः ॥ १५ ॥

---

[भगवदानन्दादेः अलौकिकत्वसमर्थनम् ]

**॥ ओं ॥ परमतः [3]सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ओं ॥ ३–२–१६**

ब्रह्मानन्दादिकं अतः लौकिकानन्दादेः परं विलक्षणं, कुतः ? सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः । सेतून्मानेति भावप्रधानम् । ३"एष

---

१ तैत्तिरीयोपनिषत् । (२—४)

२ बृहदारण्यकोपनिषत् । (६—३—३३)

३ छान्दोग्योपनिषत् । (८—४—१)

[1] आनन्दिशून्यत्वात्—ग. [2] आनन्दो ब्रह्मा— क. 'आनन्दो ब्रह्म'—घ. नास्ति ।

[3] सेतून्मानसन्मानसम्बन्ध—ग.

सेतु''रिति १''यतो वाचो निवर्तन्त'' इति पूर्णत्व[1]रूपोन्मानत्वस्य २''एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती''ति बिम्बप्रतिबिम्बभावरूपसम्बन्धस्य ३''[2]अन्यज्ज्ञानन्तु जीवानां [3]अन्यज्ज्ञानं परस्य च''। इति भेदस्य वैलक्षण्यस्य च व्यपदेशेभ्यो हेतुभ्यः इति सूत्रार्थः ॥

अत्र ब्रह्मानन्दादिकं लोकसदृशं आनन्दादिशब्दवाच्यत्वात् इति प्राप्ते—

ब्रह्मानन्दादिकं लोकानन्दादिविलक्षणमेव। ''एष सेतुः विधृतिः''। ''य एष आनन्दः [4]परमस्य'' इत्यादिश्रुतिषु [5]लोकानन्दादौ [6]असम्भावित[7]सेतुत्वोन्मानत्ववैलक्षण्यस्य [8]व्यपदेशात्। [9]अलौकिकोऽपि ज्ञानानन्दादौ ज्ञानादिशब्दप्रयोगस्तु तस्यार्थप्रकाशकत्वानुकूलवेद्यत्वादिज्ञापनार्थत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**परमेश्वर इति** ॥ परमैः लोकविलक्षणैः गुणैः ईश्वरः लौकिकानन्दादिविलक्षणानन्दादिगुणवानित्यर्थः ॥ १६ ॥

---

१ तैत्तिरीयोपनिषत्। (२—४)

२ बृहदारण्यकोपनिषत्। (६—३—३१)

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं प्रमाणम् ॥

[1] रूपोन्मानत्वस्यैव—क. [2] अन्यद्ज्ञानन्तु—क. [3] अन्यद्ज्ञानन्तु—क. [4] परमस्येति इत्यादि—क. [5] लोकानन्दादेव—क [6] सम्भावित—क. [7] सेतुत्वोन्मानत्वादेर्वैलक्षण्यस्य-क.घ. [8] व्यपदेशादिति सिद्धान्तः कृतः—क.ग. [9]''अलौकिकेऽपि'' इत्यारभ्य ''ज्ञापनार्थत्वात्'' इत्यन्तं—क.ग. नास्ति ॥

[भगवद्रूपाणां तद्गुणानां च अभेदनिरूपणम् ]

## ॥ ओं ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ओं ॥ ३–२–१७

[1]प्रकाशादिवत् [2]सूर्यादिप्रतिबिम्ब इव यथा बिम्बभूतस्यादित्य[3]स्याविशेषेऽपि स्थानविशेषात् सूर्यकान्तादिस्थानगुणात् प्रतिबिम्बविशेषः तथा भगव[4]दानन्दादौ विशेषाभावेऽपि ब्रह्मादिस्थान[5]गुणात्तदानन्दादौ विशेष इति सूत्रार्थः ।

अत्र जीवानन्दादिः न भगवदानन्दादिप्रतिबिम्बभूतः । तथात्वे मिथो वैचित्र्यायोगात् । मिथो विचित्राणां तत्प्रतिबिम्बत्वे बिम्बभूतभगवदानन्दादौ वैचित्र्यं स्यादिति प्राप्ते—

प्रतिबिम्बभूत एव जीवानन्दादिः भगवदानन्दादेः । न तावता [6]प्रतिबिम्बवैचित्र्यापत्तिः । नापि बिम्बवैचित्र्यापत्तिश्च । यथा खलु सूर्यादिबिम्बवैचित्र्याभावेऽपि सूर्यकान्तजलादिस्थानगुणेन प्रतिबिम्बेषु अग्निजनकत्वतदभावादि[7] वैचित्र्यमेवं ब्रह्मादिस्थानगुणभक्त्यादिवैचित्र्येण बिम्बभूतभगवदैश्वर्यवशेन च बिम्बानन्दाद्यवैचित्र्येऽपि [8]तत्प्रतिबिम्बानां [9]जीवानां गुणादीनां वैचित्र्योपपत्तेः । कुतः ?

१ "ऐश्वर्यात्परमाद्विष्णोः भक्त्यादीनामनादितः ।
[10]ब्रह्मादीनां सूपपन्ना [11]ह्यानन्दादेः विचित्रता" ॥ इति

[12]स्मृतेरिति सिद्धान्तः कृतः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पद्मपुराणवाक्यत्वेनोदाहृतम् ॥

1 'प्रकाशादिवत्'—ग.घ. नास्ति । 2 सूर्यप्रतिबिम्ब—ग. 3 स्याविशेषणेऽपि—क. 4 दानन्दविशेषाभावेऽपि—क. 5 गुणात्तत्तदानन्दा—ग. गुणा तदानन्दादौ—क. 6 'प्रतिबिम्ब—घ. नास्ति । 7 वैचित्र्यमेव—क. 8 तत्तत्प्रति—क. 9 जीवानन्दादीनां—क. 10 ब्रह्मादीनामुपपन्ना—क. 11 ह्यानन्दस्य—घ. 12 'स्मृतेरिति'—घ नास्ति ।

[1]तस्य तात्पर्यमाह—[2]**स** [3]**एकः परमेश्वरः इति** ॥ स विष्णुरेकः ज्ञानानन्दादिभिः एकप्रकार एव । न तु तारतम्यवानित्यर्थः । बिम्बानन्दाद्यवैचित्र्येऽपि प्रतिबिम्बानन्दादि[4]वैचित्र्यस्य बिम्बभूतभगवदैश्वर्यवशात् उपपत्तेरिति भावेनोक्तं—**परमेश्वर इति** ॥ स्थानगुणस्याप्युपलक्षणम् । अथवा तस्य तात्पर्यमाह—**तद्भक्तितारतम्येन तारतम्यं विमुक्तिगं इति** ॥ भगवदानन्दादौ विशेषाभावेऽपि ब्रह्मादिस्थान[5]गुणभक्त्यादिवैशेष्यात्तदानन्दादौ विशेष इत्यर्थः ॥ १७ ॥

———

[ध्यानकाले प्रतीयमानपरमात्मरूपस्य अब्रह्मस्वरूपत्वनिरूपणम् ]

॥ ओं ॥ **तथाऽन्यप्रतिषेधात्** ॥ ओं ॥ ३-२-१८

यथा जीवानन्दादेः अन्यद्भगवदानन्दादिकं तथा [6]ब्रह्म ध्यानविषयप्रतीकादन्यत्, न तु [7]तदेव । [8]कुतः प्रतिषेधात् । १ "[9]नेदं यदिदमुपासते" इति ध्यानकाले प्रतीतस्य ब्रह्मत्वनिषेधादिति सूत्रार्थः ॥

अत्र न ब्रह्मणोऽव्यक्तत्वम् । तस्य ध्यानकाले चित्ते प्रतीयमानत्वादिति प्राप्ते—

---

१ तलवकारोपनिषत् । (केनोपनिषत् ।) (१—६)

[1] 'तस्य तात्पर्यमाह'—ग. नास्ति । [2] "स" इति—क. नास्ति । [3] एकतः—क. [4] वैचित्र्यबिम्ब—क. [5] गुणवैशेष्यात्—क. [6] ब्रह्म ध्यानप्रतिवादिन्यात्—क ब्रह्म ध्यानाप्रतीपादन्यत्—ग. [7] तदन्यदेव—ग. [8] 'कुतः'- क.घ. नास्ति ॥ [9] 'नेदं यदिदमुपासते'–क.घ. नास्ति ॥

न ध्यानकाले प्रतीयमानत्वेन व्यक्तत्वं ब्रह्मणो मन्तव्यम् । ध्यानकाले प्रतीयमा[1]नस्याब्रह्मत्वात् ।

१ "[2]यन्मनसा [3]न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥" इति

[4]श्रुतौ ध्येयस्य ब्रह्मत्वनिषेधात् । न चैवं ब्रह्मणः ध्यानफलप्रदत्वानुपपत्तिः । [5]ध्येये ब्रह्मणः सत्त्वेन तस्यैव [6]फलप्रदत्वाङ्गीकारात् । न चानुपासितस्य [7]फलप्रदत्वा[8]नुपपत्तिः । प्रतिमोपासनावत् प्रतिबिम्बोपासनस्यापि ब्रह्मोपासनत्वात् । तदुक्तं—

२ "ब्रह्मैव प्रतिबिम्बे यत् अतस्तेषां फलप्रदम् ।
तदुपासनं च भवति [9]प्रतिमोपासनं यथा ॥"

इति [10]सिद्धान्तः कृतः ॥

[11]एतदधिकरणतात्पर्यन्तु 'तदव्यक्तमाह ही'त्यत्रैव उक्तमिति न पृथक् वक्तव्यम् ॥ १८ ॥

---

१ तलवकारोपनिषत् । (केनोपनिषत्) (१—६)
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ॥

[1] नस्य ब्रह्मत्वात्—ग. [2] यन्मसा—ग. [3] 'न'—क. नास्ति [4] श्रुतो ध्याये—क. [5] ध्योयब्रह्मणः—क. [6] फलदत्वाङ्गीकारात्—क प्रदत्वाङ्गीकारात्—ग. [7] फलप्रदत्वात्तदुपासनं च क. [8] "नुपपत्तिः" इत्यारभ्य "फलप्रदम्" इत्यन्तो भागः—क. नास्ति ॥ [9] प्रतिमासनं—क प्रतिमोसनं—ग. [10] सिद्धान्तः कृतः । तस्य तात्पर्यमाह—परमेश्वर इति ॥ तथाच परमैश्वर्यादव्यक्तत्वं तस्य युज्यत इति भावः ॥ १८ ॥—घ. [11] "एतदधिकरण" इत्यारभ्य "पृथक् वक्तव्यम् ॥ १८ ॥" इत्यन्तं—घ. नास्ति ॥

[सर्वत्र सर्वदा सृष्ट्यदिकर्ता भगवानेवेति प्रतिपादनम् ]

## ॥ ओं ॥ अनेन सर्वगतत्वमायामय-
## शब्दादिभ्यः ॥ ओं ॥ ३–२–१९

अनेनैव परमेश्वरेणैव सर्वत्र सर्वदा सृष्ट्यादिकं प्रवर्तते। कुतः? १"एष सर्वगत" इति [1]सर्वगतत्वप्रतिपादकश्रुतेः ॥

२"सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु।
स्वरूपभूतया नित्यशक्त्या [2]मायाख्यया यतः ॥
अतो मायामयं विष्णुं प्रवदन्ति सनातनम् ॥"

इति मायामय[3]शब्दव्याख्यानश्रुतेः। आदिशब्दसूचितान्यत्रप्रमाणाभाव-युक्तश्चेति सूत्रार्थः ॥

अत्र न सर्वसृष्ट्यादि ब्रह्मण एव। किन्तु देशकालान्तरे अन्यतोऽपि राजादीनां तथा दर्शनादिति प्राप्ते —

भगवतैव सर्वदेशकालीनसृष्ट्यादि न तु देशकालान्तरे अन्येन, तथाहि। [4]किं विष्णोः श्रुतिसिद्धसर्वसृष्ट्याद्युपयोगिसर्वगतत्वादौ प्रमाणा-भावादेतत्कल्प्यते। अन्यत्र प्रमाणसद्भावाद्वा। नाद्यः। ३"एष सर्वः, एष सर्वगतः, [5]एष सर्वेश्वरः, एषोऽचिन्त्यः, इति श्रुतिसद्भावात्। न द्वितीयः। तदभावात्। इति सिद्धान्तः कृतः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतम्।
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे चतुर्वेदशिखावाक्यत्वेनोदाहृतम् ॥
३ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतम् ॥

[1] सर्वगतप्रतिपादकश्रुतेः—क. [2] मायामयाख्यया—क. मयाख्यया–ग.
[3] शब्दाख्यानश्रुतेः–ग. [4] 'किं'—क·ग. नास्ति ॥ [5] एष ईश्वरः—क.

तस्य तात्पर्यमाह—**सर्वदेशेषु कालेषु स एकः परमेश्वरः। इति** ॥ स एक एव परमेश्वरः सर्वदेशेषु कालेषु सृष्ट्यादिकर्तेति शेषः ॥ १९ ॥

——— ———

[परमात्मनः फलकर्मकारणत्वसमर्थनम् ]

**॥ ओं ॥ फलमत उपपत्तेः ॥ ओं ॥ ३–२–२०**

अतः ईश्वरादेव फलं, कुतः? उपपत्तेः। तस्य चेतनत्वेन [1]फलदानोपपत्तेः इति सूत्रार्थः ॥

अत्र कर्मैव फलदातृ न त्वीश्वरः। [2]कुतः? यैः फलदातृत्वं ईश्वरस्योच्यते तैरपि तस्य कर्मापेक्षयैव फलदातृत्वाङ्गीकारात्। ततश्च [3]आवश्यककर्मण एव फलदातृत्वोपपत्तेः [4]नेश्वरेण कृत्यं पश्यामः इति प्राप्ते—

ईश्वर एव फलदाता, न कर्म, तस्य चेतनत्वेन [5]फलदानोपपत्तेः। कर्मणश्चाचेतनत्वेन तदनुपपत्तेः। न च ईश्वरस्य [6]चेतनत्वे फलदातृत्वसम्भावनैव न तु [7]निश्चयः इति वाच्यम्। १"विज्ञानमानंदं [8]ब्रह्म रातिर्दातुः [9]परायणम्"। २"पुण्येन पुण्यं लोकं नयति। पापेन पापमि"ति श्रुतेरिति सिद्धान्तः कृतः ॥

---

१ बृहदारण्यकोपनिषत्। (५—९—२८)

२ षट्प्रश्नोपनिषत्। (३ ७)

[1] फलश्चानोपपत्तेः—क. [2] 'कुतः— घ. नास्ति। [3] अवश्य व कर्मण एव—क. आवश्यकं कर्मण एव—घ. [4] नेश्वरस्य—क. [5] "फलदानो" इत्यारभ्य "चेतनत्वे" इत्यन्तं ग. नास्ति। [6] चेतनत्वे न—घ. [7] निश्चया इति—क. [8] ब्रह्म रतिर्दातुः —क. [9] परायणः—क. परायणां - ग.

तस्य तात्पर्यमाह—**स एकः परमेश्वरः इति** ॥ स एको विष्णुरेव परमेश्वरः, फलदानादौ चेतनत्वेन [1]परमसमर्थः । न तु कर्म । तस्याचेतनत्वेन स्वतः फलदाना[2]नुपपत्तेरित्यर्थः । यद्यपि 'तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम्' । इत्येतत् ओं अम्बुवदग्रहणात्तु न तथात्वं ओं ओं वृद्धिह्रासभाक्त्व अन्तर्भावादुभयसामञ्जस्यादेवं ओं इत्यादिसूत्रतात्पर्यकथनार्थं प्रवृत्तत्वात् पूर्वमेव वक्तुमुचितम् । तथापि व्यत्यासस्तु भक्तिपादत्वेन भक्तेरन्ते निवेशार्थमित्यवगन्तव्यम् ॥ २० ॥

[3]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥

॥ श्री कृष्णार्पणमस्तु ॥

---

[1] परमसमसमर्थः—ग. [2] नुपपत्तिरित्यर्थः । [3] "मदाचार्य" इत्ययं श्लोकः—क.ग. नास्ति ॥

# अथ तृतीयाध्यायस्य तृतीयः पादः

श्रीगुरुभ्यो नमः

सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः ।
यथाक्रमं बहुगुणैः ब्रह्मणा त्वखिलैर्गुणैः ॥
उपास्यः सर्ववेदैश्च सर्वैरपि यथाक्रमम् ।
ज्ञेयो विष्णुर्विशेषस्तु

---

हरिः ओम्

१पाण्डुरङ्गमहं वन्दे रुग्मिणीपतिमादरात् ।
समपादं नीलवर्णं कटिबद्धकरं हरिम् ॥ १ ॥

[1]भक्तिसाध्यत्वात् ज्ञानसाधनत्वात् भक्त्यनन्तरं ज्ञानात्पूर्वं [2]उपासनास्वरूपं अस्मिन् पादे निरूप्यते ॥

[सर्ववेदार्थविमर्शनेन ब्रह्मणः ज्ञातव्यतासमर्थनम्]

॥ ओं ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ओं ॥ ३-३-१

सर्ववेदान्तप्रत्ययं सर्ववेदानामन्तेन निर्णयेन उत्पाद्यः प्रत्ययः ज्ञानं यस्य [3]तत्तथा सर्वैः यथाशक्ति सर्वैः वेदैः श्रवणमननाभ्यां ब्रह्म

१ अयं श्लोकः—क. ग मातृकयोः नास्ति । अथापि अत्रावश्यकतयानुसन्धेयः ॥

[1] "भक्ति" इत्यारभ्य ज्ञानात्पूर्वं इत्यन्तो भागः—ग नास्ति ॥ [2] उपासनास्मिन् पादे—घ. [3] स तथा—ग. स तथा तत्तथा—क.

ज्ञातव्यमेवेत्यर्थः । कुतः चोदनाद्यविशेषात् । चोदना विधिः, चोदनानां १"आत्मेत्येवोपासीत" इत्यादिविधीनां आदिपदेन तत्समीपोक्तानां [1]अर्थवादादिरूपयुक्तीनां च अविशेषात् सर्वाधिकारिसाधारण्यात, अन्यथा काण्वैरेवेदं ज्ञेयमित्यादिरूपेण विधिसमीपे अधिकारिविशेषनिर्देशः स्यादिति सूत्रार्थः ॥

अत्र स्वस्वशाखोक्तमेव ब्रह्म तेन तेन ज्ञेयं न सर्वशाखोक्तम् । शाखाप्रतिपाद्यानां नानात्वात् । [2]न [3]हि सर्वशाखोक्तं वस्तु [4]एकं [5]कस्याञ्चिच्छाखायां विज्ञाना[6]नन्दादिरूपं वस्तूच्यते । क्वचिच्च सत्यज्ञानानन्दादिरूपं, [7]क्वचिच्छ्रोतृमन्त्रादिरूपं अपहतपाप्मादिरूपं [8]च अन्यत्रेत्येवमादि । अन्यथा सर्वशाखास्वप्येकप्रकारोक्तिः स्यादिति प्राप्ते—

[9]सर्वशाखोक्तं एकमेव ब्रह्म [10]सर्वैर्ज्ञातव्यम् । [11]आत्मेत्येवोपासीत । २श्रोतव्यो [12]मन्तव्य इत्यादिविधीनां सर्वसाधारणत्वात् । न हि [13]काण्वादिशाखासु काण्वैरेवेदं ज्ञेयं नान्यैः, माध्यन्दिनैरेवेदं ज्ञेयं नान्यैः इति अधिकारि[14]विशेषनिर्देशोऽस्ति । येन साधारण्यं न स्यात् । न च प्रतिपाद्यभेदः तत्तद्गुणविशिष्टस्य एकस्यैव ब्रह्मणः सर्वत्रोक्तत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सर्ववेदैश्च [15]सर्वैरपि यथाबलं ज्ञेयो विष्णुरिति ॥** सर्वैरप्यधिकारिभिः यथाबलं स्वस्वशक्त्यनुसारेण सर्ववेदैरपि

---

१ बृहदारण्यकोपनिषत् ॥ (३—४—७)

२ बृहदारण्यकोपनिषत् । (४—४—५)

[1] अर्थवादादियुक्तीनां अर्थवादादिरूपयुक्तीनां च । [2] "न हि" इत्यारभ्य "एकप्रकारोक्तिः स्यात्" इत्यन्तो भागः—घ. नास्ति ॥ [3] "हि"—ग. नास्ति । [4] एवं—क. [5] कस्या चित्—क. [6] नन्दादिकं—ग. [7] क्वचिद्धेतृ—ग. [8] तु—ग. [9] सर्वशाखोक्तमेव—ग घ. [10] एकैकेन ज्ञातव्यम्—घ. [11] "आत्मेत्येवोपासीत"—घ. नास्ति । [12] मन्तव्यो—क. [13] कण्वादि—घ. [14] विशेषे—ग. [15] सर्ववेदैरपि—क.

विष्णुः ज्ञेयः । न [1]स्वस्वशाखोक्तप्रकारेण [2]तेन तेन ज्ञेयः इत्यर्थः । यद्यपि सर्ववेदान्तेति [3]प्रथमसूत्रे सर्वेषां सर्ववेदोक्तप्रकारेण स्वस्वशक्त्यनुसारेण सर्ववेदार्थपरिज्ञानस्यो[4]क्तत्वात्तदनुरोधेन [5]भाष्यकारेणाऽपि सर्ववेदैश्चेत्यादिना एतदधिकरणतात्पर्यं प्रथमतो वक्तव्यम् । तथापि सर्ववेदार्थपरिज्ञानस्योपासनार्थत्वेनोपासनायाः [6]प्राधान्यज्ञापनार्थं [7]सोपानावरोहणन्यायेन अधिकारिक्रममुपेत्य सच्चिदानन्द आत्मेत्यादिना उपास्य इत्यन्तेन क्रमोल्लङ्घनं कृतमित्यदोषः । सूत्रकारेण तु श्रवणमननरूपसर्वपरिज्ञानस्य सर्वाधिकारिकत्वात् तत् प्रथममुक्तमिति अवधेयम् ॥ १ ॥

———

[उपासनायाः कर्तव्यतानिरूपणम् ]

## ॥ ओं ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ओं ॥ ३–३–२

अर्थाऽभेदात् सर्ववेदार्थानां आनन्दादिगुणानां दोषाऽभावानां च [8]अभेदात् अविभागेनोपसंहारः कार्यः । अत्र उपसंहारो नाम एकबुध्युपारूढत्वं अविभागेन तानुपसंहृत्य ब्रह्म ध्येयमित्यर्थः । कुतः विधिशेषवत् विधिभिः शिष्टानि विधिशेषाणि विधिवाक्योक्तानि [9]कर्माणीवेत्यर्थः । यथाविहितत्वात् सन्ध्यावन्दनादिकं कार्यं एवं विहितत्वात् उक्तरूपेण ध्यानं

[1] स्वशाखोक्तप्रकारेण—क [2] "तेन" इत्यारभ्य "सर्ववेदोक्तप्रकारेण" इत्यन्तो भागः—ग. मातृकायां नास्ति ॥ [3] "प्रथम"—घ नास्ति । [4] क्तत्वात्तदनुरोधेन—क.घ. [5] भाष्यकारेणापि—घ. नास्ति । [6] प्राधान्यज्ञानार्थं—ग. [7] सोपानारोहणन्यायेन—क.घ. [8] न भेदात्—क. [9] कर्माणीत्येवार्थः—ग.

कार्यम् । उक्तस्यापवादः समाने चेति, समान एव भगवति योग्यगुण एव, नत्वयोग्यरोदनादिविषये, कुतः ?

१"गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन"। इति उक्तेरिति सूत्रार्थः ॥

अत्र [1]नेश्वरः सर्ववेदोक्तगुणोपसंहारेण ध्यातव्यः अशक्यत्वादिति प्राप्ते –

परमात्मा सर्ववेदोक्तगुणोपसंहारेण [2]ध्यातव्यः ।

२"[3]उपास्य एकः परतः [4]परो यो
वेदैश्च सर्वैः सह चेतिहासैः ।
सपञ्चरात्रैः [5]सपुराणैश्च देवः
सर्वैः गुणैः तत्र तत्र प्रतीतैः" ॥

इति विहितत्वात् । [6]विहितसन्ध्यावन्दनादिकर्मवत् । अन्यथा वेद-विहितक्रियालोपप्रसङ्गेन [7]सन्ध्यावन्दनाद्यकरणे प्रत्यवायवत् प्रत्यवायः स्यात् । [8]तदुक्तम् ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे बृहत्तन्त्रवाक्यत्वेनोदाहृतो श्लोकभागः ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेनोदाहृतः श्लोकः ।

[1] "नेश्वरः" इत्यारभ्य "ध्यातव्यः" इत्यन्तं—ग. नास्ति । [2] "ध्यातव्यः" इत्यनन्तरं "सर्वे गुणाः सर्वदैव ह्युपास्याः" इति—घ मातृकायां अधिकः पाठः ॥ [3] "उपास्यः" इत्यारभ्य "तत्र तत्र प्रतीतैः" इत्यन्तो भागः—घ. नास्ति ॥ [4] परोऽर्थो—क. [5] सपुरुणाणाणैश्च—ग. [6] "विहितसन्ध्यावन्दनादि कर्मवत्" इतीदं वाक्यं—घ. नास्ति ॥ [7] सन्ध्यावन्दनकरणे—क. [8] "तदुक्तं" इत्यारभ्य "नान्यथा क्वचित्" इत्यन्तो भागः—घ. नास्ति ॥

१ "विधिशेषाणि कर्माणि सर्वत्रेदोदितान्यपि ।
यथा कार्याणि सर्वैश्च सर्वाण्येवाऽविशेषतः ॥
एवं सर्वगुणान् सर्वदोषाऽभावांश्च यत्नतः ।
योजयित्वैव भगवान् उपास्यो नान्यथा क्वचित् ॥"

इति । न चाशक्यत्वात् न सर्वगुणोपसंहारो युक्त इति वाच्यम् । शक्त्यनुसारेणैव उपसंहारानुपसंहारयोः उक्तत्वादिति सिद्धान्तः कृतः ॥

[1]तस्य तात्पर्यमाह —**ब्रह्मणा त्वखिलैर्गुणैः उपास्यः सर्ववेदैश्चेति** ॥ उपसंहृत्येति शेषः । विष्णुः [2]ब्रह्मणा सर्ववेदात् सर्वगुणानुपसंहृत्यैव ध्यातव्य इत्यर्थः ॥ २ ॥

———

[उपासकानां योग्यतानुसारेण भगवद्गुणाः उपास्याः इति निरूपणम् ]

**॥ ओं ॥ प्राप्तेश्च समञ्जसम् ॥ ओं ॥ ३-३-३**

उपसंहारोऽनुपसंहारश्चेत्यर्थद्वयं समञ्जसं उपपन्नं, कुतः प्राप्तेः=[3]योग्यतायाः व्यवस्थितत्वादिति सूत्रार्थः ॥

अत्रायुक्तौ प्रागुक्तोपसंहारानुपसंहारौ, विरोधात् । न चाधिकारिभेदेन [4]उभयस्योपपत्तिः । नियामकाभावादिति प्राप्ते—

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे आग्नेयपुराणवाक्यत्वेनोदाहृतं श्लोकद्वयम् ।

[1] तस्य तात्पर्यमाह—ब्रह्मणेति ॥ विष्णुः सर्ववेदैः अखिलैः गुणैः उपसंहृत्येति शेषः । उपास्यः ब्रह्मणा सर्ववेदोक्तगुणानुपसंहृत्यैव ध्यातव्यः इत्यर्थः । अत्रोपसंहारो नाम एकबुद्ध्युपारूढत्वम्—घ. [2] ब्रह्मणो सर्ववेदोक्तसर्वगुणान्—ग [3] योग्यतायाः विशेषतया प्राप्तत्वात्—क. [4] उभयोपपत्तिः—घ.

उपपन्नावेवोपसंहारानुपसंहारौ पुरुषभेदेन [1]न [2]च नियामकाभावः । १"यस्य यावद्गुणाः स्पष्टं [3]प्रतिभासन्त्युपासने । युगपत् [4]स्वभुजौ यद्वत् [5]ध्यायेत्तावत एव सः" इति [6]श्रुतेरेव नियामकत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सर्वैरपि यथाबलम्** ॥ यथायोग्यं उपसंहृत्योपास्य इति ॥ युगपत् स्वभुजवत् यस्य यावद्गुणप्रतीतिः तस्य तावद्गुणोपसंहारः । तत्र युगपत् सर्वगुणप्रतीतिः ब्रह्मणः, अन्येषां तु यथायोग्यं बहुगुणप्रतीतिः । मनुष्योत्तमानां चतुर्गुणप्रतीतिः । मनुष्योत्तमेभ्योऽपि नीचानामात्मस्वरूपैकगुणप्रतीतिरिति ज्ञातव्यम् । तदुक्तम् । २"गुणैः सर्वैः उपास्योऽसौ ब्रह्मणा परमेश्वरः ।

अन्यैर्यथाक्रमं चैव मानुषैः [7]कैश्चिदेव तु" ॥ इति ॥ [8]३ ॥

———

[उपसनानुसारि फलमिति निरूपणम् ]

## ॥ ओं ॥ सर्वाभेदादन्यत्रेमे ॥ ओं ॥ ३-३-४

इमे ब्रह्मादयः अन्यत्र फले अल्पगुणोपसंहर्तृफलविलक्षणसम्पूर्णानन्दात्मके मोक्षफले भवन्ति, तद्भाजो भवन्ति । कुतः सर्वाऽभेदात् । सर्वगुणानामविभागेनोपासनात् सर्वगुणयुक्तत्वेनोपासनादिति यावत् । अन्ये तु अल्पगुणोपासनादल्पफलभाजो भवन्तीति सूत्रार्थः ॥

---

१ न्यायविवरणे एतदधिकरणे

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पर्ववाक्यत्वेनोदाहृतम् ॥

[1] "न च नियामकाभावः" - घ.नास्ति ॥ [2] चानियामका भावः—क. [3] प्रतिभासयन्त्युपासने—क. [4] स्वभुजौ च द्वत्—क. [5] ध्यायेतावत—क. [6] "श्रुतेरेव"—घ. नास्ति ॥ [7] कश्चिदेव तु—क. [8] ॥ ४ ॥—घ.

अत्र न बहुगुणोपसंहारः कर्तव्यः अल्पगुणोपसंहर्तृफलापेक्षया फलातिशये [1]प्रमाणाऽभावादिति प्राप्ते—

कर्तव्य एव [2]बहुगुणोपसंहारः । [3]साधनतारतम्ये फलतारतम्यस्य नियतत्वात् । [4]न च फलातिशये प्रमाणाऽभावः ॥

१ "संपूर्णोपासना[5]द्ब्रह्मा सम्पूर्णानन्दभाग्भवेत् ।

इतरे तु [6]यथायोग्यं" इत्यादि [7]प्रमाणसद्भावात् इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सर्वैः [8]यथाक्रमं अखिलैः गुणैः उपसंहृत्योपास्य इति** ॥ सर्वशब्दः अल्पो[9]पसंहर्त्रातिरिक्ताधिकारिपरः । अखिलशब्दः बह्वर्थकः । तथा च मनुष्योत्तमव्यतिरिक्ताधिकारिभिः यथायोग्यं बहुगुणोपसंहारेण [10]ध्येयः इत्यर्थः ॥ ४ ॥

---

[मोक्षप्राप्त्यर्थं चतुर्गुणोपास्यत्वनिरूपणम् ]

**॥ ओं ॥ आनन्दादयः प्रधानस्य ॥ ओं ॥ ३-३-५**

प्रधानस्य मोक्षस्यार्थे आनन्दः ज्ञानं निर्दोषत्वं स्वामित्वं चेति चत्वारो गुणाः प्रायशः सर्वोपास्याः इति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे पद्मपुराणवाक्यत्वेनोदाहृतम् ॥

[1] प्रमाणाभावः —ग. "इति प्राप्ते" इत्यारभ्य "प्रमाणाभावः" इत्यन्तं —ग. नास्ति ॥ [2] गुणोपसंहारः—क ग. [3] "साधनतारतम्ये फलतारतम्यस्य नियतत्वात्" इतीदं वाक्यं—क.ग. नास्ति ॥ [4] "न च फलातिशये प्रमाणाभावः" इदं वाक्यं—घ. नास्ति ॥ [5] द्ब्रह्म—ग. [6] यथायोगं इति स्मृतेश्चेति सिद्धान्तः कृतः—घ [7] प्रमाणासद्भावादिति—क. [8] "यथाक्रमम्"–ग. नास्ति । [9] पसंहर्तृतिरिक्त—ग. संहर्त्रतिरिक्त —घ. [10] ध्यातव्यः—क

अत्र न सर्वमुमुक्षूपास्याः क्लृप्तगुणाः सन्ति, नियामकाऽभावात् इति प्राप्ते—

सत्यानन्दादयः चत्वरो गुणाः सर्वोपस्याः, न च नियामकाभावः ।

१"सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।
सर्वेषां च मुमुक्षूणां [1]फलसाम्याद्पेक्षिता ॥"

इति स्मृतेरेव नियामकत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सच्चिदानन्द आत्मेति** [2]इति । [3]सन् निर्दुष्टः, [4]चित् ज्ञानरूपः, आनन्दः आनन्दरूपः, आत्मा [5]स्वामी इति सर्वैरपि मुमुक्षुभिः उपास्यः । मानुषैस्तु सच्चिदानन्द [6]आत्मेति चतुर्गुणैरेवोपास्यो विष्णुरिति सम्बन्धः ॥ ५ ॥

---

[प्रियशिरस्त्वादिगुणोपासनायां केषाञ्चिदेवाधिकार इति समर्थनम् ]

## ॥ ओं ॥ प्रियशिरस्त्वाद्यप्राप्तिः

## उपचयापचयौ हि भेदे ॥ ओं ॥ ३-३-६

प्रियशिरस्त्वाद्यप्राप्तिः=प्रियशिरस्त्वादिगुणोपासना[7]प्राप्तिः न सर्वेष कुतः हि यस्मात् [8]भेदे [9]मुक्तिफले भेदार्थे [10]तारतम्यार्थमिति यावत्

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ॥

[1] फलसामान्याद्पेक्षिता—क. [2] इति–घ. नास्ति । [3] सत्–क. [4] चित. ज्ञानरूपः—क. [5] स्वामी इति मानुषैः मनुष्योत्तमैः उपास्यो विष्णुरिति सम्बन्धः—घ. [6] आत्मेति तारतम्यार्थमिति यावत्—क. [7] "प्राप्तिः"—क.घ. नास्ति [8] "भेदे"—क.घ. नास्ति ॥ [9] मुक्तिफलभेदार्थे – क [10] "तारतम्यार्थमिति यावत्" -क.घ नास्ति ॥

उपचयापचयौ [1]उपासनायाः वृद्धिह्रासौ तारतम्यमिति यावत् । अभ्युपेयाविति सूत्रार्थः ॥

अत्र १"तस्य प्रियमेव शिरः" इत्यादौ [2]श्रुताः प्रियशिरस्त्वादिगुणाः सर्वोपास्याः तेषामानन्दादि[3]विशेषत्वात् आनन्दादीनां च सर्वोपास्यत्वादिति प्राप्ते –

न प्रियशिरस्त्वादयः सर्वोपास्याः आनन्दादिविशेषत्वेन तेषामुपासने सर्वेषां सर्वगुणोपास्तिप्रसङ्गात् । सर्वगुणानामपि आनन्दादिचतुष्टयविशेषत्वस्य [4]वक्तुं शक्यत्वात् । न च सर्वेषां सर्वगुणोपास्तिरस्त्विति वाच्यम् । आनन्दादिश्रुतिसिद्धफलभेद[5]सिध्यर्थं गुणोपासनेऽपि तारतम्यस्यापेक्षितत्वात् इति सिद्धान्तः कृतः ॥

[6]तस्य तात्पर्यमाह—**मानुषैस्त्विति** ॥ मानुषैस्त्वित्यत्र विद्यमानेन अवधारणार्थकेन तुशब्देनेत्यर्थः । स च इति शब्दात्परं संबध्यते । तथा च सच्चिदानन्द आत्मेत्येवोपास्यः न तु प्रियशिरस्त्वादिना इत्युक्तं भवति ॥ ६ ॥

---

१ तैत्तिरीयोपनिषत् ॥

[1] उपासनाद्याः—क. [2] श्रुतौ—क. [3] विशेषणत्वात्—ग. [4] वक्तुमशक्यत्वात्—क. वक्तुं शक्यत्वात् इति सिद्धान्तः कृतः—घ. [5] सिध्यर्थगुणोपासनेऽपि—क. [6] एतदधिकरणतात्पर्यन्तु—सच्चिदानन्द आत्मेति सर्वैरपि विष्णुरुपास्य इति ॥ चतुर्गुणानामेव सर्वमुमुक्षुसाधारण्योक्त्या लब्धमिति वाच्यम् । केचित्तु एतदधिकरणतात्पर्यन्तु अवधारणार्थं कृतुशब्देन, तथाच मानुषैः सच्चिदान्द आत्मेत्येवोपास्यः न तु प्रियशिरस्त्वादिनेत्यर्थ इत्यपि व्याचक्षते ॥ ६ ॥—क.

एतत्तदधिकरणतात्पर्य-तु अवधारणार्थकतुशब्देन, तथाच मानुषैः सच्चिदानन्द आत्मेत्येवोपास्यः न तु प्रियशिरस्त्वादिनेत्यर्थ इत्यपि व्याचक्षते ॥ ६ ॥—ग.

[आनन्दादिव्यतिरिक्ता अपि गुणाः देवादिभिः उपास्याः इति निरूपणम् ]

## ॥ ओं ॥ इतरे त्वर्थसामान्यात् ॥ ओं ॥ ३-३-७

इतरे तु उक्तानन्दादिव्यतिरिक्ताः गुणाः देवादिभिः [1]उपसंहार्या एव कुतः अर्थसामान्यात् । अर्थेन फलेन सामान्यात्, उपासनाया इति शेषः । ततश्च स्वस्वप्राप्यफलानुसारेणो[2]पासनायोग्यतानिश्चयोपपत्तेः इति सूत्रार्थः ॥

अत्र विरिञ्चेतरदेवादिभिः चत्वार एव गुणाः उपास्याः न त्वधिकाः सर्वमुमु१क्षूणां [3]चतुर्गुणोपासनायोग्यतायाः निर्णीतत्वात् । अधिकयोग्यतायाः अनिर्णयादिति प्राप्ते—

चतुर्गुणाधिकगुणाः देवादिभिरुपास्या एव, [4]तदपेक्षिततत्तत्प्राप्यफलनिर्णयं प्रथमतः कृत्वा पश्चात्साधननिर्णयं विधाय [5]ब्रह्मणोऽन्यस्य वा सर्वज्ञस्य गुरोः उपदेशेन योग्यतानिर्णयोपपत्तेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सुरेश्वरैः**=विरिञ्चेतरदेवादिभिः । **यथाक्रमं बहुगुणैरिति** ॥ बहुत्वस्य सर्वेषां एकप्रकारत्वाभावात् यथाक्रमं इत्युक्तम् । योग्यताक्रमानुसारेणेत्यर्थः ॥ ७ ॥

---

१ ६२, ६३, ६४, एतत्पत्रत्रयं—ग. मातृकायां लुप्तम् । तस्मात् "क्षूणां" इत्यारभ्य "तथेति भावः" इत्यन्तो भागः (p. १२-२६) "ग" मातृकायां नास्ति ॥

[1] उपसहाया—ग. [2] पासनयोग्यता—ग. [3] चतुर्गुणोपासनयोग्यतायाः—क. [4] "तदपेक्षित"—क. नास्ति ॥ [5] ब्रह्मोपासनस्य —क.

[सर्वगुणोपसंहारानुपसंहारयोः कर्तव्यत्वे प्रमाणनिरूपणम्]

**॥ ओं ॥ [1]आध्यानाय प्रयोजनाभावात् ॥ ओं ॥ ३–३–८**

[2]आध्यानाय=सम्यक् सर्वगुणोपसंहारपूर्वकध्यानार्थं वेदे सर्वगुणाः [3]उच्यन्ते ॥

[4]अत्र न सर्वगुणोपसंहारः कर्तव्यः प्रमाणाभावात् । न च तत्र विधिरस्तीत्युक्तमिति वाच्यम् । अनुपसंहारिणां अपि चतुर्गुणोपासकानां मोक्षस्य [5]जायमानत्वात् [6]व्यर्थविधेरनवधेयत्वात् । नाऽपि [7]कतिपयगुणोपसंहारः कार्यः । प्रमाणाभावात् इति प्राप्ते

कर्तव्य एवायमुपसंहारः सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वात् । गुणाभिधानस्य च उपसंहारपूर्वकध्यानार्थत्वात् । न चोपसंहारो निष्फलः । [8]विप्रकीर्णगुणोपसंहारेणोपासकस्य मुक्तावानन्दातिशयलक्षणफलसद्भावात् ।

१ "[9]यावत्सेवा परे तत्त्वे तावत्सुखविशेषता" इति स्मृतेः । तथा विरिञ्चेतरैः कतिपयगुणोपसंहारः कार्यः, आत्मेत्येवोपासीतेत्या[10]द्यनुपसंहारप्रमाणस्य विद्यमानत्वादिति सिद्धान्तः कृतः ॥

एतदधिकरणतात्पर्यं उक्तप्रायमेव प्राप्तेश्च समञ्जसमिति तृतीयाधि-

---

१ ब्रह्मसूत्रभाष्ये देवताधिकरणे (१—३—८) स्कान्दपुराणवाक्यत्वेनोदाहृतम् ।

[1] अध्यानाय—क [2] अध्यानाय—क. [3] "उच्यंते" इत्यस्यानन्तरं "प्रयोजनाभावात्=प्रयोजनान्तराभावात् इति सूत्रार्थः"। इति पाठः भाति ॥ [4] "अत्र न सर्वगुणोपसंहारः कर्तव्यः, इदं वाक्यं—क. नास्ति ॥ [5] जायकत्वात्—क. [6] "व्यर्थविधेरनवधेयत्वात्"—घ. नास्ति ॥ [7] कतिपयमनुष्यगुणोपसंहारः—क. [8] "विप्रकीर्ण" इत्यारभ्य "मुक्तौ" इत्यन्तं—घ. नास्ति । [9] "यावत्सेवा परे तत्त्वे" इत्यारभ्य "स्मृतेः" इत्यन्तं—घ. नास्ति [10] द्यनुपसंहारस्य विद्यमानत्वात्—क.

करणेनैकविषयत्वात् । तत्र हि यस्य यावद्गुणाः स्पष्टं प्रतिभासन्तीति तयोः कर्तव्यत्वस्य प्रतिपादितत्वात् तत्रैव [1]प्रमाणप्रतिपादकत्वात् अपुनरुक्तिश्च ॥ ८ ॥

---

[आनन्दादयः चत्वारो गुणाः उपास्या एवेति प्रतिपादनम् ]

## ॥ ओं ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ ओं ॥ ३-३-९

आत्मगृहीतिः आत्मशब्देन आनन्दादिगुणानां गृहीतिः ग्रहणं, कथं एकेन अनेकग्रहणमित्यत उक्तं—इतरवदिति । १सत्यज्ञानादिवाक्यगतसत्यादयः शब्दाः २"सत्वं जीवनमेव च" "विशीर्णता च सत्वं स्यात्" इत्युक्तरीत्या यथा जीवकत्वविनाशकत्वाद्यनेकगुणवाचकाः तथा आत्मशब्दोऽपीत्यर्थः । कुतः उत्तरात् ॥ "अत्र ह्येते सर्व एकीभवन्ति" इति उत्तरवाक्यादिति सूत्रार्थः ।

[2]अत्र आत्मत्वमेव सर्वोपास्यं नानन्दादयश्चत्वारः, ३"आत्मेत्येवोपासीते"ति साधारणवचनादिति प्राप्ते—

आनन्दादयः चत्वारोप्युपास्या एव आत्मशब्दस्य ४"अत्र ह्येते सर्व

---

१ यद्यपि भाष्ये इतरवदित्यस्य बृहदारण्यकादिगत "विज्ञानमानंदं ब्रह्म" इत्यादि-वाक्येष्विव इत्यर्थ एव उक्तः । अत्र तु इतरवदित्यस्य सच्छब्दवत् इत्यर्थकथनं सूत्रस्य एतादृशार्थांतरपरत्वसम्भवाभिप्रायम् ॥

२ अनुव्याख्याने आनंदमयाधिकरणे यदुक्तं तद्रीत्येत्यर्थः ।

३ बृहदारण्यकोपनिषत् । (३—४—७)

४ बृहदारण्यकोपनिषत् । (३—४—७)

[1] प्राणप्रतिपादकत्वात्—क. [2] "अत्र"—क. नास्ति ॥

एकीभवन्ति'' [1]इत्युत्तरवाक्यबलेन सत्यज्ञानादिपदजातवदानन्दाद्यनेकार्थत्वेन स्वामित्वमात्रार्थकत्वाऽभावादिति सिद्धान्तः कृतः ॥

[2]एतदधिकरणतात्पर्यमप्युक्तप्रायमेव । आनन्दादयः प्रधानस्येति पञ्चमाधिकरणेन गतार्थत्वात् ॥ [3]९ ॥

———

[आत्मशब्दः सर्वगुणबोधकः तथाऽपि विरिञ्चेतरेषां न सर्वगुणबोधकः इति समर्थनम् ]

**॥ ओं ॥ अन्वयादिति चेत्स्यात् [4]अवधारणात् ॥ ओं ॥ ३–३–१०**

१ अत्रान्वयात्=आत्मशब्दे सर्वगुणानामन्वयात्, तस्य सर्वगुणवाचित्वादिति यावत् । अनुपसंहारप्रमाणत्वमयुक्तमिति चेत् ''स्यात्'' आत्मशब्दस्य सर्वगुणवाचकत्वं स्यात्=अङ्गीकृतमेव । किन्तु ब्रह्मादीन् प्रत्येव न सर्वान् प्रति । नन्वन्यान् प्रतीव ब्रह्मादीन् प्रत्यल्पगुणाभिधायकः किं न स्यादित्यत उक्त—अवधारणादिति । आत्मेत्येवेत्यवधारणादित्यर्थः । अस्य विधेः ब्रह्मादिसर्वाधिकारिकत्वात् । अन्ययोगव्यवच्छेदकावधारणयुक्तात्मपदेन सर्वगुणाऽनुक्तौ च चतुर्मुखस्याऽपि आत्मशब्दार्थभूतकतिपयगुणविशिष्टत्वेन उपासनाप्राप्तौ २''गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणे''त्यादिविरोधात् । अतोयमात्मशब्दः योग्यतानुसारेण गुणाभिधायक इति युक्तं तस्यानुपसंहारप्रमाणत्वमिति सूत्रार्थः ॥

---

१ ''अत्र'' इति शब्दस्य उपयोगश्चिन्त्यः ।

२ ब्रह्मसूत्रभाष्ये प्राप्त्यधिकरणे (३—३ ५) भविष्यत्पर्ववाक्यत्वेनोदाहृतम् ॥

[1] इत्युत्तरवाक्यबलात् बह्वर्थकत्वेन आनन्दाद्यभिधायकत्वात् इति सिद्धांतः कृतः—घ.

[2] एतदधिकरणतात्पर्यं तु आनंदादयः प्रधानस्येति पञ्चमाधिकरणतात्पर्यकथनेन उक्तप्रायमेव—क. [3] ॥ १९ ॥—क. [4] सावधारणात् क. स्यादवधारणात्—घ.

[1]अत्र आत्मशब्दोक्तगुणाः न सर्वोपास्याः तस्य सर्वगुणाऽभिधायकत्वात्, ततश्च नास्याऽनुपसंहारप्रमाणत्वमिति प्राप्ते—

सत्यमात्मशब्दः सर्वगुणाभिधायकः । तथापि [2]न सर्वान् प्रति । किन्नाम तत्तद्योग्यतानुसारेण [3]तान् तान् [4]प्रत्यसाधारण्येन गुणाभिधायकः ततश्च आत्मशब्दोक्तगुणाः सर्वोपास्याः इति [5]युक्तमनुपसंहारप्रमाणत्वमिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[6]**सर्वैरपि यथाक्रमं आत्मेत्युपास्य इति** ॥ सर्वैरप्यधिकारिभिः अयं आत्मशब्दः योग्यतानुसारेण गुणाभिधायकः इति ज्ञात्वा उपास्यो विष्णुरित्यर्थः ॥ १० ॥

———

[मोक्षार्थं उपास्यमानगुणानां लोकविलक्षणत्वसमर्थनम्]

**॥ ओं ॥ कार्याख्यानादपूर्वम् ॥ ओं ॥ ३–३–११**

आनन्दादिगुणजातमपूर्वं अलौकिकत्वेनोपास्यं कुतः कार्याख्यानात् । कार्यस्य उपासनासाध्यस्य अलौकिकमोक्षस्य आख्यानात् ।

१ ''अलौकिकास्तस्य गुणा उपास्याः
अलौकिकं मुक्तिकार्यं [7]यतोऽस्य ।'' इति श्रुतौ कथनादिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

1 "अत्र" इत्यारभ्य "उपास्याः" इत्यन्तं—घ नास्ति, तत्स्थाने "अत्र सर्वोपास्याः गुणाः नासाधारण्येनात्मशब्दोक्ताः"—घ. इति वर्तते ॥ 2 "न"—क. नास्ति ॥ 3 "तान् तान् प्रत्येव"—क. 4 "प्रत्यसाधारण्येन गुणाभिधायकः"—क. नास्ति ॥ 5 "युक्तमनुप" इत्यारभ्य ''णत्वमिति'' इत्यन्तं वाक्यं—घ. नास्ति ॥ 6 सर्वैरप्यात्मेत्युपास्य इति ॥ सर्वैरप्यधिकारिभिः आत्मशब्दोक्तगुणैः उपास्यो विष्णुरित्यर्थः ॥ १० ॥–क. 7 पयोऽस्य—क.

अत्र भगवद्गुणाः लोकसदृशत्वेनैव ध्यातव्याः [1]अन्यथाननुभूतत्वेन [2]स्मृतिरूपध्यानाभावप्रसङ्गात् इति प्राप्ते—

अलौकिकाः एव भगवद्गुणाः ध्यातव्याः। तत्कार्यस्य मोक्षस्य अलौकिकत्वात्। न च तत्प्रतीत्यभावेन ध्यानाऽभावप्रसङ्गः। लक्षण-मुखेनेन्द्रादेरिव यत्स्वपरगताखिल[3]विशेषविषय तदीशज्ञानमित्युपदेशेन [4]अलौकिकगुणप्रतीत्युपपत्तेरिति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह—[5]**तु उपास्य इति**॥ तु शब्दो अलौकिक-गुणवत्स्वरूपविशेषार्थकः। तथाच अलौकिकगुणवत्तया ध्यातव्यः इत्यर्थः ॥ ११ ॥

————

[ब्रह्माण्याः त्रिविक्रमत्वादिक्रियोपासना पृथक् नास्तीति निरूपणम् ]

**॥ ओं ॥ समान एवं चाऽभेदात् ॥ ओं ॥ ३–३–१२**

एवं चेशधर्माणामपूर्वत्वेऽपि ब्रह्माण्याः समाने=योग्यगुणविषये एवोपसंहारः नत्वयोग्ये त्रिविक्रमादौ क्रियाविशेषे, तर्हि तस्याः सर्वथा त्रिविक्र-मत्वाद्युपसंहारो न स्यादित्यत उक्तं—अभेदादिति ॥ तेषां [6]नित्यविक्रा-न्त्यादिसामान्यक्रियास्वन्तर्भावादिति सूत्रार्थः ॥

अत्र भगवदुपासनं न स्वानुसारिफलप्रदम्। ब्रह्माणीब्रह्मोपासने तदभावात्। [7]तथाहि तयोर्हि उपासनं समं विषमं वा भवेत्। न तु

[1] अन्यथानुभूतत्वेन —क. [2] स्मृतिरूपाध्यानाभावप्रसङ्गात्—क. [3] विशेषग-विषं —क. [4] अलौकिकप्रतीगुण—क. [5] "तु"—क. नास्ति ॥ [6] नित्यकान्त्यादि—क. [7] "तथाहि"—क ग. नास्ति ॥

[1]समविषमं विरुद्धत्वात्। फलन्तु [2]समविषमं वैकुण्ठाख्यस्थानसाम्येऽपि आनन्दतारतम्यसद्भावात् इति प्राप्ते—

उपासनं स्वानुसारिफलप्रदमेव। फलवत्तयोरुपासनस्यापि [3]समविषमत्वात्। तथाहि [4]ब्रह्माणी हि ब्रह्मवत् सर्वगुणानुपसंहृत्यैवोपास्ते। त्रिविक्रमत्वादि [5]कदाचिदभिव्यक्तक्रियास्तु [6]नित्यविक्रान्त्यादिक्रिया[7]स्वन्तर्भाव्यैव न तु पृथगुपसंहृत्यैव। न च वाच्यं त्रिविक्रमत्वादिक्रियाणां अलौकिकत्वेनात्याश्चर्यत्वात्कथं ब्रह्माणी तदुपासनं [9]हास्यतीति तासामपूर्वत्वेऽपि योग्यस्यैवोपास्यत्वात्। तस्याश्च [10]तदुपास्तियोग्यताऽभावात्। ब्रह्मा तु [11]त्रिविक्रमत्वादिक्रियाः [12]पार्थक्येन सदोपसंहृत्योपास्त इति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह—**यथाक्रमं**॥ [13]स्वयोग्यताक्रमानुसारेण [14]उपसंहृत्योपास्य इति। [15]तथाचोपासनं स्वानुसारिफलप्रदमित्यर्थः॥ १२॥

— — — —

[आत्मशब्दस्य तत्तदधिकारियोग्यगुणाभिधायकत्वसमर्थनम्]

## ॥ ओं ॥ न वा विशेषात् ॥ ओं ॥ ३-३-१३

आत्मगृहीतिरित्यनुवर्तते। सर्वगुणानामिति योग्यतया सम्बन्धः। वा शब्दो व्यवस्थितविकल्पार्थः। न वा आत्मशब्देन सर्वगुणानां

---

[1] समं विषमं—क. [2] समविषमं—क [3] समविषयत्वात्—क. [4] ब्रह्मीणी—क. [5] कदाचनभिव्यक्त—क [6] नित्यविक्रान्दिक्रिया—क. [7] स्वन्तर्भाव्येव—क. [8] पृथगुपसंहृत्योपास्ते—क. पृथगुपसंहृत्य योग्यतानुसारेणैवोपास्यत्वात् ब्रह्मा तु—घ. [9] हीस्यतीति—क. [10] तदपास्तियोग्यताभावात् क. [11] त्रिविक्रमत्वादीस्तु क्रियाः—घ. [12] "पार्थक्येन"—घ नास्ति॥ [13] स्वयोग्यतानुसारेण—क. [14] "उपसंहृत्य" क. नास्ति। [15] तथोपासनं—क.

गृहीतिः, कुतः विशेषात् । योग्यताविशेषानुसारेण बोधकत्वादिति सूत्रार्थः ॥

अत्र न [1]आत्मशब्दोक्ताः गुणाः सर्वोपास्याः तस्य [2]सर्वगुणाभिधायकत्वात् । [3]अतोऽनुपसंहारप्रमाणोक्तिः न युक्तेति प्राप्ते—

युक्तमेव सर्वेषामात्मशब्दोक्तगुणोपासनं तस्य सर्वान् प्रति सर्वगुणाभिधायकत्वाभावात् । कुतः, तस्य सर्वगुणाभिधानशक्तावपि योग्यताविशेषेण तत्तद्योग्यगुणाभिधायकत्वात् ।

१"सर्वान् गुणान् आत्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव" ॥ इत्यादि श्रुतेः । तस्मादुक्तं युक्तमिति सिद्धान्तः कृतः ॥

एतदधिकरणतात्पर्यं उक्तप्रायमेव । अन्वयादिति दशमाधिकरणेनैव

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भाल्लवेयश्रुतित्वेन उदाहृतम् ॥

[1] आत्मशब्दोक्तगुणाः – क. [2] सर्वगुणाभिधायकत्वात् । न च सर्वान् प्रति योग्यतानुसारेण गुणाभिधायकत्वाद्युक्तं सर्वोपास्यत्वमिति वाच्यं असम्भवात् । न हि शब्दो बुद्धिमान् । येन योग्यतानुसारेण बोधयतीति स्यात् इति प्राप्ते ॥

आत्मशब्दोक्ताः गुणाः सर्वोपास्या एव । तस्य योग्यगुणाभिधायकत्वात् । न चासम्भवः । अधिकारमपेक्ष्य तत्त्वमस्यादिवाक्यस्य प्रमाऽप्रमजनकत्ववत आत्मशब्दस्यापि योग्यतामपेक्ष्यैव गुणबोधकत्वसम्भवादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—यथाक्रमं आत्मेत्युपास्य इति ॥ तत्त्वमास्यदिवाक्यवत् योग्यतामपेक्ष्यैव आत्मशब्दो बोधक इति ज्ञात्वा उपास्यः इत्यर्थः ॥ १२ । —घ. [3] "अतोऽनुपसंहार" इत्यारभ्य "ग्रन्थान्तरादवगन्तव्यः ॥ १३ ॥" इत्यन्तो भागः—घ. नास्ति ॥

एकविषयत्वात् । [1]पुनरुक्तिपरिहारश्च ग्रन्थान्तरादवगन्तव्यः ॥ १३ ॥

[देवैः उपास्यमानानां गुणानां निरूपणम् ]

॥ ओं ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ ओं ॥ ३–३–१४

सम्भृतिः=सम्यक् भरणं. द्युव्याप्तिः=प्रकाशेन व्याप्तिः, सम्भृतिद्युव्याप्ती अपि न [1]सर्वोपास्ये किन्तु देवाद्युपास्ये एव, कुतः, अतश्च=अत एव, योग्यताविशेषादेवेति सूत्रार्थः ॥

अत्र [2]सम्भृतिद्युव्याप्ती सर्वोपास्ये मोक्षे च स्वाधमभरणस्य [3]प्रकाशेन व्याप्तेश्च सर्वापेक्षितत्वात् । [4]अतश्च चतुर्गुणोपासनानियमभङ्ग इति प्राप्ते—

न ते सर्वोपास्ये. किन्तु देवाद्युपास्ये एव । मनुष्याणां योग्यताविरहात् । [5]न चापेक्षिताऽसिद्धिः । भगवद्रूप[6]प्रतीत्यैव तत्सिद्धेः । ततश्च नोक्तचतुर्गुणोपासनानियमभङ्गः इति सिद्धान्तः कृतः ॥

---

१ पुनरुक्तिपरिहारस्तु अभिनवचन्द्रिकायां अभ्यधिकाशङ्कानिरासकत्वेन समर्थितः ॥ तथाहि —"अन्वयादिति चेत्" इत्यधिकरणे आत्मशब्दस्य तत्तद्योग्यगुणमात्राभिधायकत्वात् आत्मशब्दोक्तगुणोपासनस्य सर्वाधिकारिसाधारणत्वं समर्थितम् । तद्युक्तम् । न हि शब्दो बुद्धिमान् । येन उत्तमत्वात् अधिकारिविशेषं प्रति सर्वगुणान् बोधयित्वा अनुत्तमत्वादपरं प्रति अल्पानेव बोधयतीति स्यात् । इत्यभ्यधिकाशङ्कायां आत्मशब्दोक्तगुणोपासनस्य सर्वाधिकारिसाधारणत्वसम्भवात् । कथमिति चेत् । यस्य युगपत् स्वभुजाविव आत्मशब्देन यावन्तो गुणाः प्रतीयन्ते तावन्त एवोपास्याः इति व्यवस्थासम्भवात् । इत्यभिप्रायेण इदमधिकरणं प्रवृत्तम् । अतः न पुनरुक्तिः ॥

[1] सर्वे किन्तु – क. [2] सम्भृतिव्याप्ती—क [3] प्रकाशेन व्याप्तिश्च —क
[4] ततश्च —घ. [5] न चापेक्षितत्वासिद्धिः क. [6] प्रतीत्येव — क.

[1]एतदधिकरणतात्पर्यमपि उक्तप्रायमेव । षष्ठाधिकरणतात्पर्यकथनेन कृतार्थत्वात् ॥ १४ ॥

---

[वेदोक्तगुणैरेव उपासना कर्तव्येति प्रतिपादनम् ]

## ॥ ओं ॥ [2]पुरुषविद्यायामपि [3]चेतरेषाम[4]नाम्ना-नात् ॥ ओं ॥ ३-३-१५

सर्वविद्योत्तमायामपि पुरुषसूक्तविद्यायां इतरेषां केषाञ्चिद्गुणानां अनाम्नानात् च शब्देन तु केषाञ्चिदाम्नानात् सर्वतो गुणोपसंहारः कार्यः इति सूत्रार्थः ॥

अत्र न सर्वतो गुणोपसंहारः कार्यः । प्रयोजनाऽभावात् । न च स्वस्वयोग्यगुणोपासनाय सर्वत उपसंहार इति वाच्यम् । सार्वत्रिकोपसंहार-मन्तरेणापि ये हि [5]बहुगुणोपासनयोग्याः तेषां बहुगुणाभिधायकैकैकविद्योक्त-[6]गुणोपसंहार[7] मात्रे[8]णैव तत्सम्भवादिति प्राप्ते--

कर्तव्य एव सर्वतो [9]गुणोपसंहारः । एकस्यामेव विद्यायां सर्वगुणा-नामनुक्तत्वात् । सर्वविद्योत्तमायामपि पुरुषविद्यायां [10]सर्वगुणानामनाम्ना-

---

[1] एतदधिकरण तात्पर्यमपि आनन्दादयः प्रधानस्येत्यधिकरणतात्पर्यकथनेनैवोक्तमिति नात्र पुनः अभिमतम्—क. [2] पुरुषविद्यामपि—क. [3] चैतरेषां—क. [4] नाम्रात—क. [5] बहुगुणोपासनायोग्याः—घ. [6] गुणोपासनसंहार—क. [7] मात्रेणैतत्सम्भवात्—क. [8] "एव"—क. नास्ति ॥ [9] "गुणोपसंहारः" इत्यनन्तरं "सर्वगुणोपास्ति-योग्यानां अधिकारिणां भावात् ।" इति—घ मातृकायां अधिकः पाठः ॥ [10] सर्व गुणानामाम्नानात्—क.

नात् । मन्दापेक्षितानामपि एकत्रोक्तिनियमाभावाच्च इति सिद्धान्तः कृतः ॥

[1]एतस्य तात्पर्यं उपसंहारोऽर्थभेदादिति द्वितीयाधिकरणतात्पर्यकथने-नोक्तप्रायमेव । [2]तत्र सर्ववेदोक्तगुणोपसंहारः कार्य इति प्रतिपादितत्वात ॥ १५ ॥

---

[भेदनादिगुणाः सर्वैः नोपास्या इति निरूपणम् ]

## ॥ ओं ॥ वेधाद्यर्थभेदात् ॥ ओं ॥ ३–३–१६

वेधादि न सर्वोपास्याम्, कुतः, अर्थभेदात् । फलभेदात्तु वेधाद्यु-पासनस्य दुष्टहिंसारूपविलक्षणफलकत्वात् । तत्र यत्यादेरनाधिकारादिति सूत्रार्थः ॥

अत्र १"अग्ने त्वच यातुधानस्य भिन्दी"त्यादिनोक्ताः [3]भेदनादि-गुणाः सर्वोपास्याः [4]तत्फलस्य दुष्टनिग्रहस्य सर्वापेक्षितत्वात् । अतो [5]न चतुर्गुणो[6]पासननियम इति प्राप्ते—

[7]न वेधादयः सर्वोपास्याः । यत्यादीनां तदुपासनाऽयोग्यत्वात् । कुतः, तदुपासनाफलस्य दुष्टहिंसादेः यत्यादिफलाद्विलक्षणत्वात् । अयोग्योपासनाच्चाऽनर्थप्राप्तेः । अतः नाभिहितनियमो भज्यत इति सिद्धान्तः कृतः ॥

---

१ ऋग्वेदः १०—८८—४, ५

[1] तस्य—क.  [2] "तत्र"—क. नास्ति ॥  [3] वेधादिगुणाः—क.
[4] यत्यादीनां तत्फलस्य—क.  [5] "न"—घ. नास्ति ।  [6] पासनानियमः—क.
[7] न वेधादयः सर्वोपास्याः, तत्फले छेदनादौ यत्यादीनामधिकारात् । अतः नाभिहित नियमो भज्यत इति सिद्धान्तः कृतः—घ.

एतदधिकरणतात्पर्यमपि १उक्तरीत्याऽस्फुटमित्यवगन्तव्यम् ॥ १६ ॥

---

[मुक्तानां उपासनायाः ऐच्छिकत्वनिरूपणम्]

॥ ओं ॥ हानौ [1]तूपायशब्दशेषत्वात् कुशाछन्दस्तु-
त्युपगानवत्तदुक्तम् ॥ ओं ॥ ३-३-१७

हानौ बन्धहानिरूपमुक्तौ स्वेच्छयैव मुक्ताः उपासनां कुर्वन्ति न विधितः, कुतः, उपायनशब्दशेषत्वात् मोक्षवाक्यशेषत्वात् । उपासना-विधीनामिति शेषः ॥ २"ब्रह्मविदाप्नोति परं" इति मोक्षवाक्ये ज्ञानान्मोक्ष इत्युक्ते उपासनाविधीनां प्रवृत्तत्वात् मोक्षप्राप्त्यर्थं प्रकृता विधयः कथं तदनन्तर-मपि भवेयुरिति भावः । स्वेच्छयोपासनं कथमित्यत उक्तं—"कुशाछन्द-स्तुत्युपगानवदिति" । कुशग्रहणेन आछन्देन स्वेच्छया मन्त्रसामाध्ययन-वदित्यर्थः । नियतब्रह्मयज्ञानन्तरमपि द्विजन्मनां स्वेच्छयैव कुशधारणेन मन्त्राध्ययनं यथा तथेति [2]भावः । किमत्र मानं इत्यत उक्तं—तदुक्त-मिति ॥ ३"एतत्साम गायन्नास्ते ।" ४"मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः" । इत्यादाविति सूत्रार्थः ॥

अत्र न मोक्षे भगवदुपासनं, विधि[3]बन्धप्रसङ्गात् इति प्राप्ते—

---

१ उपसंहारोऽर्थाभेदादिति द्वितीयाधिकरणतात्पर्यकथनेन उक्तप्रायमेव इति उक्त-रीत्येत्यर्थः ॥

२ तैत्तिरीयोपनिषत् ॥ (२—१—१)

३ तैत्तिरीयोपनिषत् । (३—१०)

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ॥

[1] तूपादानशब्द—घ. [2] "भावः" इत्यारभ्य "सूत्रार्थः" इत्यन्तो भागः—क घ मातृकयोर्नास्ति ॥ [3] बन्धादिप्रसङ्गात्—क.

अस्त्येव मोक्षे भगवदुपासनम् । १"एतत्सामगायन्नास्ते" इति वचनात् । न च विधिबद्धत्वेन संसार[1]समानधर्मत्वं मुक्तेः, विनापि [2]विधिं स्वेच्छयैवोपासनमित्यङ्गीकारादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[3]**सर्वैरप्युपास्य इति** ॥ संसारिभिः [4]मुक्तैश्चोपास्य इत्यर्थः ॥ १७ ॥

---

[मुक्ताः स्वेच्छया कर्म कुर्वन्तीति प्रतिपादनम् ]

**॥ ओं ॥ छन्दत उभयाऽविरोधात् ॥ ओं ॥ ३-३-१८**

मुक्ताः [5]छन्दतः स्वेच्छया कदाचित् [6]कर्म कुर्वन्ति । कुतः उभयाविरोधात्=विधिप्रत्यवाययोः अभावादिति सूत्रार्थः ॥

अत्र मुक्ताः नियमेन कर्म कुर्वन्ति । विष्णुपूजात्मकत्वात्कर्मणः शक्तत्वाच्च तेषां इति प्राप्ते—

न मुक्तानां कर्मणि नियमः । [7]अपि तु [8]कर्मकरणशक्तावपि स्वैच्छयैव कदाचित् कुर्वन्ति । [9]कदाचिन्न कुर्वन्ति । [10]विधिप्रत्यवाययोरभावात् । न चात्र प्रमाणाभावः ।

२"कदाचित्कर्म कुर्वन्ति कदाचिन्नैव कुर्वते ।

---

१ तैत्तिरीयोपनिषत् । (३—१०)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्माण्डपुराणवाक्यत्वेनोदाहृतम् ॥

[1] समानधर्मत्वमुक्तेः— क. [2] विधिः— ग. [3] सर्वैरूपास्य— घ. [4] मुक्तैरपि उपास्य – क. [5] "छन्दतः"— क घ. नास्ति । [6] "कर्म" ग.घ. नास्ति ॥ [7] अत्र – ग. [8] "कर्मकरणशक्तावपि"— घ नास्ति । [9] "कदाचिन्न कुर्वन्ति"—ग. नास्ति । [10] बन्धप्रत्यवाय—घ.

प्रत्यवायस्य बन्धस्याप्यभावात् स्वेच्छया भवेत्'' ॥ इति प्रमाणादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु** [1]**ज्ञाने स्यादिति** ॥ ज्ञाने=ज्ञानजन्ये मोक्षे, विशेषः स्यात्, संसार्यपेक्षया कर्मणि विशेषः स्यात् । मुक्ताः-कदाचित् कर्म कुर्वन्ति । [2]कदाचिन्न कुर्वन्तीत्यर्थः । संसारिणान्तु [3]विधिबद्धत्वात् कर्मणि नियमः इति भावः ॥ १८ ॥

---

[सर्वेषामपि ज्ञानिनां मोक्षः अस्त्येवेति समर्थनम् ]

## ॥ ओं ॥ अनियमः सर्वेषामविरोधात् शब्दानुमानाभ्यां ॥ ओं ॥ ३–३–१९

सर्वेषां अपरोक्षज्ञानिनां अनियमः उपासने केषाञ्चिदुपसंहारः केषाञ्चिन्नेति नियमवत् केषाञ्चिन्मोक्षः केषाञ्चिन्नेति [4]नियमो व्यवस्था नास्ति, कुतः, अविरोधात् । तन्निषेधास्व्यबाधकाभावात् । उपलक्षणमेतत् । साधकसद्भावाच्च । किमत्र मानमित्यत उक्तं''शब्दानुमानाभ्या''मिति । १''न कश्चिदिति'' श्रुतेः ॥ ज्ञानित्वानुमानाच्चेति सूत्रार्थः ॥

अत्र न सर्वेषां ज्ञानिनां मोक्षः । ज्ञानिष्वपि केषाञ्चिन्मुक्त्ययोग्यत्वसम्भवात् । यथा खलु उपासकेष्वपि योग्यानामेव सर्वगुणोपसंहारो नाऽयोग्यानां इति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे "न कश्चित् ब्रह्मवित् रतिमनुभवति तस्मादाहुः रतिहा" इति कौण्डिन्यश्रुतिः उदाहृता ॥

[1] ज्ञानी स्यादुत्तरोत्तरमिति—ग. [2] कदाचित् कर्म न कुर्वन्ति—क. [3] विधिकबद्धत्वात्—क. [4] नियमे—क.

अस्त्येव ज्ञानिनां सर्वेषां मोक्षः । [1]तथाहि । केषाञ्चिदेव मोक्षः, न सर्वेषां इति वदन् प्रष्टव्यः । किं बाधकसद्भावात् न सर्वेषां मोक्षः इत्युच्यते । उत साधकाभावात् । नाद्यः । तदभावात् । न द्वितीयः । "न कश्चित् [2]ब्रह्मवित् सृतिमनुभवति" । "मुक्तो ह्येव [3]भवति" इति श्रुतेः । विप्रतिपन्नाः ज्ञानिनः मोक्षवन्तः ज्ञानित्वात् सम्प्रतिपन्नवत् इत्यनुमानाच्च । न चोपसंहारसमानयोगक्षेमता । १"[4]सर्वे गुणाः ब्रह्मणैव ह्युपास्याः नान्यैर्देवैः [5]किमु सर्वैर्मनुष्यैः" इति वद्बाधकाभावादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह — **विशेषस्तु ज्ञाने स्यादिति** ॥ तु शब्दोऽ[6]वधारणार्थकः । ज्ञाने=अपरोक्षज्ञाने सति, [7]विशिष्यते सर्वेभ्यः इति विशेषः [8]मोक्षः, स्यादेवेत्यर्थः । अन्यथा उक्तवचनविरोधादिति भावः ॥ १९ ॥

---

[मुक्तानां आनन्दतारतम्यनिरूपणम्]

**॥ ओं ॥ [9]यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ओं ॥ ३-३-२०**

[10]आधिकारिकाणामधिकारो योग्यता तदनुसार्यनुष्ठाने शीलमेषान्ते आधिकारिकाः, तेषां ब्रह्मादीनां यावदधिकारं अधिकारानुसारेण मुक्ताववस्थितिः [11]तारतम्येनावस्थानम् । मुक्तौ सुखादितारतम्यस्य प्राक्तनयोग्यतातारतम्यैकनिबन्धनत्वात्तदभावे तन्न स्यादिति भावः । [12]इति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

1 "तथाहि केषाञ्चिदेव मोक्षः" — ग. नास्ति ॥ 2 "ब्रह्मवित्" — क. नास्ति
3 भवेत् — क. 4 सर्वगुणाः — क. 5 किमिति सर्वैः — क. 6 वधारणार्थः — ग.घ.
7 "विशिष्यते सर्वेभ्यः इति" — क.ग. नास्ति । 8 मोक्षाख्यफलविशेषः — क.
9 यदिवधिकारमवरतिथिराधि – क. 10 अधिकारिणां ग. 11 तारतम्येन न स्थानं — क
12 "इति" — क.घ नास्ति ।

उत्तरोत्तरम् ।

अत्र नास्त्येवोपासनाधिकारे नियमः । अयमे[1]तावद्गुणोपासने योग्योऽयं नेति प्रमाणाभावात् । न च [2]मुक्तावानन्दतारतम्यं अधिकारनियमे प्रमाणमिति वाच्यम् । तस्य उपासनादिप्रयत्नतारतम्येनैवोपपत्तेरिति प्राप्ते—

[3]अस्त्येवोपासना[4]धिकारे नियमः । अयमेताव[5]द्गुणोपासने योग्योऽयं नेति तेन विना श्रुत्युक्ता[6]नन्दतारतम्यस्य कथमप्ययोगात् । न [7]चोपासना-प्रयत्नतारतम्येनैवोपपत्तिः । तस्या[8]पि योग्यतातारतम्याधीनत्वात् इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादुत्तरोत्तरमिति** ॥ ज्ञाने ज्ञानजन्ये मोक्षे, उत्तरोत्तरं मनुष्योत्तममारभ्य [9]ब्रह्मपर्यन्तं, विशेषः=तारतम्यं स्यात् अतः उपासनेऽपि तारतम्यं स्यात् । न हि [10]साधने तारतम्यमन्तरेण फले तारतम्यं युक्तमिति भावः ॥ २० ॥

———

[मुख्यप्राण एव अधिकारिषूत्तम इति प्रतिपादनम् ]

**॥ ओं ॥ इयदामननात् ॥ ओं ॥ ३-३-२१**

[11]इयत् अधिकारिणां प्राणावसानत्वमेव, [12]न तु प्राणादधिकोऽस्ति कुतः *"प्राणो [13]वा वेति श्रुतौ तथाऽमननादिति सूत्रार्थः ॥

* ब्रह्मसूत्रभाष्ये एतदधिकरणे "प्राणो वा व सर्वेभ्यो भूयान्, न हि प्राणाद्भूयान्, प्राणोह्येव भूयांस्तस्माद्भूयान्नाम" इति कौण्ठरव्यश्रुतेः इत्युक्तम् ॥

[1] तावद्गुणोपसंहारयोग्यः—क.ग. [2] मुक्तैरानन्द—क. [3] अस्त्युपासना—ग. [4] धिकारनियमः—ग. [5] द्गुणोपसंहारयोग्यः—क.घ. [6] नन्दतारतम्यकथनस्याप्य-योगात्—क. [7] चोपासनो – क. [8] "अपि"—ग. नास्ति । [9] ब्रह्मपर्यन्तविशेषः–क. [10] "साधने"—क. नास्ति ॥ [11] इदन्तु अधिकरणं–क. [12] ननु–क. [13] वातीति—क.

अत्र [1]नाधिकारिणः प्राणाव[2]सानाः । प्राणः स्वोत्तमाधिकारिनियम्यः अधिकारित्वात् । नामादिवदित्यनुमानविरोधात् । अतो न सर्वगुणोपास्तियोग्यता तस्येति प्राप्ते—

प्राणावसानत्वमेवाधिकारिणां "प्राणो वा व सर्वेभ्यो भूयान्" [3]इत्यामननात् । न चानुमानविरोधः । तस्य बाधितविषयत्वात् । अतः स एव सर्वगुणोपास्तियोग्य इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**ब्रह्मणा त्वखिलैः गुणैः उपास्य इति** ॥ [4]तुरवधारणे । अतोऽधिकारिणां प्राणावसानत्वमिति भावः । प्राणस्यैव [5]भाविब्रह्मत्वाद्यामिश्रोक्तिरिति विज्ञेयम् ॥ २१ ॥

———

[भगवतः प्राणादाधिक्यसमर्थनम्]

**॥ ओं ॥ व्यतिहारो [6]विशिंषन्ति हीतरवत् ॥ ओं ॥ ३–३–२२**

युक्तं प्राणात्सत्याख्यविष्णोः उत्तमत्वं, तयोः [7]विषये प्रश्नप्रतिवचनयोः अश्रवणेऽपि व्यतिहारः=प्रश्नप्रतिवचनयोरध्याहारः कार्यः । कुतः ? हि यस्मात् [8]प्राणवाख्यपेक्षया सत्याख्यविष्णुवादिनं १"एष तु वा अति-

१ छान्दोग्योपनिषत् । (७—१६)

[1] नाधिकरः—क. नाधिकारः—ग. [2] सानः—क. [3] इत्यनुमानात्—क. [4] तुरवधारणे सर्वाधिकार्युत्तमब्रह्मणैवाखिलैर्गुणै उपास्य *इति †अन्यथा तन्न स्यादित्यर्थः प्राणस्यैव—क. [5] भाविब्रह्मत्वाद्यामिश्रोक्तिः—क. भाविब्रह्मद्यामिश्रोक्तिः—ग [6] विशेषन्ति—क विशिषन्ति—घ. [7] विषययोः—क. [8] प्राणवाख्ववयवापेक्षया—क. प्राणा—ग. * इति—ग. नास्ति । † अन्यत् :—ग.

वदति यः सत्येनातिवदति" इति तुशब्देन [1]विशिंषन्ति [2]व्यावर्तयन्ति, छन्दोगाः सत्याख्यविष्णोः उत्तमत्वं ज्ञापयन्तीति यावत्। तत्र दृष्टान्तः इतरवदिति यथा अस्ति भगवो नाम्नो भूयः वाग्वाव नाम्नो भूयसी इत्यादि प्रश्न[3]प्रतिवचने नामादिभ्यो [4]वागादेरुत्तमत्वज्ञापके तथा तुशब्दः प्राणात्सत्याख्यविष्णोरुत्तमत्वज्ञापकः तद्बलादस्ति भगवः [5]प्राणादयः सत्यं [6]वा व प्राणाद्भूय इति प्रश्नप्रतिवचनयोः [7]अध्याहारः कर्तव्य इति [8]ज्ञायते इति सूत्रार्थः ॥

अत्र न विष्णोः सर्वोत्तमत्वं युक्तम्। १"[9]प्राणो वा आशाया भूयानिति" प्राणस्याशोत्तमत्वमुक्त्वा तदुत्तमाऽनभिधानात् इति प्राप्ते—

युक्तमेव विष्णोः सर्वोत्तमत्वम्। २"एष तु वा अतिवदति यस्सत्येनातिवदति" इति सत्यपदोदितस्य विष्णोः प्राणाद्युत्तमत्वाभिधानात्। ३" न चास्ति भगवो नाम्नो भूयः। वाग्वाव नाम्नो भूयसी" इत्यादाविव प्रश्नप्रतिवचनाभावात् न श्रुतेः प्राणाद्युत्तमत्वाभिधाने [10]तात्पर्यमिति वाच्यम्। प्रायपाठबलेन अस्ति भगवः [11]प्राणाद्भूय इति सत्य वा व प्राणाद्भूय इति [12]प्रश्नाद्यध्याहारस्य कर्तुं [13]अशक्यत्वात्। न चाध्याहारे कारणा[14]भावादेकप्रकरणत्वमेव वक्तुं युक्तमिति वाच्यम्। एष तु वेति तुशब्दस्य प्रकरणभे[15]दकस्य सद्भावादिति सिद्धान्तः कृतः ॥

---

१ छान्दोग्योपनिषत्। (सप्तमाध्यायः)

२ छान्दोग्योपनिषत्। (७—१६)

३ छान्दोग्योपनिषत्। (सप्तमाध्यायः)

[1] विशिषन्ति—क. [2] व्याव्रियन्तेति—क. [3] प्रतिवचनेन रमादिभ्यो—क [4] वागादिरुत्तमत्व—ग. [5] प्राणाद्भूयः—क. [6] वाच—ग. [7] अध्यारः—क. [8] "ज्ञायते इति"—क नास्ति ॥ [9] प्राणाया—क. [10] तात्पर्यमस्तीति—क.ग. [11] प्राणातय इति—क. [12] प्रश्नाध्याहारस्य—क ग. [13] शक्यत्वात्—क.ग. [14] भावादेव करणत्वमेव—क. [15] दसद्भावात्—क. दस्य सद्भावात्—घ.

तस्य तात्पर्यमाह— [1]ब्रह्मणा विष्णुरुपास्य इति । अन्यथा यः उत्तमः तस्यैवोपास्यत्वेन [2]विष्णोस्तत् न स्यादित्यर्थः ॥ २२ ॥

— — — —

[सत्यज्ञानादिरूपाणां भगवदभेदसमर्थनम्]

॥ ओं ॥ सैव हि सत्यादयः ॥ ओं ॥ ३–३–२३

[3]प्राणादेकस्यैव विष्णोरुत्तमत्वम् । न बहूनां, कुतः, हि यस्मात् प्राणादूर्ध्वं आम्नाताः सत्यादयः सैव विष्ण्वाख्य[4]परदेवतैव हिशब्दः प्रसिद्धिद्योतक इति सूत्रार्थः ॥

अत्र न केवलं प्राणात्सत्यपदोक्तो विष्णुरेवोत्तमः अपि [5]तु [6]सत्यादप्युपरि [7]विज्ञानमतिश्रद्धानिष्ठाकृतिसुखादीनां बहूना[8]मुक्तत्वात् । न च सत्यादीनां अभेदः प्रमाणाभावात् । अतो न [9]प्राणाद्विष्णोरेवोत्तमत्वं इति प्राप्ते—

न प्राणाधिकाः बहवः । सत्यादीनां [10]सर्वेषां परदेवतात्वात् । न च [11]अभेदोक्त्यभावः १"सत्यं पूर्णं विज्ञानं पूर्णं कृतिः [12]पूर्णा" इति श्रुत्यन्तरे सत्यादीनां सर्वेषामपि पूर्णत्वोक्तेः । पूर्णत्वस्य च भगवल्लक्षणत्वात् ।

---

१ न्यायविवरणे एतदधिकरणे उदाहृता श्रुतिः ।

[1] ब्रह्म—क. [2] विष्णोस्तु—क. [3] प्राणाद्विष्णोरेवोत्तमत्वं—ग. [4] पारदेवतैव—ग. परदैवतैव—ग. [5] "तु"—ग. नास्ति । [6]सत्यदप्युपरि—क. [7] विज्ञानमिति —क. [8] मुक्तमत्वात्—क. [9] विष्णोः प्राणाद्विष्णुरेवोत्तमत्वं—ग. [10] "न सर्वेषां"—क. [11] भेदोक्त्यभावः—क. [12] पूर्णाः श्रुत्यन्ते—क.

१ "[1]नामादिप्राणपर्यन्ताद्यो [2]हि सत्यादिरूपवान् ।
तस्मै [3]नमो भगवते विष्णवे सर्वजिष्णवे ॥"

इति स्मृतेश्च । [4]अतः सत्यादीनां [5]भगवत्स्वरूपत्वेन स एक एव [6]प्राणादुत्तमः न बहव इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**ब्रह्मणा विष्णुस्तु स एव सत्यादिरूपी विष्णुरेव उपास्य इति** ॥ तथाच [7]विष्णुरेक एव [8]प्राणोत्तमो न बहवः इति भावः ॥ २३ ॥

———

[नित्यमुक्ता अपि लक्ष्मीः भक्त्यतिशयेन उपासनां करोतीति निरूपणम् ]

**॥ ओं ॥ कामादितरत्र [9]तत्र च (च) ?**
**आयतनादिभ्यः ॥ ओं ॥ ३-३-२४**

तत्र भगवत्समीपे मूलरूपेण स्थिता श्रीः इतरत्र [10]भूम्यादौ कामात् [11]ईश्वरेच्छानुसारिस्वेच्छयैव अवतारान् करोति । कुतः, आयतनादिभ्यः । अनेन [12]आयतनत्वादिबोधिका श्रुतिः गृह्यते । २ "सर्वायतना सर्वकाला सर्वेच्छा न बद्धा [13]बन्धिका सैषा प्रकृतिरविकृतिः" इति सर्वायतनत्वादि-[14]बोधकश्रुतेः इति सूत्रार्थः ॥

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे वत्सश्रुतित्वेनोदाहृतम् ।

[1] "नामादि" इत्यारभ्य "स्मृतेश्च" इत्यन्तं घ नास्ति ॥ [2] धि—ग. [3] नात्र क. [4] "अतः"—क. नास्ति । [5] भगवत्सरूपत्वेन—क भगवत्स्वरूपत्वे—ग. [6] प्राणाद्युत्तमः—क. [7] विष्णुरेत्र—क. [8] प्राणोत्तम इति भावः—घ. [9] "तत्र"—ग. नास्ति । [10] क्षमादौ—क. [11] ईश्वरानुसारि—क. [12] आयतनादि—क. [13] बन्धका—क. [14] बाधकश्रुतेः—क.

अत्र [1]भवत्येव प्रकृतिः [2]अधिकारिणी संसारित्वे सति साधुत्वात् । न च तस्याः संसारित्वाऽभावः । [3]रुक्मिण्यादिरूपायाः तस्याः जन्मादिदर्शनात् । [4]किञ्च सा कृतार्था न वा ? [5]आद्ये न भगवदुपासनं स्यात् । द्वितीये कथं [6]असंसारित्वं तस्याः । अतः संसारित्वेन [7]प्रकृतेरप्यधिकारोऽस्त्येव । अधिकारित्वे च तस्याः प्राणोत्तमत्वमेव वक्तव्यम् । ततश्च नाधिकारिणां प्राणावसानत्वं इति प्राप्ते -

[8]न प्रकृतिरधिकारिणी [9]अबद्धत्वात् । [10]न च [11]जन्मादेः [12]संसारित्वप्राप्तिः । जन्मादेः अवतारादित्वेन तद्धेतुत्वाऽभावात् । न च जन्माद्येव किन्न स्यादिति वाच्यम् । [13]जननेऽपि मूलरूपेण भगवत्समीपे स्थितत्वात् । नापीन्द्रादिवत् । स्वेच्छयैव जननेन कर्मनिमित्तत्वाभावात् । न च तर्हि स्वातन्त्र्यम् । ईश्वरेच्छानुसारित्वात् । किमत्र मानमिति चेन्न । सर्वायतनत्वा[14]द्यभिधायकश्रुतेरेव ॥ ननु रमायाः असंसारित्वे कृतकृत्यत्वेन भगवदुपासनं न स्यात् [15]इति चेन्न । नित्यमुक्तत्वेन कृतकृत्यत्वेऽपि निरुपाधिक[16]भक्त्यतिशयेन तदुपपत्तेः । [17]तदुक्तं—

१"यथा श्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा ।
उपास्ते नित्यशो [18]विष्णुमेवं भक्तो हरेः भवेत्" ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे बृहत्तन्त्रवाक्यत्वेनोदाहृतम् ॥

[1] न भवत्येव–ग. [2] अधिकारिणं–क. [3] रुग्मिण्यादि—ग.घ. [4] "किञ्च" इत्यारभ्य "प्राणावसानत्वं" इत्यन्तो भागः—घ. नास्ति ॥ [5] आद्ये भगवदुपासनं तत्स्यात्—क. [6] आसंसारित्वं स्याः – क. [7] प्रकृतेः आरोस्त्येव—क. [8] न प्रत्यधिकारिणां—क [9] अबन्धत्वात्—क. [10] न च जननादिना तत्सिद्धिः ! रुग्मिण्यादेः प्रादुर्भूतत्वेन उत्पत्तेरभावादिति सिद्धान्तः कृतः—घ. [11] "जन्मादेः" इत्यारभ्य "सिद्धान्तः कृतः" इत्यन्तं—घ. नास्ति । [12] संसारत्वप्राप्तिः —क. [13] जननोऽपि—क. [14] द्यबिधायक श्रुतेः [15] "इति चेत्"—क.घ. नास्ति । [16] भक्त्यतिशयत्वेन —क. [17] "तदुक्तं" —क घ. नास्ति । [18] विष्णुमेव—क.

इति । अतः प्रकृतेः अधिकारित्वाभावात् [1]युक्तमधिकरणं प्राणावसानत्वमिति सिद्धान्तः कृतः ॥

[2]तस्य तात्पर्यमाह—**विशेषस्तु स्यादिति** ॥ उपासनासद्भावेऽपि नित्यमुक्तायाः [3]प्रकृतेः निरुपाधिकभक्त्य[4]तिशयेन उपासनं, न विधिबद्धत्वेन । इतरेषान्तु विधिबद्धत्वेने[5]ति विशेषः [6]स्यादित्यर्थः ॥ २४ ॥

---

[भगवत्साक्षात्कारार्थं श्रवणमनननिदिध्यासनरूपोपासनाकर्तव्येति समर्थनम् ]

**॥ ओं ॥ तन्निर्धारणार्थनियमः तद्दृष्टेः**

**पृथक् [7]ध्यप्रतिबन्धः फलम् ॥ ओं ॥ ३-३-२५**

[8]तन्निर्धारणं अयमस्यार्थ [9]इति तत्त्वनिश्चयः । तेन [10]सहितोऽर्थनियमः=अयमेव वेदार्थो नान्य इति निर्णयः । एवं श्रवणमननफलरूपं तद्द्वयमपि तद्दृष्टेः=ब्रह्मदर्शनात् पृथक् अपरोक्षज्ञानसाधनं न भवतीति यावत् । अतः ताभ्यां [11]दृष्ट्यसिद्धेः दृष्ट्यर्थं ध्यानं कार्यमिति भावः । तर्हि मुक्तिहेतु[12]दृष्टेः ध्यानादेव सिद्धौ किं ताभ्यामित्यत [13]उक्तं "अप्रतिबन्धः फलमिति" । अज्ञानसंशयमिथ्याज्ञानलक्षणाऽपरोक्षज्ञानप्रतिबन्धकनिवृत्तिः श्रव-

---

[1] मुक्तमधिकरणं—क. [2] तस्य तात्पर्यमाह—ब्रह्मणा त्विति ॥ ब्रह्मणैव विष्णुरूपास्यः । न प्रकृत्येत्यर्थः । तर्हि प्रकृतेः उपासनं सर्वथा नास्ति किमित्यत उक्तं—विशेषस्तु स्यादिति ॥—घ. [3] प्रकृतिनिरूपाधिक—क. [4] तिशयेनैव—क. [5] ति शेषः—ग. [6] स्यादित्यर्थः तदुक्तं—"यथा श्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा ।

उपास्ते नित्यशो विष्णुं एवं भक्तो हरेर्भवेत् ॥ इति ॥ २४ ॥—घ.

[7] ध्यानाप्रतिबन्धः—क. [8] तन्निर्धारणार्थं—क. [9] इति त्वनिश्चयः—क. [10] सहितोऽर्थः तन्निर्धारणार्थः तस्य नियमः—क. [11] दृष्टमसिद्धेः—क. [12] दृष्टे—क. [13] उक्तमं—क.

णमननयोः फलमित्यर्थः । किमत्र [1]मानमित्यत उक्तं—हीति तथा श्रुतेः स्मृतेश्चेति सूत्रार्थः ॥

अत्र व्यस्तमेवोपासनं कार्यं, न समस्तम् । तथाहि [2]उपासनं तावत् भगवद्दर्शनार्थं, [3]तच्च दर्शनं श्रवणमननाभ्यां भविष्यतीति किं ध्यानेन । [4]अथोच्येत । ज्ञानप्रतिबन्धकानां दृढत्वात् [5]ध्यानेनैव प्रतिबन्धकनिवृत्तिरिति । तर्हि [6]ध्यानेनैव दर्शनसम्भवात् अलं श्रवणादिना । न च समुच्चितानां दर्शनहेतुत्वे मानमस्तीति प्राप्ते—

कर्तव्यमेव समस्तोपासनम् । न श्रवणमननमात्रम् । [7]श्रवणादिमात्रेण दर्शनाभावात् । [8]तत्त्वज्ञानं हि श्रवणफलम् । [9]अयमेव वेदार्थो नान्य इति निर्णयस्तु मननफलम् । तदुभयञ्च ब्रह्मदर्शनात् पृथगेव, अतो ध्यानं दर्शनार्थं कर्तव्यमेव । न चैवं श्रवणमननाभावप्रसङ्गः । तयोः साक्षाद्धेतुत्वाभावेऽपि संशयादिनिवृत्तिद्वारा दर्शनोपयोगित्वेन आवश्यकत्वात् । न चात्र [10]प्रमाणाभावः । १दर्शनार्थं श्रोतव्यो मन्तव्यो [11]निदिध्यासितव्य इति विहितत्वात् ।

२"श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शन"मिति स्मृतेश्चेति सिद्धान्तः कृतः ॥

---

१ "प्रमाणाभावः" इत्यनन्तरं "आत्मा वारे द्रष्टव्यः इत्यादिश्रुतेः" इति पाठः भाति ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ॥

[1] वानमित्युक्तम्—क. [2] उपासता भगवद्दर्शनार्थं—ग. [3] तच्च दर्शनं तावत् भगवद्दर्शनेन भविष्यति—क. [4] अथोच्यते—घ. [5] ध्यानेनैव दर्शनमिति—क. [6] ध्यानेनैव ज्ञानमस्तु । न ज्ञानार्थं श्रवणमनने । न च—घ. [7] श्रवणमात्रेण—क. [8] तत्त्वं ज्ञानं हि—क. [9] "अयमेव वेदार्थो नान्य इति निर्णयस्तु मननफलम्" ॥ इदं वाक्यं—क नास्ति ॥ [10] मानाभावः—ग.घ. [11] निदिध्यासितव्यमिति—क.

तस्य तात्पर्यमाह—**सर्वैरपि ज्ञेयो विष्णुरिति** ॥ [1]सर्वैरपि श्रवणमनननिदिध्यासनरूपैः समस्तोपासनैरपि विष्णुः द्रष्टव्यः [2]नान्यतरेण ॥ २५ ॥

---

[गुरूपदेशयुतमेव श्रवणादिकं ज्ञानसाधनमिति साधनम् ]

## ॥ ओं ॥ [3]प्रदानवदेव हि तदुक्तम् ॥ ओं ॥ ३–३–२६

तदित्यावृत्तिः । तत्=श्रवणादिकं प्रदानवदेव=दानमुपदेशः प्रसादपूर्वकगुरूपदेशयुतमेव ज्ञानाख्य[4]फलवत् न श्रवणादिमात्रमित्यर्थः । कुत इत्यत उक्तं—"तदुक्तं" श्रुताविति सूत्रार्थः ॥

[5]अत्र श्रवणादिकमेव ज्ञानसाधनं न गुरुप्रदानपूर्वकम् । १"आत्मा वारे द्रष्टव्यः" इति श्रुतौ श्रवणादीनामेव ज्ञानसाधनत्वाऽभिधानादिति प्राप्ते–

गुरूपदेशयुक्तमेव श्रवणादिकं ज्ञानसाधनम् । २"आचार्यवान् पुरुषो वेद" इति वचनादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु [6]ज्ञाने स्यादिति** ॥ [7]ज्ञाने=ज्ञानसाधने श्रवणादौ गुरुप्रसादपूर्वकप्रदानरूपो विशेषस्तु स्यादित्यर्थः ॥ २६ ॥

---

१ बृहदारण्यकोपनिषत् । (२—५—५)

२ छान्दोग्योपनिषत् । (६—१४—२)

[1] सर्वेऽपि—क. [2] नान्येतरेण क. [3] प्रदानावदेव तदुक्तम्—क
[4] फलवत्, श्रवणादिमात्रमिति शेषः श्रवणादिमात्रमित्यर्थः—क. [5] अत्र न—ग.
[6] ज्ञानी—ग. [7] ज्ञानज्ञानसाधनत्वे—ग. ज्ञानसाधनश्रवणादौ—घ.

[गुरुप्रसादस्य श्रवणाद्यपेक्षया बलीयस्त्वनिरूपणम् ]

**॥ ओं ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ओं ॥ ३-३-२७**

[1]तत्=प्रसादपूर्वक गुरुप्रदानं, बलीयः=श्रवणाद्यपेक्षया बलिष्ठं, कुतः, लिङ्गबाहुल्यात् । ऋषभादिभ्यो ज्ञातविद्यस्यापि सत्यकामस्य गुरुप्रार्थनं गौतमाभ्यनुज्ञानं [2]तथाग्निभ्यः ज्ञातविद्यस्यापि [3]उपकोसलस्य गुरुप्रार्थनं सत्यकामस्य [4]प्रवचनमित्यादिलिङ्ग[5]बाहुल्यात् किं [6]तर्हि श्रवणादिनेत्यत उक्तं— तदपीति । श्रवणादिकमपि [7]कार्यमेवेत्यर्थः । अत्र श्रोतव्य इत्यादि श्रुतिस्मृतिसूचको हिशब्दः इति सूत्रार्थः ॥

अत्र श्रवणादिरूपः शिष्यप्रयत्न एव बलवान् प्रधानत्वात् । न गुरुप्रसादः इति[8]कर्तव्यतारूपत्वादिति प्राप्ते—

गुरुप्रसाद एव बलवान्, लिङ्गभूयस्त्वात् । तथाहि—[9]ऋषभादिभ्यो [10]विद्यां श्रुत्वापि [11]सत्यकामो १ "[12]भगवाँ स्त्वेवमे कामे ब्रूयात्" । २ "आचार्याद्ध्येव विद्या विदिता [13]साधिष्ठं प्रापयतीति" [14]गुरुं [15]प्रार्थयते [16]तथा [17]गुरुणा गोतमेन च ३ "[18]अत्र न किञ्चन वियायेत्यनुज्ञा क्रियते ।

---

१ छान्दोग्योपनिषत् । (४—९—२)
२ छान्दोग्योपनिषत् । (४—९ - ३)
३ छान्दोग्योपनिषत् । (४—९—३)

[1] तत्प्रसादपूर्वकं—क. [2] यथाग्निभ्यः-क. [3] उपकोसलस्यापि-ग. [4] वचनमित्यादि—क. [5] बाहुल्यात्तु—क. [6] ततः—क. [7] कार्यमिवेत्यर्थः – ग. [8] कर्तव्यतात्वात्—ग. [9] वृषभादिभ्यो—घ. [10] विद्या श्रुतवतोऽपि—क. विद्यां श्रुतवतापि ग. [11] सत्यकामेन – क. [12] भगवस्त्वेवमेष ब्रय।दाशरर्थोद्धैव क. [13] सधिष्ठं—क. [14] गुरुः—क [15]प्रार्थ्यते – क. [16] तथा उपकोसलोऽपि अग्न्यादिभ्यो विद्यां श्रुत्वापि गुरुं प्रार्थयते । न च गुरुप्रसादस्य प्राबल्याभावे तद्युज्यते–घ. [17] "गुरुणा" इत्यतः "बलवान्" इत्यन्तो भागः—घ नास्ति ॥ [18] "अत्र"—ग. नास्ति ।

तथोपकोसलेनाग्न्यादिभ्यः [1]श्रुतविद्येनापि गुरुः प्रार्थ्यते । गुरुणा च सत्यकामेन तं प्रति विद्योच्यते । [2]श्रवणादेरपि प्राबल्येन शिष्येण गुरुः प्रार्थ्यते । गुरुणापि [3]उच्यते । एवं लिङ्गबाहुल्यात् गुरुप्रसाद एव बलवान् । न चेति[4]कर्तव्यतात्वाद्दौर्बल्यं, यागीयहिंसायां इतिकर्तव्यताया एव प्राबल्यदर्शनात् । न च तर्हि श्रवणादिवैयर्थ्यम् । १ "[5]श्रोतव्यो मन्तव्य" इति श्रुतेः। २ "गुरुप्रसादो बलवान् न तस्मा[6]द्बलवत्तरम् । तथापि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये" ॥ इत्यादि[7]स्मृतेश्चेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह —**विशेषस्तु ज्ञाने स्यादिति** ॥ ज्ञाने जननीये श्रवणादिशिष्यप्रयत्नापेक्षया [8]प्रसादपूर्वकगुरुप्रदानस्य प्राबल्यरूपो विशेषस्तु स्यादित्यर्थः ॥ २७ ॥

---

[गुर्वन्तरस्वीकारविचारः]

**॥ ओं ॥ पूर्वविकल्पः [9]प्रकरणात् स्यात्**

**क्रियामानसवत् ॥ ओं ॥ ३-३-२८**

[10]स्यात्=पश्चात्तनोऽपि गुरुः स्वीकार्यः स्यात्, कुतः, प्रकरणात्=प्रकृष्टानुग्रहकरणात् । उक्तस्यापवादमाह—"पूर्वविकल्प" इति पश्चात्तनः

१ बृहदारण्यकोपनिषत् । (४—४—५)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे वराहपुराणवाक्यत्वेनोदाहृतम् ।

[1] श्रुतिविद्येनापि—क. [2] श्रवणादेरेव—ग. [3] नोच्यते—क. उच्येत—ग. [4] कर्तव्यत्वात्—क. [5] "श्रोतव्य" इत्यतः "इति श्रुतेः" इत्यन्तो भागः—घ. नास्ति ॥ [6] द्बलवत्तरः—ग. [7] वचनादिति—घ. [8] प्रसादपूर्वकगुरुप्रसादस्य—क. गुरुप्रसादस्य—घ. प्रसादपूर्वकं गुरुप्रदानस्य—ग. [9] करणात्—क. [10] स्यात्तु—क.

पूर्वेण समश्चेद्विकल्पः स्यात् । न तूत्तमवत् स्वीकारनियमः । तत्र दृष्टान्तः“क्रियामानसवदिति” परनिपातः मानसक्रियावत् [1]यथा फलतः समानयोर्ध्यानयोः विकल्पः तथेति सूत्रार्थः ।

अत्र [2]प्रथमप्राप्त एव गुरुः स्वीकार्यो न [3]तु तत्परित्यागेनान्यः स्वीकार्यः ।

१“गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत् ॥” इत्युक्तेः इति प्राप्ते—

न पूर्वप्राप्त एव गुरुरिति नियमः । [4]पश्चात्तनोऽपि [5]पूर्वस्मादुत्तमो गुरुः समग्रानुग्रहं करोति चेत् [6]पूर्वस्यानुज्ञां विना स्वीकार्यः । अन्यथा न स्वीकार्यः । अधमो न स्वीकार्य एव । समग्रानुग्रहकर्ता पूर्वेण [7]समश्चेत् पूर्वानुज्ञया स्वीकार्यः नो चेत् न स्वीकार्यः इति विकल्पः स्यात् ।

२“पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि ।
गृह्णीयादविचारेण विकल्पः [8]समयोर्भवेत् ॥”

इति [9]स्मृतेरिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं इति** ॥ यदि प्रथमप्राप्तगुर्वपेक्षया पश्चात्प्राप्तस्य उत्तमत्वादिरूपो विशेषः स्यात्तर्हि ज्ञाने

---

१ ब्रह्मसूत्रभाष्यव्याख्यायां तत्त्वप्रकाशिकायां एतदधिकरणे स्मृतित्वेनोदाहृतम् ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे बृहत्तन्त्रवाक्यत्वेनोदाहृतम् ॥

[1] तथा—क. [2] प्रमाणप्राप्त—क. [3] “तु”— क. ग. नास्ति ॥ [4] पश्चात्तनोऽपि उत्तमश्चेत् स्वीकार्य एव । पूर्व स्मादुत्तमो लब्धः—घ. [5] “पूर्वस्मादुत्तमो गुरुः” इत्यारभ्य “विकल्पः स्यात्” इत्यन्तो भागः—घ. नास्ति ॥ [6] पूर्वानुज्ञां—ग. [7] समश्चेत् स्वीकार्या पूर्वानुज्ञया नो चेत्—क [8] समयो—क. [9] स्मृतेश्चेति—ग.

तादर्थ्ये सप्तमी, [1]ज्ञानार्थं उत्तरोत्तरं पश्चात्प्राप्तं गुर्वाख्यं वस्तु [2]स्वीकार्यं स्यादित्यर्थः ॥ २८ ॥

---

[ब्रह्मापरोक्षज्ञानमेव मोक्षसाधनमिति प्रतिपादनम् ]

## ॥ ओं ॥ विद्यैव तु निर्धारणात् ॥ ओं ॥ ३-३-२९

विद्यैव मुक्तिसाधनं, न कर्म, कुतः, [3]निर्धारणात् । १''नान्यः पन्था'' इति अन्यनिरासेन ज्ञानस्यैव मुक्तिहेतुत्वनिर्धारणादित्यर्थः । तु शब्दः कर्मवचनान्नान्यः पन्थेइत्यस्य प्राबल्यसूचक इति सूत्रार्थः ॥

अत्र न भगवदुपासनं कार्यं व्यर्थत्वात् । न च मोक्षसाधन[4]ज्ञानार्थं तदिति वाच्यम् । ज्ञानस्य मोक्षसाधनत्वनिश्चयात् । तथाहि । २''तमेवमि''त्यादिना ज्ञानस्य मोक्षसाधनत्वं श्रूयते । तथा [5]कर्मणोऽपि । ३''कर्मणैव [6]हि संसिद्धिमित्यादिना मोक्षसाधनत्वं स्मर्यते । अतो नोपासनं ज्ञानार्थं कार्यं इति प्राप्ते—

कार्यमेव [7]ज्ञानायोपासनं, ''[8]नान्यः पन्था'' इति सावधारणविद्यावचनस्य कर्मवचनादपि प्राबल्येन विद्ययैव मोक्ष इत्यवधारणसम्भवात् । अतो ज्ञानोपासनं कार्यमिति सिद्धान्तः कृतः ॥

---

१ चित्युपनिषत् ॥

२ "तमेवं विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय" श्वेताश्वतरोपनिषत् ॥ (३—८)

३ भगवद्गीता । (३—२०)

[1] ज्ञानार्थः—क. [2] स्वीकार्यः—ग. [3] निर्धारणात्तु—क. [4]ज्ञानार्थः—क. [5] कर्मण्यपि—क. [6] हीत्यादिना—ग. घ. [7] ज्ञानायोपासनं तमेवमिति श्रुतेः । कर्मवचनादपि—घ. [8] ''नान्यः पन्था'' इत्यारभ्य "वचनस्य" इत्यन्तं—घ. नास्ति ॥

तस्य तात्पर्यमाह--**विशेषस्तु ज्ञाने स्यादिति** ॥ [1]ज्ञाने तु= अपरोक्षज्ञाने सत्येव विशेषः स्यात् । न कर्मणेत्यर्थः ॥ २९ ॥

---

[ज्ञानमेव मोक्षसाधनं न कर्मेति निरूपणम्]

**॥ ओं ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ओं ॥ ३-३-३०**

विद्यावचनस्य कर्मवचनेन [2]न बाधः । कुतः श्रुत्यादिबलीयस्त्वात् । बलवच्छ्रुतिलिङ्गादिभ्यो विद्यायाः एव मोक्षसाधनत्वावगमात् इति सूत्रार्थः ॥

अत्र [3]कर्मसाध्य एव मोक्षः, "कर्मणैव ही"ति वचनात् । न च वाच्यं विद्यावचनस्य सावधारणत्वेन प्राबल्यात्तद्विरोधः स्मृतेरिति । स्मृतेरपि सावधारणत्वात् । न चैतावता [4]तयोः साम्यम् । भगवद्वाक्यत्वेन स्मृतेरेव प्राबल्यादिति प्राप्ते—

ज्ञानसाध्य एव मोक्षः । न चैवं प्रमाणान्तरबाधः । निरवकाशावधारण[5]युक्त१"तमेवमि"ति श्रुतेः । २"[6]इन्द्रोऽश्वमेधांच्छतमिष्ट्वापि राजा ब्रह्माणमीड्य [7]समुवाचोपसन्नः । न कर्मभिः न धनैः नैव चान्यैः [8]पश्येत् सुखं तेन तत्त्वं ब्रवीहि ।" इति बहुकर्मकृतोपीन्द्रस्य [9]निरवकाशतत्त्वज्ञानप्रार्थनलिङ्गात् । ३"नास्त्यकृतः कृतेने"ति अनित्येन कर्मणा [10]नित्यपुरुषार्थो न भवतीति निरवकाशो[11]पपत्तेश्च ।

---

१ श्वेताश्वतरोपनिषत् । (३—८)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः

३ मुण्डकोपनिषत् । (१—२—१२)

1 "ज्ञाने तु"—ग.घ. नास्ति । 2 "न"—क. नास्ति ॥ 3 कर्म साध एव—क. 4 तयोः—ग.घ. नास्ति । 5 युक्तमेवमिति—क. 6 इन्द्रोश्च मेधां वाञ्छति—क. 7 समुवाच प्रसन्नः—क. 8 पश्ये—घ. 9 निरवकाशतां त्वज्ञान—क. 10 नित्यपुमर्थो—ग. 11 पपत्तेः—क.

१ "कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते ।
तस्मात् कर्म न [1]कुर्वन्ति यतयः पारदर्शिनः ॥"

इति [2]युक्तिमद्भगवद्वचनाच्च । यत एवं मोक्षस्य ज्ञानसाध्यत्वे प्रत्येकं प्रबल [3]श्रुत्यादिभावः अतो [4]विद्यैव मोक्षसाधनम् । नचैवं [5]तर्हि [6]स्मृत्यप्रामाण्यप्राप्तिरिति वाच्यम् । अवधारणस्य [7]कर्मायोग[8]व्यवच्छेदार्थत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—विशेषस्तु ज्ञाने स्यादिति ॥ विषयसप्तमी । यतो [9]ज्ञाने ज्ञानविषय एव, ज्ञानस्य मोक्षसाधनत्वविषय एवेति यावत् । प्रत्येकं [10]बलवच्छ्रुत्यादिसद्भावरूपो विशेषः स्यात् न [11]कर्मविषये [12]अतो विद्यैव मोक्षसाधनमित्यर्थः ॥ ३० ॥

———

[न केवलं श्रवणादेः भगवद्दर्शनं किन्तु हरिगुरुभक्तिशमदमादिभ्यश्चेति प्रतिपादनम् ]

## ॥ ओं ॥ अनुबन्धादिभ्यः ॥ ओं ॥ ३-३-३१

अनुबन्धो भक्तिः । शमादिरादिपदार्थः । न केवलं श्रवणादिना गुरुप्रसादेन च अपरोक्षज्ञानं किन्तु [13]भक्त्यादिभिश्च। कुत : तथा स्मृतेरिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भगवद्वचनत्वेनोदाहृतम् ।

[1] कुर्वीत इति— क. [2] सयुक्तिकैव—क. [3] श्रुत्यादिबाधः—क. [4] विद्ययैव—ग. [5] "तर्हि"—ग.घ. नास्ति । [6] स्मृत्यप्राप्तिरिति—क. स्मृत्यप्रामाण्यमिति—क. [7] कर्मयोग—ग. [8] व्यवच्छेदादिति—क. [9] ज्ञानं—क [10] बलवच्छ्रुत्यादिरूपो—क. प्रबलश्रुत्यादिसद्भावरूपो—ग.घ. [11] कर्मविषय एव—क. [12] अतो मोक्षस्य विद्यैव साधनम् । तस्मात् विद्यैव—क. [13] भक्त्यादिभ्यश्च —क.

अत्र [1]न भक्त्यादिकं [2]ज्ञानार्थमपेक्षितं गुरु[3]प्रसादासाध्यस्यैवाभावात् ।

१"[4]सम्यग्लक्षणसम्पन्नो यद्द्यात् सुप्रसन्नधीः ।
शिष्याय सत्यं भवति तत्सर्वं नात्र संशयः ॥"

इति वचनादिति प्राप्ते—

न केवलं [5]श्रवणादेः [6]गुरुप्रसादाच्च भगवद्दर्शनं किन्तु [7]हरिगुरुभक्तिशमादेरपि, किमत्र मानमिति चेत न ।

२"भक्तिर्विष्णौ [8]गुरौ चैव [9]गुरोर्नित्यप्रसन्नताम् ।
[10]दद्याच्छ[11]मदमादींश्च तेन चैते गुणाः पुनः ॥
तैस्सर्वैः दर्शनं [12]विष्णोः [13]श्रवणादिकृतं भवेत् ॥"

इति वचनादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादिति** ॥ न केवलं ज्ञानार्थं गुरुप्रसादादिरपेक्षितः किन्तु हरिभक्त्यादिरूपविशेषोऽप्यपेक्षितः स्यादित्यर्थः ॥ ३१ ॥

---

१ महाभारततात्पर्यनिर्णयोदाहृतपञ्चरात्रवचनम् । (१—१२४)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे नारायणतन्त्रवाक्यत्वेनोदाहृतम् ॥

[1] "न"—क. नास्ति ॥ [2] ०र्थमपेक्षितम् क [3] प्रसादसाध्यस्यैव—क.ग. [4] सम्यङ्लक्षण—क. [5] अश्रवणादेः—क. "श्रवणादेः"—घ. नास्ति । [6] गुरुप्रसादेन—घ. [7] हरिगुरुशमादेरपि—क हरिभक्त्यादिनापि—घ. [8] हरौ—क. [9] नि गुरोः—क [10] तद्वत्—ग. [11] मदमादिश्चे तेन क. [12] विष्णोः इति वचनादिति—घ. [13] श्रवणादिकृतो—क. "श्रवणा" "भवेदिति"—घ. नास्ति ॥

[उपासनाभेदेन भगवद्दर्शनभेदः इति समर्थनम् ]

## ॥ ओं ॥ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॥ ओं ॥ ३-३-३२

प्रज्ञान्तरं प्रज्ञाविशेषः अविच्छिन्न[1]परोक्षज्ञानसन्तान[2]रूप ध्यानं तस्य पृथक्त्ववत् नाना[3]विधत्ववत् दृष्टिश्च नानाविधेत्यर्थः । कुत इत्यत उक्त — तदुक्तमिति । तत्तु अपरोक्षज्ञाने [4]तारतम्यं १श्रुत्यादौ उक्तमिति सूत्रार्थः ॥

अत्र एक[5]प्रकारमेव भगवद्द[6]र्शनम् । २"दृष्ट्वैव तं मुच्यते नापरेणेति" [7]सर्वेषामविशेषितज्ञानेन मोक्षश्रवणादिति प्राप्ते—

अनेकप्रकारमेवाधिकारिणां भगवद्दर्शनं तत्साधनोपासनस्य अनेक प्रकारत्वात् । फलस्य साधनानुसारित्वात् । [8]न चात्र प्रमाणाभावः । ३"अन्तर्दृष्टयो बहिर्दृष्टय" इति श्रुतेः ।

४"[9]दृष्ट्यैव ह्यवताराणां मुच्यन्ते [10]केचिदञ्जसा ।
दर्शनेनान्तरेणा[11]न्ये देवा सर्वत्र दर्शनात् ॥"

इति स्मृतेश्च । न च [12]दृष्ट्वैवेति श्रुतिविरोधः । यथायोग्यं [13]दृष्ट्वेत्यर्थोपपत्तेः इति सिद्धान्तः कृतः ॥

---

१ श्रुत्यादौ=भाष्योक्तकमठश्रुत्यादौ, अध्यात्मस्मृतौ चेत्यर्थः ॥

२ "अतोऽनन्तेन तथाहि लिङ्गं" (३—१—१४) इति सूत्रव्याख्यानावसरे भाष्यदीपिकाकारैः उदाहृता श्रुतिः ॥

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कमठश्रुतित्वेनोदाहृतम् ॥

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे अध्यात्मस्मृतित्वेनोदाहृतम् ॥

[1] परम्पराज्ञान—क. [2] रूपध्यानं—ग. [3] विधत्वं तु—क. [4] तारतम्य-श्रुत्यादौ – क तारतम्यं उक्तं—ग. [5] प्रकार एव—ग. [6] र्शनम् । तत्साधनोपायस्य-क [7] सर्वेषामवशेषित—ग. [8] "न चात्र" इत्यारभ्य "स्मृतेश्च" इत्यन्तं—घ. नास्ति ॥ [9] दृष्ट्वैव—क. [10] किञ्चिदञ्जसा—क. [11] न्यैः—क. [12] दृष्टेति—क. दृष्ट्वेति—घ. [13] दृष्ट्वेत्येथोपपत्तेः—क.

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादुत्तरोत्तरमिति** ॥ मनुष्योत्तममारभ्य ब्रह्मपर्यन्तं [1]ज्ञाने अपरोक्षज्ञाने, अन्तर्दृष्टित्वबहिर्दृष्टित्वादिरूपो विशेषः स्यादित्यर्थः ॥ ३२ ॥

———

[स्वबिम्बभूतभगवद्दर्शनेनैव मुक्तिः इति प्रतिपादनम्]

**॥ ओं ॥ [2]न सामान्यादप्युपलब्धेः मृत्युवन्न हि [3]लोकापत्तिः ॥ ओं ॥　३-३-३३**

सामान्यादुपलब्धेरपि सामान्यतो [4]यत्किञ्चिद्रूपदर्शनादपि [5]मुक्तिः न भवति, किन्तु स्वयोग्यदर्शनादेव । तत्र दृष्टान्तः—मृत्युवदिति । यथा मरण[6]सामान्यन्यायान्न मुक्तिः किन्तु मरणविशेषात्तथेति । यदि न सामान्यदर्शनेन [7]मुक्तिस्तर्हि तस्य वैफल्यं स्यात् । न च तद्युक्तं अतः तस्य [8]यत्फलं सैव मुक्तिरित्यत उक्तं—न हि [9]लोकापत्तिरिति । भगवद्रूपदर्शनफलभूतमहरादिलोकप्राप्तिः मुक्तिः न हि भवतीत्यर्थः । महरादेः ज्ञानिप्राप्यत्वं तु १"ईयुः त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान् ।" इति वचनसिद्धमिति सूत्रार्थः ॥

अत्र यत्किञ्चिद्रूपदर्शनमेव मोक्षसाधनं न बिम्बदर्शनमिति नियमः । भगवतः सर्वरूपेष्वपि साम्यात् । अतो न बिम्बो[10]पासननियतिः इति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्यव्याख्यायां भाष्यदीपिकायां जिज्ञासाधिकरणे उदाहृता श्रुतिः ॥

[1] अज्ञान परोक्षज्ञाने—क. अपेराक्षज्ञाने—घ. [2] "न"—ग. नास्ति [3] लोकपतिः—क. [4] यत्किञ्चिद्दर्शनादपि—क. [5] मुक्तिः भवति–ग. [6] सामान्यसुन्येन–क. [7] युक्तिः—क. [8] तत्फलं–क. [9] लोकपतिरिति—क. [10] पासनानियतिः—क.

न भगवद्रूपाणां साम्येन यत्किञ्चिद्रूपदर्शनेन मुक्तिः. किन्नाम स्वबिम्बदर्शनादेव । १"समोऽपि भगवान् बिम्बदर्शन एवैनं मोचयती"ति श्रुतेः ।

२"दर्शनेनात्मयोग्येन मुक्ति[1]र्नान्येन केनचित् ।"

इति वचनाच्चेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादिति** ॥ ज्ञाने=मोक्षसाधनापरोक्षज्ञाने बिम्बविषयकत्वरूपविशेषः [2]स्यादेवेत्यर्थः ॥ ३३ ॥

---

[भक्त्या प्रसन्नपरमात्मनैवापरोक्षज्ञानं इति निरूपणम् ]

**॥ ओं ॥ परेण च शब्दस्य ताद्विध्यं**

**भूयस्त्वात्त्वनुबन्धः ॥ ओं ॥ ३-३-३४**

परेण च परमात्मनैवापरोक्षज्ञानं, न भक्त्या, कुतः ३"एतैरुपायैरि"ति श्रुतेः । तर्हि ४"भक्तिरेवैनमि"ति श्रुतिविरोध इत्यत उक्तं—शब्दस्य ताद्विध्यमिति । यतः शब्दस्य भक्तिश्रुतेः ताद्विध्यं [3]भक्तिस्थहरिप्रतिपादकत्वं अतो न विरोधः [4]इत्यर्थः । सत्स्वन्येषु [5]साधनेषु भक्तेः विशिष्योक्तिः कुतः इत्यत उक्तं—भूयस्त्वात्त्वनुबन्ध इति । भूयस्त्वात् साधनेषु प्रधानत्वात्, अनुबन्धो भक्तिः श्रुतौ उक्त इति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्याव्याख्यायां भाष्यदीपिकायां एतदधिकरणे उदाहृता श्रुतिः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे अध्यात्मस्मृतत्वेनोदाहृतम् ।

३ मुण्डकोपनिषत् । (३—२—३)

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे माठरश्रुतित्वेनोदाहृतम् ।

[1] नान्येति—घ. [2] स्यादेवेत्यर्थः—घ. [3] भक्तिः तया—क. [4] "इत्यर्थः"—क. नास्ति ॥ [5] "साधनेषु"—ग. नास्ति

अत्र भक्त्यैव दर्शनं न प्रसादेन १"भक्तिरेवैनं दर्शयती"ति श्रुतेः । ततश्च पुरुषस्य साधनसामर्थ्येनैव दर्शनसम्भवात् [1]न तस्याव्यक्तत्वमिति प्राप्ते—

भक्त्या [2]प्रसन्नपरमात्मनैवापरोक्षज्ञानं २"एतैरुपायैः यतते यस्तु विद्वान् तस्यैष आत्मा [3]विशते ब्रह्मधाम" इति श्रुतेः । न च भक्तिश्रुति-विरोधः । [4]तस्याः साधनेषु [5]प्राधान्याभिप्रायेण [6]प्रवृत्तत्वात् । अतो दर्शनादेः [7]पुरुषप्रयत्नसाध्यत्वा[8]भावाद्युक्तमव्यक्तत्वं ब्रह्मणः इति सिद्धान्तःकृतः॥

तस्य तात्पर्यमाह—[9]**विशेषस्तु ज्ञाने स्यादिति** ॥ प्रवचनाद्युपायैः प्रसन्नो विष्णुरेव [10]ज्ञाने दर्शनार्थं स्यात् । तर्हि भक्तिश्रुतिः कथमुपपद्यत इत्यत उक्तं—विशेषस्तु स्यादिति । भक्तेः साधनेषु प्रधानत्वरूपो [11]विशेषस्तु स्यात् । न च करणे [12]कर्तृत्वव्यपदेशः [13]कुत्रापि न दृष्ट इति वाच्यम् । हन्त [14]रामशर इति करणेऽपि [15]कर्तृत्वव्यपदेशदर्शनादिति ॥ ३४ ॥

---

[उपासना तत्तज्जीवयोग्यतानुसारिणीति साधनम्]

**॥ ओं ॥ एक आत्मनः शरीरे भावात् ॥ ओं ॥ ३-३-३५**

अंशः अंशीत्येक एव, कुतः आत्मनः अंशिनः सम्बन्धिनि [16]शरीरे

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे माठरश्रुतित्वेनोदाहृतम् ।

२ मुण्डकोपनिषत् । (३—२—३)

[1] "न"—क. नास्ति । [2] प्रसन्ने—घ. [3] "विशते"—क. नास्ति । [4] तस्य—ग. [5] प्राधाभिप्रायेग—क. [6] अप्रवृत्तत्वात्—क. [7] पुरुषयत्न—क [8] भावाद्युक्तत्वं—क. [9] ज्ञाने विष्णुस्तु ज्ञानी स्यादिति—क. विष्णुस्तु ज्ञाने स्यादिति—ग. [10] ज्ञानदर्शनार्थं—क. [11] विशेष·—ग. [12] कर्तव्योपदेशो—क. कर्तृव्यपदेशो—ग [13] "कुत्रापि"—ग.घ. नास्ति । [14] रामशरा—क. [15] कर्तव्यपदे—क. कर्तृव्यपदेशः—घ [16] शरे—क.

अंशिकर्म[1]निर्मितशरीरे अंशस्य भावात् [2]सत्त्वात् अतो जीवस्यानादित्वात् तद्योग्यतायाः अनादित्वमिति सूत्रार्थः ॥

अत्र [3]नोपासनानादियोग्यतासापेक्षा । [4]इन्द्राद्यंशिगतसुखाद्यनुसन्धानाभावेन इन्द्रादिभ्यो भिन्नानां इन्द्राद्यंशानां अर्जुनादीनां उत्पत्तिमत्त्वेन तद्योग्यतायाः [5]अनादित्वाभावादिति प्राप्ते—

अस्त्येव सर्वेषामुपासनादौ अनादियोग्यतापेक्षा । न चार्जुनादीनां [6]उत्पत्तिमत्त्वेन तद्योग्यतायाः अनादित्वाभावादिति वाच्यम् । [7]तेषामंशय-भिन्नत्वेन तद्योग्यताया एव [8]तद्योग्यतात्वात् । [9]न च अंशस्य अंशिगत-सुखाद्यनुसन्धानाभावेन अंशयभेद एव [10]असिद्ध इति वाच्यम् । ईश्वरा-चिन्त्यशक्त्या [11]अंशेनांशिगतस्य सर्वस्यानुसन्धीयमानत्वाभावेऽपि अंशगत-ज्ञानादेः अंशिनानुसन्धीयमानत्वेन तयोरभेदस्यैव सिद्धत्वात् । तदुक्तम् ।

१ "अंशिनस्तु [12]पृथग्जाताः अंशास्तस्यैव कर्मणा ।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा ॥"

इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **विशेषस्तु ज्ञाने स्यादिति** ॥ ज्ञाने ज्ञान-साधनोपासने विशेषः अनादियोग्यतासापेक्षत्वरूपः स्यादित्यर्थः ॥ ३५ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे परमसंहितावाक्यत्वेनोदाहृतम् ॥

[1] निमित्तशरीरे—ग. [2] "सत्वात्"—क घ नास्ति । [3] नोपासनादि—क [4] "इन्द्राद्यंशि" इत्यारभ्य "भावेन" इत्यन्तं—घ. नास्ति । [5] अनादित्वप्राप्ते—क. [6] उत्पत्तिमत्वेन अनादियोग्यताभावः इति वाच्यम्—घ. [7] तेषामंस्यभिन्नत्वेन—ग. [8] तद्योग्यतात्वात् इति सिद्धान्तः कृतः—घ. [9] "न च अंशस्य" इत्यारभ्य "कार्या विचारणा" इत्यन्तं—घ. नास्ति । [10] सिद्ध इति—क. [11] अंशेनांशगतस्य—ग. [12] पृथग्जाता अंशा —क.

[अङ्गदेवतोपासनं अप्रधानत्वेन कार्यमिति निरूपणम्]

**॥ ओं ॥ अङ्गावबद्धास्तु न शाखासु**
**[1]हि प्रतिवेदम् ॥ ओं ॥ ३-३-३६**

अङ्गावबद्धाः भगवदङ्गाश्रिताः ब्रह्मादिदेवताः उपास्या एव। कुतः, वेदेषु तदुक्तेः फलान्त[2]रभावात्। तदुपासने तुशब्द[3]सूचितविशेषोऽस्ति। प्रतिवेदं सर्ववेदानां सर्वशाखासु ब्रह्माद्यङ्गदेवता[4]सम्बन्धित्वेनोक्ताः गुणाः नाधमेषूपसंहर्तव्याः। तेषां तद्गुणयुक्तत्वाभावात्। अधमगुणानामुत्तमेषु उपसंहारे न कश्चिद्विरोधः। तेषां [5]तद्गुणित्वात्। कुत इत्यत उक्तं—हीति। तथा श्रुत्यादिसिद्धत्वादिति सूत्रार्थः॥

अत्र केवलमेव ब्रह्मोपासनं कार्यम्। न भगवदङ्गाश्रित[6]ब्रह्मादिदेवतोपासनम्। १"तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ" इति श्रुतेः। २"[7]पूजयेन्नान्यदेवता" इति स्मृतेश्च इति प्राप्ते—

कार्यमेवाङ्गदेवतोपासनम्। न च श्रुत्यादिविरोधः। प्राधान्येन तदुपासनस्य निषिद्धत्वात् इति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह—**सुरेश्वरैः [8]सहैव उपास्यो विष्णुरिति**॥ [9]स्वाङ्गाश्रितैरितरैरिति शेषः। तथाच देवानां भगवदङ्गाश्रितत्वेनैव उपासनं कार्यं न [10]प्राधान्येनेति भावः॥ ३६॥

---

१ मुण्डकोपनिषत्। (२—२—५)

२ अभिनवचन्द्रिकायां एतदधिकरणे उदाहृता स्मृतिः॥

"हि"—घ. नास्ति॥ [2] राभावात्—ग. [3] सूचितं—क. [4] विषयत्वेनोक्ताः—क. [5] तद्गुणत्वात्—ग. [6] भगवद्ब्रह्माद्युपासनं—क. ब्रह्मोपासनं—ग. [7] पूजयेन्नान्यदैवतमिति श्रुतेश्च—क. पूजयेन्नान्यदैवताः इति स्मृतेश्च—ग. [8] सहैव यो विष्णु—क. [9] स्वाङ्गाश्रितैरिति—क. [10] प्राधान्येनेति शेषः भावः—क.

[भगवान् पूर्णत्वरूपगुणेनोपास्य इति समर्थनम् ]

**॥ ओं ॥ भूम्नः [1]क्रतुवज्ज्यायस्त्वं तथाच दर्शयति ॥ ओं ॥ ३-३-३७**

भूम्नः=भूमगुणस्य, [2]ज्यायस्त्वं=सर्वगुणेषु प्राधान्यं. तत्र दृष्टान्तः दीक्षाद्यात्मकक्रतुवदिति । कुत इत्यत उक्तं—तथाच दर्शयतीति । च शब्दो [3]हेतौ यतः [4]भूमैवेति श्रुतिः तथा दर्शयतीति सूत्रार्थः ॥

अत्र भूमगुणः न सर्वोपास्यः वैय्यर्थ्यात् । आनन्दादिकं हि सर्वेष्टं न पूर्णत्वरूपं भूमत्वं येन तदुपासनं सार्थकं स्यात् । न चानन्द-[5]विशेषणत्वात्तदुपास्यत्वं, प्रियशिरस्त्वादौ व्यभिचारादिति प्राप्ते—

[6]सर्वैरुपास्यो भूमगुणः । सर्वगुणेषु तस्य ज्यायस्त्वात् । यथा खलु दीक्षा[7]प्रायणीयोदयनीयाद्यात्मकस्य क्रतोः [8]सर्वयागेष्वनुवर्तन एव साफल्यात् ज्यायस्त्वम् । तथा भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनोपासन एव इष्टफल[9]सिद्धेः ज्यायस्त्वम् । तदुक्तम् ।

१"भूमैव देवः परमो ह्युपास्यो
नैवाभूमा फलमेषां विधत्ते ।
तस्माद्भूमा गुणतो वै विशिष्टो
यथा क्रतुः कर्ममध्ये विशिष्टः ॥"

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ॥

[1] ज्जायस्त्वं—क. [2] जायस्त्वं—क. [3] "हेतौ"—ग घ. नास्ति । [4] भूमेरिति—क. [5] विशेषणत्वे पाश्यत्वं—क. विशेषणत्वात्तदुपास्यत्वं—ग. [6] सर्वोपास्यो—ग. [7] प्रायणीयादय—क [8] सर्वयागानुवर्तनादेवं -क. सर्वयागेष्वनु एव इष्टफलसिद्धेः ज्यायस्त्वम् । तथा भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनोपासन एवेष्टफलसिद्धेः ज्यायस्त्वम्—ग. [9] सिद्धे—क

इति । [1]न च प्रियशिरस्त्वादौ व्यभिचारः । भूमैव देव इति श्रुतिविहितत्वात् । अतः सर्वैः आनन्दाद्याः [2]पूर्णत्वेनैवोपास्याः इति [3]सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**सर्वैरुपास्य इति** ॥ भूमगुण इति शेषः । कुत इत्यत उक्तं—**विशेषस्तु स्यादिति** । यत इति शेषः । सर्वगुणेषु भूमगुणस्य ज्यायस्त्वरूपो विशेषः स्यादित्यर्थः ॥ ३७ ॥

———

[भूमत्वं तत्तद्योग्यतानुसारेण नानाप्रकारेण प्रतीयते इति निरूपणम्]

**॥ ओं ॥ [4]नानाशब्दादिभेदात् ॥ ओं ॥ ३–३–३८**

भूमत्वमुपासनेऽधिकारिणो नानाप्रकारेण प्रतीयते । कुतः शब्दादिभेदात् । शब्दादिप्रमाणानां अधिकारिणां योग्यताभेदेनानेकधा अर्थप्रत्यायकत्वात् इति सूत्रार्थः ॥

अत्र सर्वेषां पूर्णत्वं एकप्रकारेणैव प्रतीयते । भूमत्वे विशेषकल्पनायोगात् । विशेषाभावेऽपि तारतम्येन प्रतीत्यङ्गीकारे मिथ्योपासनाप्रसङ्गात् इति प्राप्ते—

[5]भूमत्वमु[6]पासनेऽधिकारिणां नानाप्रकारेणैव प्रतीयते । न चात्र प्रमाणाभावः ।

---

[1] "न च प्रियशिरस्त्वादौ" इत्यारभ्य "विहितत्वात्" इत्यन्तं—घ. नास्ति ॥ [2] पूर्णगुणत्वेनोपास्याः—क. पूर्णगुणत्वेनैवोपास्याः—ग. [3] "सिद्धान्तः कृतः" इत्यारभ्य "विशेषस्तु स्यादिति" इत्यन्तं—ग. नास्ति ॥ [4] नानाशब्दादिविशेषात् नानाशब्दादिभेदात्—क. [5] भूमत्वं—घ. [6] "पासनेऽधिकारिणां"—घ. नास्ति ।

१ "शब्दोनुमा तथैवाक्षो योग्यताभेदतः सदा ।
ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥
अतः [1]पूर्णत्वमीशस्य नानैवेषां [2]प्रदृश्यते ॥"

इति स्मृतेरेव प्रमाणत्वात् ॥ न च भूमत्वे विशेषानुपपत्तिः । अतीत-वत्सरवासराणां [3]आनन्त्ये तारतम्यवत् भूमत्वे तारतम्योपपत्तिरिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं इति** ॥ अधिकारिणां उत्तरोत्तरं ज्ञाने भूमत्व[4]प्रतीतौ विशेषः तारतम्यं स्यात् इत्यर्थः ॥ ३८ ॥

———

[स्वबिम्बरूपोपासनानन्तरं अन्यरूपोपासनापि दुरितनिवृत्यर्थं कार्येति समर्थनम् ]

॥ ओं ॥ [5]**विकल्पो विशिष्टफलत्वात्** ॥ ओं ॥ ३-३-३९

स्वयोग्योपासनानन्तरं नृसिंहाद्युपासनस्य विकल्पः कर्तव्यत्वं न वेति । न तु कार्यमेवेति [6]नियमः । कुतः विशिष्ट[7]फलत्वात् । दुरितनिवृत्ति-रूपफलविशेषहेतुत्वात् यस्य तदपेक्षा जायते तेन कार्यं अन्येन न कार्यमिति सूत्रार्थः ॥

[8]अत्र नाधिकारिणा नृसिंहाद्युपासनं कार्यम् । [9]बिम्बोपासनस्यैव

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ।

[1] पूर्वत्वमीशस्य—क. [2] प्रतीयते—क. [3] मानन्ते—क [4] प्रतीतिविशेषः—क. [5] विकल्पे—क. [6] नियमः कुतः—क. [7] फलवत्वात्—क [8] "अत्र"—ग. नास्ति । [9] "बिम्बोपासनस्यैव मोक्षहेतुत्वेन"—घ. नास्ति ॥

मोक्षहेतुत्वेन तस्य मोक्षहेतुत्वाभावात् । प्रत्युत मोक्षहेतुबिम्बोपासनविरोधित्वाच्चेति प्राप्ते—

नृसिंहाद्युपासनं [1]न कर्तव्यमेवेति [2]न भवति । किन्तु बिम्बोपासनमनुष्ठाय दुरितनिवृत्तिरूपविशिष्टफलापेक्षा चेत् कर्तव्यं, न चेन्न कर्तव्यमिति विकल्पः । न च नृसिंहाद्युपासनाभावे दुरितनिवृत्त्यसिद्धिः । तीव्रया [3]स्वबिम्बोपासनयापि [4]दुरितनिवृत्तिसिद्धेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादिति** । ज्ञाने [5]उपासने [6]नृसिंहादेरिति शेषः । विशेषः विकल्परूपः स्यात् । [7]यस्य दुरितनिवृत्तिरूपविशिष्टफलापेक्षास्ति तेन कर्तव्यम् । यस्य तु नास्ति तेन [8]नेत्येवंरूपो विशेषः स्यादित्यर्थः ॥ ३९ ॥

---

[काम्यापेक्षी कामानुसारेणोपासनां कुर्यात् मुमुक्षुस्तु न कुर्यादिति निरूपणम् ]

**॥ ओं ॥ काम्यास्तु यथाकामं [9]समुच्चीयेरन्**
**न वा [10]पूर्वहेत्वभावात् ॥ ओं ॥ ३–३–४०**

काम्यास्तु [11]कामसाधनभगवद्गुणास्तु यथाकामं वित्तादिकामानुसारेण [12]समुच्चीयेरन् न वा, [13]उपसंहार्या न वा, अमुमुक्षुभिः उपसंहर्तव्याः [14]अन्यैर्नेति [15]व्यवस्थितविकल्पार्थो वा शब्दः, कुतः [16]पूर्वहेत्वभावात्, [17]मोक्षेच्छातः पूर्वं यो हेतुः वित्तादिकामः तदभावात्=मुमुक्षूणां कामाख्य[18]हेत्वभावात्

[1] "न"—घ. नास्ति । [2] न भवेत्—क. [3] "स्व"—क. नास्ति ॥ [4] दुरितनिवृत्तेः सिद्धेः—क. "दुरितनिवृत्तिसिद्धेः" इत्यारभ्य "विकल्पः स्यात् । यस्य" इत्यन्तं–ग. नास्ति ॥ [5] उपाये—क. [6] नृसिंहादिरिति—क. [7] तस्य—क. [8] नेत्येव—घ. [9] समुच्चयेरन्—ग. [10] पूर्वहेतुत्वाभावात्—क. [11] काम्यसाधन—क. [12] समुच्चयेरन्—ग. [13] उपसंहार्य—क. [14] अन्येनेति वा – क. [15] व्यवस्थितिरिति विकल्पार्थो—क. [16] हेत्वाभासात्—क. [17] मोक्षोछातः—क. [18] हेतुत्वाभावात्—क.

इत्यर्थः। अथवा एतैरेव [1]फलार्थं नोपसंहर्तव्याः ईश्वरप्रसादार्थं उपसंहर्तव्याः पूर्व[2]हेत्वभावादिति सूत्रार्थः ॥

अत्र कामसाधनभगवद्रूपोपासनं [3]तदनुगुणगुणोपसंहारेणावश्यकम्। तत्साध्यस्य [4]धनादेः ज्ञानादिद्वारा [5]मोक्षहेतुत्वात्।

१"तुष्टोऽर्थे न गुरुर्यस्मात् कैवल्यं दातुमप्यलम्।" इति वचनादिति प्राप्ते—

कामसाधनभगवद्रूपे कामसाधनगुणाः स्वस्वकामानुसारेणो[6]पसंहर्तव्याः न वेति विकल्प एव, न तु नियतिः। विकल्पश्चामुमुक्षुभिः कार्यः मुमुक्षुभिर्नेति। मुमुक्षूणां कामाख्य[7]हेत्वभावात्। [8]मुमुक्षुष्वेव वार्यं विकल्पः। कुतः, कामाख्य[9]हेत्वभावादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादिति** ॥ ज्ञाने उपासने [10]कामसाधनभगवद्रूपस्येति शेषः। [11]विशेषः विकल्पः अमुमुक्षुभिः कार्यः। मुमुक्षुभिर्नेत्येवंरूपः स्यात्। अथवा मुमुक्षुभि[12]रेव फलार्थं न कार्यः। ईश्वरप्रसादार्थं कार्यं [13]इत्येवं विकल्परूपो विशेषः स्यादित्यर्थः ॥ [14]४० ॥

---

१ महाभारततात्पर्यनिर्णयोदाहृतं महाभारतवचनम्। (२९-४७) अभिनवचन्द्रिकायां एतदधिकरणे उदाहृतम् ॥

[1] फलार्थें—ग [2] हेतुत्वाभावात्—क. [3] तदनुगुणो गुणोप—क. [4] साधनादेः—क.ग. [5] मोक्षहेतुत्वाभावात्—क. [6] पसंहर्तव्यः—क. [7] हेतुत्वाभावात्—क. [8] मुमुक्षुष्वेवायं—ग.घ. [9] हेतुत्वाभावात्—क [10] साकामसाधन ग [11] "विशेषः"—ग.घ. नास्ति। [12] रेवाफलार्थं—क. [13] इत्येवंरूपो विशेषः विकल्पः स्यादित्यर्थः—घ. [14] ॥ ४७ ॥—ग.

[ देवैः स्वस्वजनकाङ्गकत्वरूपेण भगवानुपास्यः इति प्रतिपादनम् ]

**॥ ओं ॥ अङ्गेषु यथाश्रयभावः ॥ ओं ॥ ३-३-४१**

यथाश्रयभावः उक्तः [1]श्रुतौ । सूर्याद्यङ्गदेवतानां यथा भगवदङ्गाश्रयत्वं उक्तं [2]श्रुतौ [3]तथैव [4]तेषां भगवदङ्गेषूपासनं कार्यं तद्योग्यैरिति सूत्रार्थः ॥

अत्र न भगवदङ्गाश्रितत्वेन [5]तदेवोपासनं कार्यं अविहितत्वादिति प्राप्ते—

सूर्यादिदेवानां १ ''चक्षोस्सूर्योऽजायते''त्यादिना यथा यथा भगवदङ्गाश्रितत्वं उक्त [6]तथा तथोपासनं कार्यं अन्यथा तदुक्तिवैयर्थ्यात् ।

''यस्मिन् यस्मिन् यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथैवे''ति पौत्रायणश्रुतौ तथा विहितत्वाच्चेति सिद्धान्तः कृतः ॥

[7]तस्य तात्पर्यमाह—**सुरेश्वरैरुपास्यो विष्णुरिति** ॥ भगवदङ्गाश्रितैरिति शेषः ॥ उक्त इति च ॥ ४१ ॥

———

१ पुरुषसूक्तम् ।

1 ''श्रुतौ''—क. नास्ति । 2 ''श्रुतौ''—ग. नास्ति । 3 तथैव–क. 4 ''तेषां''–ग. नास्ति ॥ 5 देवोपासनं - क. 6 ''तथा''—ग.घ. नास्ति । 7 एतदधिकरणतात्पर्यन्तु अङ्गावबद्धाधिकरणतात्पर्यकथनाभिप्रायमेव ॥ ४१ ॥—क. एतदधिकरणतात्पर्यन्तु अङ्गावबद्धाधिकरणतात्पर्यकथनेन उक्तप्रायमेव ॥ ४१ ॥—ग.

[ देवव्यतिरिक्तैः स्वोत्पादकाङ्गवत्त्वेन भगवान् न उपास्य इति निरूपणम् ]

॥ ओं ॥ [1]न वा तत्सहभावश्रुतेः ॥ ओं ॥ ३-३-४२

न वाङ्गेषु देवतोपासनं कार्यं, कुतः, अतत्सहभावश्रुतेः । [2]तथोपासनस्य सर्वशाखागतोपासनेन सहभावाश्रयणादिति नञो व्यत्यासेन अन्वयः कार्यः । वा शब्दः देवान्यापेक्षया । अयमाशयः । सर्वशाखासु सूर्याश्रयचक्षुष्मान् विष्णुः [3]इत्यादिरूपेणोपासनस्यानुक्तत्वात् सर्वैः तथोपासनं [4]न कार्यं कासुचिच्छाखासु उक्तत्वात् देवैस्तथोपासनं कार्यं इति सूत्रार्थः ॥

अत्र [5]देवानां भगवद[6]ङ्गाश्रितत्वेन उपासनं [7]केनापि न कर्तव्यम् । तथोपासनस्य [8]कुत्राप्यनुक्तत्वात् इति प्राप्ते —

न [9]कर्तव्य एव सर्वैं भगवदङ्गेषु [10]अङ्गदेवतोपसंहारः । [11]सर्वशाखासु तथोपासनस्या[12]श्रवणात् । किन्नाम, देवै रेव [13]कार्यः । १ "[14]सर्वैः गुणैः [15]देवगणा [16]उपासते" इति [17]श्रुतेः इति सिद्धान्तः कृतः ॥

तस्य [18]तात्पर्यमाह — **विशेषस्तु स्यादिति** ॥ देवताश्रयाङ्गत्वेन

---

१ ( ) श्रुतिः

[1] ओं तत्सहभावश्रुतेः न वा ओं । ओं न वा तत्सहभावश्रुतेः ओं—क. [2] तथोपासनापेक्षयायमाशयः—क. [3] इत्यादिनोपासनस्य — ग. [4] न कर्यं इति सूत्रार्थः—क. [5] "देवानां"—ग.क. नास्ति । [6] ङ्गाश्रयत्वेन—क.घ. [7] सर्वैः—क.ग. [8] सर्वशाखास्वनुक्तत्वात्—क. [9] कर्तव्यमेव—क.ग. [10] देवतोपासनं—क.ग [11] "सर्व" इत्यारभ्य "श्रवणात्" इत्यन्तं—घ. नास्ति । [12] श्रयणात्—क. [13] कर्तव्यम्—क ग. [14] सर्वगगुणैः—क.ग. [15] देवगुणा—घ [16] उपासितव्या — क [17] "श्रुतेः इति"—क. नास्ति । [18] तात्पर्यमाह—सुरेश्वरैस्तु उपास्यो विष्णुरिति ॥ भगवदङ्गाश्रितैः देवैः युक्त इति शेषः । तुरवधारणार्थः । तथाच सुरेश्वरैः एव भगवदङ्गाश्रितैः देवैः युक्तो विष्णुरित्युपास्यो नान्यैरित्युक्तं भवति—घ.

भगवदुपासने विशेषः, देवदेवव्यतिरिक्तानां कर्तव्यत्वा[1]कर्तव्यत्वलक्षणो विशेषस्तु स्यादित्यर्थः ।

अत्राधिकरणानां पुनरुक्तिश्च भावबोधोक्तरीत्या परिहरणीया । [2]एवं च [3]ब्रह्मणा वेदोक्तानन्तगुणैः [4]देवैः मनुष्योत्तमपर्यन्तं [5]स्वस्वयोग्यबहुगुणैः मनुष्योत्तमैः उक्तगुणचतुष्टयेन तेभ्यो निकृष्टैः आत्मत्वाख्यैकगुणेनोपास्यो भगवान्नारायण इति सिद्धम् ॥ ४२ ॥

[6]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

[7]इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य तृतीयः पादः ॥

॥ श्री कृष्णार्पणमस्तु ॥

---

[1] कर्तव्यत्वात्कर्तव्यत्वलक्षणो—ग [2] "एवं च" इत्यारभ्य "इति सिद्धम्" इत्यन्तो भागः—घ. नास्ति ॥ [3] अब्रह्मणो—क. [4] "देवैः"—क.घ.नास्ति ॥ [5] स्वयोग्यबहुगुणैः—ग. [6] अयं श्लोकः—क.ग. नास्ति । [7] इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते अणुभाष्ये तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥ श्री लक्ष्मीनृसिंहाय नमः ।—क

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्राणुभाष्यटीकायां तृतीयस्य तृतीयः पादः ॥ श्री लक्ष्मीनृसिंहाय नमः ॥—ग.

## अथ तृतीयाध्यायस्य चतुर्थः पादः

श्रीगुरुभ्यो नमः

### सर्वेऽपि पुरुषार्थास्स्युः ज्ञानादेव न संशयः ।

---

हरिः ओम्

[1]लक्ष्मीरूपद्वयेनालं गृहीत्वा कलशद्वयम् ।
चक्रेऽभिषेकं सुधया तं हयास्यमहं भजे ॥ १ ॥

एवं [2]उपासनां निरूप्य तत्साध्यज्ञानसामर्थ्यं अस्मिन् पादे निरूप्यते ॥

[अपरोक्षज्ञानात् सर्वपुरुषार्थप्राप्तिरिति प्रतिपादनम्]

**॥ ओं ॥ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ ओं ॥ ३–४–१**

अतः अपरोक्षज्ञानादेव अशेषपुरुषार्थो भवतीति बादरायणो मन्यते । कुतः शब्दात्, तथा श्रुतेरिति सूत्रार्थः ॥

अत्र ज्ञानं मोक्षमात्रसाधनं, न स्वर्गादिसाधनं ज्ञानिनां मोक्षेतरपुरुषार्थेषु विरक्तत्वेन तदिच्छाया एव अभावात् । इच्छाभावेऽपि तत्प्राप्तौ [3]पुरुषार्थत्वमेव न स्यादिति प्राप्ते—

ज्ञानेन यावदपेक्षितं [4]तत्सर्वमाप्यत एव । न तु मोक्षमात्रम् ।

---

[1] "लक्ष्मी.......भजे" ॥ अयं श्लोकः—क.ग. नास्ति ॥ [2] उपासनं —क.ग. [3] पुरुषार्थमेव—क. [4] तत्सर्वमप्यते—क.

कुत इति चेन्न । १ "[1]यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते [2]यांश्च कामान् । तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः" ॥ इति श्रुतेः । २ "ज्ञानादेव स्वर्गः, ज्ञानादेवापवर्गः ज्ञानादेव सर्वे कामाः सम्पद्यन्ते" इति श्रुत्यन्तराच्चेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[3]**सर्वेऽपीति** ॥ न केवलं विद्यैव तु निर्धारणादित्युक्तरीत्या मोक्ष एव ज्ञानात्, किन्तु पुरुषैरर्थ्यमानाः सर्वेऽपि पुरुषार्थाः ज्ञानादेव स्युः । न तत्र संशयः कार्यः इत्यर्थः ॥ १ ॥

---

[हरिगुरुभक्त्यादिपूर्वकाध्ययनवतामेव ज्ञानाधिकारः इति निरूपणम्]

**॥ ओं ॥ [4]असार्वत्रिकी ॥ ओं ॥ ३–४–२**

ज्ञानाधिकारितेति शेषः । असार्वत्रिकी सर्वजननिष्ठा न, किन्तु मुक्तियोग्यनिष्ठैवेति सूत्रार्थः ॥

अत्र सर्वेषामप्यस्ति ज्ञानाधिकारः । अर्थी समर्थो विद्वान् साधने अधिक्रियते । तत्रास्ति सर्वेषां ज्ञानफले मोक्षे अर्थिता । अस्ति च [5]सर्वेषां श्रवणादौ सामर्थ्यं, तदुपयोगिनी विद्वत्ता च । एवं च कस्यचिदनधिकारे कस्यापि न स्यादिति प्राप्ते—

न सर्वेषां ज्ञानाधिकारः । [6]किन्नाम यथा खलु देवत्वसाम्येऽपि

---

१ मुण्डकोपनिषत् । (३—१—१०)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्ठरव्यश्रुतित्वेनोदाहृतम् ॥

[1] "यं यं लोकं" इत्यारभ्य "इतिश्रुतेः" इत्यन्तं—घ नास्ति । [2] यांश्च—ग. [3] सर्वोऽपीति—क. [4] असार्वत्रकी—घ. [5] सर्वेषां—क. नास्ति । [6] "किन्नाम यथा खलु" इत्यारभ्य "ज्ञानाधिकारः" इत्यन्तं—क. नास्ति ॥

[1]नवकोटिदेवानां न सर्वेषां सोमाधिकारः किन्तु परापरब्रह्मद्वयाधिक[2]शतस्यैव । तथा सर्वेषां पुरुषार्थापेक्षासाम्येऽपि न सर्वेषां ज्ञानाधिकारः । किन्तु हरि-[3]गुरुभक्त्यादि[4]पूर्वकाध्ययनवतामेवेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादिति** ॥ ज्ञाने अपरोक्ष-ज्ञाने विशेषः उक्तरीत्या सर्वाधि[5]कारिकत्वाभावरूपः स्यादित्यर्थः ॥ २ ॥

———

[योग्यतातारतम्यानुसारेण ज्ञानाधिकारेऽपि तारतम्यं इति साधनम् ]

**॥ ओं ॥ नाविशेषात् ॥ ओं ॥ ३–४–३**

न [6]सर्वेषां [7]देवादीनां साम्येन ज्ञानाधिकारः । कुतः ? अवि-शेषात् । ज्ञानस्याप्यविशेषप्रसङ्गात् अधिकारानु[8]सारित्वात्तस्येति सूत्रार्थः ॥

अत्र सर्वेषां [9]देवादीनां एकप्रकारेणैव ज्ञानाधिकारः । अधिकार-तारतम्यकल्पकाभावात् । न च १प्रज्ञान्तरपृथक्त्ववद्दृष्टिरिति ज्ञाने तारतम्यस्य उक्तत्वात् तदधिकारेऽपि तारतम्यमिति वाच्यम् । अधिकार-साम्येऽपि प्रयत्नतारतम्यादेव ज्ञानतारतम्यसिद्धेः इति प्राप्ते—

न [10]देवादीनां साम्येन ज्ञानाधिकारः । ज्ञानसाम्यप्रसङ्गात् । न च प्रयत्नतारतम्येन ज्ञानतारतम्यमिति वाच्यम् । अधिकारतारतम्यस्या-भावे प्रयत्नतारतम्यस्यैवायोगात् इति सिद्धान्तः कृतः ॥

---

१ ब्रह्मसूत्रम् ॥ (३—३—३२—५२)

[1] नवकोटीनां—घ. [2] शतानामेव—घ. [3] 'गुरु'—घ. नास्ति । [4] पूर्व-कध्यानवतामेव—क.ग. [5] कारित्वाभावरूपः—क. [6] 'सर्वेषां'—ग.घ. नास्ति । [7] देवानां—क. [8] साधित्वात्तथेति—क. [9] देवानां—क. [10] देवानां—क.

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं इति** ॥ अतः ज्ञानाधिकारेऽपीति शेषः । यतः ज्ञाने अपरोक्षज्ञाने उत्तरोत्तरं विशेषः [1]तारतम्यं अतः ज्ञानाधिकारेऽपि विशेषः तारतम्यं स्यात् । अधिकार-तारतम्यानुसारित्वात् ज्ञानतारतम्यस्य, अन्यथा ज्ञानसाम्यप्रसङ्गादित्यर्थः ॥ ३ ॥

---

[ज्ञानी ज्ञानोत्तरकृतपापैः न लिप्यते इति समर्थनम् ]

## ॥ ओं ॥ स्तुतयेऽनुमतिर्वा ॥ ओं ॥ ३–४–४

अस्त्येव सदसत्प्रवृत्तिभ्यां विशेषः । १ "केन स्या[2]द्येन स्यात्" इति तु ज्ञानिनः यथेष्टाचारे न [3]विधिः किन्तु स्तुतये=ज्ञानिनः स्तुत्यर्थं वा, [4]अनुमतिर्वा=अनुज्ञामात्रं वा इति सूत्रार्थः ॥

न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ॥
गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ॥
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ॥

अत्र न सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषोऽस्ति । "केन स्यात् येन [5]स्यात्, तेन ईदृश [6]एव" इति यथेष्टप्रवृत्ति[7]विधानादिति प्राप्ते—

अस्त्येव ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषः । "[8]केन स्याद्येन स्यादित्य"स्य यथेष्टाचार[9]विधित्वाभावात् । तर्हि किमर्थमुच्यते "[10]केन

१ बृहदारण्यकोपनिषत् । (५—५—१)

[1] तारतम्ये—क. [2] देन स्यात्—ग. [3] विरोधः—क. [4] "अनुमतिर्वा"—ग.घ. नास्ति ॥ [5] स्यादिति—ग. [6] एव स्यादिति—क. [7] विधादिति—क. [8] येन स्यात् केन स्यात्—क. [9] विधित्वाभावसम्भवात्—ग. [10] 'केन'—घ नास्ति ।

स्याद्येन स्यादिति"। यथा कथञ्चित् भृत्यं प्रति स्तुतये कथ्यते। यथेष्टं कुर्विति। न तु विधिः। तथा एतदपि ज्ञानिनः [1]स्तुतय एवोच्यते। अथवा [2]यथेष्टाचारे अनुज्ञामात्रमेतत्। न विधिरिति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह—**न लिप्यत** [3]**इत्यादिना** सार्धश्लोकेन। चोऽवधारणे। नैवेत्यनुषङ्गः। तथा च ज्ञानवान् अपरोक्षज्ञानी सर्वदोषैः ज्ञानोत्तरकृतपापैः। अपि शब्दाद्गुणैरपि क्वचिदपि मुक्तेः पूर्वं तदनन्तरं च [4]न लिप्यत इत्यर्थः। उक्तस्यापवादमाह—**गुणदोषैरिति**। नृणां गुणदोषैः। ज्ञानोत्तरकृत[5]महापुण्यपापैः, सुखस्य अपिशब्देन ज्ञानादेरपि विमुक्तिगौ वृद्धिह्रासौ भवत इति शेषः॥ उक्तं च—

१"ह्रासोऽपि मानुषादीनां आनन्दस्य विकर्मणा।" इति अनुव्याख्यानसुधायां आनन्दस्येत्युपलक्षणं इति। [6]सुराणान्तु [7]मुक्तौ यथाक्रमं योग्यताक्रममनुसृत्य सुखं क्लृप्तं, न पुण्यपापैः वृद्धि[8]ह्रासवदित्यर्थः॥

अयं भावः। ज्ञानोत्तरपापं द्विविधम्। अल्पं महच्चेति। [9]तत्र ज्ञानिनां [10]देवादीनां मनुष्याणां च अल्पपापलेपो नास्त्येव। तथाचोक्तं सूत्रकृता। तदधिगमसूत्रे महता पापेन च मनुष्याणां स्वयोग्यतापेक्षया क्लृप्तस्यैवानन्दस्य ह्रासो भवति। देवानां च महता पापेन

---

१ ब्रह्मसूत्रानुव्याख्यानम्। (३—४—३—७)

[1] स्तुत एवोच्यते—घ. [2] यथेष्टाचार्ये—क. [3] इति सार्धश्लोकेन—क. इत्यादिना—घ. इत्यादि सार्धश्लोकेन—ग. [4] नैव—क. [5] महत्पुण्य—घ. [6] सूराणां—क [7] तृप्तौ—क. [8] ह्रासवदितिदमित्यर्थः—क. [9] अत्र—क. [10] देवानां—क.

[1]कूलतस्यैवानन्दस्य ह्रासो नास्ति। किन्तु स्वयोग्यतापेक्षयाधिकसाधन-जन्यस्य प्राप्यस्यैवानन्दस्य हानिर्भवतीति। यद्यप्यत्र नये ज्ञानिनः सदसत्प्रवृत्या विशेषसद्भावः प्रतिपादितः। स च विशेषः वृद्धिह्रासरूप एव।

१ "[2]ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु।

आनन्दो ह्रसतेऽकार्याच्छुभं [3]कृत्वा तु वर्धते॥"

इत्युक्तेः। अतः गुणदोषैरित्याद्येव वक्तव्यं, तथापि न लिप्यते इत्येतत्प्रासङ्गिकमित्यदोषः॥ ४॥

---

[गुरूपसत्याद्यनेकोत्साहेऽपि योग्यानामेव ज्ञानप्राप्तिः नायोग्यानां इति निरूपणम्]

॥ ओं ॥ सर्वथापि तु [4]त एवोभयलिङ्गात् ॥ ओं ॥ ३-४-५

सर्वथापि गुरूपसत्याद्यनेकोत्साहेऽपि त एव योग्या एव ज्ञानमाप्नुवन्ति। न त्वयोग्याः, प्रत्युत विपरीतज्ञानमिति तुशब्दार्थः। कुतः? उभयलिङ्गात्। गुरूपदेशसाम्येऽपि योग्य इन्द्र एव सम्य[5]ज्ज्ञानमवाप, न अयोग्यो विरोचन इत्युभयविधलिङ्ग[6]दर्शनादिति सूत्रार्थः॥

अत्र अनधिकारिभिः ज्ञानमाप्यते। अधिकाराभावेऽपि महाप्रयत्नेन प्राप्तुं शक्यत्वादिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्माण्डपुराणवाक्यत्वेनोदाहृतम्॥

[1] कूलतस्य ह्रासो—क. [2] "ज्ञानान्मोक्ष" इत्यारभ्य "इत्युक्तेः" इत्यन्तं—घ. नास्ति। [3] कृत्वापि—क. [4] तत एव—ग. [5] ज्ज्ञानमाप—ग. [6] दर्शनादिति प्राप्ते—क. [7] "सूत्रार्थः" इत्यारभ्य "शक्यत्वादिति" इत्यन्तं—क. नास्ति॥

[1]गुरूपसत्याद्यनेकोत्साहेऽपि योग्यानामेव ज्ञानप्राप्तिः नायोग्यानां, १ "य एषोन्तरक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच" इति इन्द्र-विरोचनयोरेकप्रकारेण चतुर्मुखोपदेशोऽपि इन्द्र एव सम्यज्ज्ञानमाप विरोचनस्तु विपरीतज्ञानमापेति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **विशेषस्तु ज्ञाने स्यादिति** ॥ [2]अपरोक्षज्ञाने योग्यपात्रप्राप्यत्वरूपो विशेषः स्यादित्यर्थः ॥ ५ ॥

————

[देवतापदं अन्यैः न प्राप्यते इति प्रतिपादनम् ]

**॥ ओं ॥ न चाधिकारिकमपि पतनानुमानात्**
**तदयोगात् ॥ ओं ॥ ३-४-६**

आधिकारिकमपि [3]देवतापदयोग्यैरेव प्राप्यं नायोग्यैः [4]किमैश्वर्यमतः तन्नाकांक्ष्यं कुतः तदयोगात्, [5]तदाकांक्षायाः अयोगात् । पतनानुमानात्= विमतो देवादिभिः [6]पात्यते अशक्यस्व[7]पदेच्छुत्वात् राजपदेच्छुवदिति पतनानुमानात् । अतः ज्ञानमपि योग्यैरेव प्राप्यमिति सूत्रार्थः ॥

[8]अत्र [9]देवतापदं अयोग्यैरेव प्राप्यम् । २ "स्वधर्मनिष्ठः शत-

---

१ छान्दोग्योपनिषत् । (८ ७—३)

२ ब्रह्मसूत्रभाष्यदीपिकायां एतदधिकरणोदाहृतं तृतीयस्कन्धभागवतवचनम् । ब्रह्मसूत्रभाष्यटीकायां तत्त्वप्रकाशिकायामपि एतदधिकरणे उदाहृतम् ॥

[1] गुरूपदेशाद्यनेकोत्साहेऽपि क. गुरूपदेशाद्यनेकोत्साहेऽपि—ग. [2] अपरोक्ष-ज्ञानमात्रप्राप्यत्वरूपो —क. [3] 'देवतापद'—ग.घ नास्ति । [4] 'किमैश्वर्यमतः तन्नाकांक्ष्यं' इत्येतस्य स्थाने 'किम्मु परमात्मैश्वर्यं' इति पाठः इति भाति ॥ [5] तदाकांक्षाया-योगात् ।—क. [6] न प्राप्यते—क. [7] पदेच्छराज।देच्छुवदिति—ग. [8] 'अत्र'—ग. नास्ति । [9] देवतापदे—क.

जन्मभिः पुमान् [1]विरिञ्चतामेति" इत्यादेः । अतोऽयोग्यैरपि ज्ञानं प्राप्यमिति प्राप्ते—

न देवतापदं अन्यैः प्राप्यं तदकांक्षामात्रस्य पातहेतुत्वेन तत्प्राप्तेः दूरोत्सारितत्वात् ॥

१"स्वकीयमिच्छमानन्तु राजाद्याः [2]पातयन्ति हि ।
एवमेव सुराद्याश्च [3]हरिश्च [4]स्वपदेच्छुकम् ॥"

इति वचनात् । अतो ब्रह्मादिपदस्य योग्यैक[5]लभ्यत्वात् ज्ञानमपि देवादिपदाकांक्षाशून्यैः योग्यैरेव प्राप्यं इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने [6]स्यादिति** ॥ [7]ज्ञाने= ज्ञानार्थं, विशेषः=अयोग्यदेवादि[8]पदाकांक्षाशून्यत्वरूपः अपेक्षितः स्यादित्यर्थः ॥ ६ ॥

---

[ देवानामेव मुख्यं ज्ञानफलं प्रजानान्तु अल्पमिति समर्थनम् ]

**॥ ओं ॥ स्वामिनः फलश्रुतेः इत्यात्रेयः ॥ ओं ॥**　३-४-७

स्वामिनः इत्येकवचनं जातौ । इन्द्रियस्वामिनां देवानामेव ज्ञानफलं, कुतः ? " यदु किञ्चेमा " इति फलश्रुतेरिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं प्रमाणम् ॥

[1] विरिञ्चितामेति—क　[2] पतयन्ति—क०　[3] 'हरिश्च'—क० नास्ति　[4] स्वपदेच्छकम्—क०　[5] लक्ष्यत्वात्—ग०　[6] स्यादिति स्वामिनामिति शेषः—क०　[7] "ज्ञाने ज्ञानार्थं विशेषः" इत्यारभ्य "तस्य तात्पर्यमाह—विशेषस्तु ज्ञाने स्यादिति" इत्यन्तो भागः—क नास्ति ॥　[8] पदापेक्षाशून्यत्वरूपः—ग०

[1]अत्र १"ब्रह्मविदाप्नोति परं" इत्यादिश्रुतिसिद्धब्रह्मप्राप्त्यादिज्ञानफलं देवानामेव न प्रजानां, इन्द्रियादिप्रवर्तकत्वेन तेषामेव [2]ज्ञानस्वामित्वात्। लोके च स्वामिनामेव फलदर्शनात्। २"यदु किञ्चेमाः [3]प्रजाः शुभमाचरन्ति। देवा एव [4]तदाचरन्ति। [5]यदु किञ्चेमाः प्रजाः विजानते। देवा एव तद्विजानते। देवानां ह्येतद्भवति, स्वामी हि फलमश्नुते। नास्वामी कर्म कुर्वाण" इति श्रुतेश्च। न च कर्तृत्वेन अस्वामिनामपि फलं, [6]कर्तृत्वस्य अप्रयोजकत्वादिति प्राप्ते—

न केवलं देवानामेव फलं, किन्तु प्रजानामपि। न चास्वामित्वात्फलाभावः। यथा खलु सत्रयागेषु [7]अगृहपतीनां ऋत्विजां यज्ञफलं, तथा अस्वामित्वेऽपि प्रजानां [8]ज्ञानफलसम्भवात्। न च नास्वामीति श्रुतिविरोधः। प्रजानामल्पफलाभ्युपगमात्। श्रुतेश्च तदभिप्रायकत्वात्। अल्पस्वे निस्व इति प्रयोगदर्शनादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादिति** ॥ स्वामिनामिति शेषः। ज्ञाने ज्ञानफले [9]स्वामिनां [10]देवानां, विशेषः=अतिशयः स्यात्। प्रजाना[11]न्तु अल्पं स्यादित्यर्थः ॥ ७ ॥

———

१ तैत्तिरीयोपनिषत्। (२—१)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे माध्यन्दिनायनश्रुतित्वेनोदाहृतम् ॥

1 'अत्र'—ग. नास्ति ॥ 2 ज्ञानस्यामितत्वात्—ग. 3 प्रजाः विजानते—ग. 4 तद्विजानते—ग. 5 "यदु किञ्चेमाः" इत्यारभ्य "तद्विजानते" इत्यन्तं—ग. नास्ति ॥ 6 कर्तृत्वास्य—घ. 7 अयजमानानां—ग. 8 यज्ञेन बलसम्भवात्—ग. 9 स्वामिना—क. 10 देवानामिति शेषः—क. 11 न्तु तदभावः स्यादि—क.

[यतिरेव सर्वाश्रमिषूत्तमः न गृहस्थ इति प्रतिपादनम्]

## ॥ ओं ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ओं ॥ ३-४-८

यतेरेव सर्वाश्रमिषूत्तमत्वं न गृहिणः। न चैवं श्रुतौ[1] गृहस्थस्य [2]मोक्षमुक्त्वोपसंहारः कृत इति तद्विरोध इति वाच्यम्। कृत्स्नभावात्तु देवानां सर्वाश्रमधर्मभावात्। तथाच अस्योपसंहारस्य देवविषयत्वात् गृहिणा= गृहस्थेन [3]उपसंहारो युज्यत इति सूत्रार्थः॥

अत्र गृहस्थो [4]मुक्तावुत्तमः। तस्य यज्ञादि[5]सर्वसत्कर्माधिकारित्वात्। न ह्यन्याश्रमिणां यज्ञादावधिकारोऽस्ति। [6]किञ्च छन्दोगोपनिषदि १"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इति गृहस्थस्यैव [7]मोक्षमुक्त्वा उपसंहारः क्रियते। तेन ज्ञायते मुक्तौ गृहस्थस्यैवाधिक्यमिति। न ह्याधिक्याभावे सर्वेषामपि मोक्षे समाने विशिष्योक्तिः [8]युक्ता। उपसंहाराच्च तात्पर्यमवगम्यते। उपसंहारस्य तात्पर्यलिङ्गत्वात्। अतः कर्मिणामेवोत्तमत्वात न ज्ञानस्यातिशयः इति प्राप्ते —

यतिरेव सर्वाश्रमिषूत्तमः न गृहस्थः। यतिमोक्षस्य गृहिमोक्षादपि चिरकालसाध्यत्वात्। [9]अल्पकालापादितसाधनसाध्याद्बहुकालीनसाधन[10]साध्यस्य मोक्षस्य आधिक्यनियमात्। गृहिणां बहुकर्माधिकारसद्भावेऽपि

१ छान्दोग्योपनिषत्। (८—१५—१)

[1] श्रुतो—क. [2] मोक्षमुपसंहारः—क. [3] उपसंहारे—ग. [4] मुक्तावुपमः—क. [5] सर्वकारित्वात्—क. [6] "किञ्च" इत्यारभ्य "तात्पर्यलिङ्गत्वात्" इत्यन्तं—घ. नास्ति। [7] मोक्षोक्तावुपसंहारः—क. [8] युक्तोपसंहाराच्च—क. [9] अल्पकालापादितसाधनसाध्यत्वात् मोक्षाद्बहुकालीन—क. अल्पकालापादिततत्साधनसाध्यादाबहुकालीन—ग. [10] साध्यस्याधिक्यनियमात्—क.

तदाचरणनियमो नास्ति । कतिपयानुष्ठानेनैव अपरोक्षज्ञानसिद्धेः । [1]न चैवं गृहिणोपसंहारविरोधः । तस्य [2]देवताविषयत्वात् । न च देवानामपि यतेरुत्तमत्वं कथमिति वाच्यम् । तेषु सम्पूर्ण[3]सर्वाश्रमधर्मसद्भावात् । अतो ज्ञानाधिकारिणां यतीनामेवोत्तमत्वात् युक्तो ज्ञानस्यातिशयः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु ज्ञाने स्यादिति** ॥ ज्ञाने ज्ञानाधिकारिणि [4]यतौ विशेषः [5]सर्वाश्रमिषूत्तमत्वरूपो विशेषः स्यादित्यर्थः ॥ ८ ॥

———

[अयोग्यानां ज्ञानोपदेशः न कार्य इति निरूपणम् ]

**॥ ओं ॥ [6]अनाविष्कुर्वन् अन्वयात् ॥ ओं ॥ ३–४–९**

अनाविष्कुर्वन्नेव [7]उपदिशेत् । कुतः? अन्वयात् । आविष्कारेणोपदेशे अयोग्यानामपि [8]ज्ञानप्राप्तिरिति युक्तेः तथा श्रुतेश्चेति सूत्रार्थः ॥

अत्र [9]परोक्षज्ञानं [10]आविष्कारेणैवोपदेष्टव्यं सभाचत्वरादौ उपविश्य विद्योपदेशे सर्वेषां ज्ञानलाभात् । आवश्यकश्च बहूपदेशः । १"यथा यथा ह वै ब्रूयात् तथा तथा अधिको भवतीति [11]श्रुतेरिति प्राप्ते—

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे माठरश्रुतित्वेनोदाहृतम् ।

[1] "न चैवं" इत्यारभ्य "धर्मसद्भावात्" इत्यन्तं—घ. नास्ति ॥ [2] देवदत्तादिविषयत्वात्—ग. [3] सर्वाश्रयदोषसद्भावात् ग. [4] यतो—ग. [5] सर्वाश्रमेषु—क. [6] 'अ'—ग. नास्ति । [7] उपदेशे तु—क. [8] ज्ञानप्राप्त्यानर्थप्राप्तिरूपः तथा—क. [9] अपरोक्षज्ञानाविष्कारेणैव—क. [10] आविष्कारेणोपदेष्टव्यं—ग. [11] श्रुतेरेव प्राप्ते—क.

[1]अनाविष्कारेणैव विद्योपदेशः कार्यः। आविष्कारेणोपदेशे अयोग्यानामपि ज्ञानप्राप्तेः। न च तदिष्टम्। १"विद्या [2]ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि" इति तन्निषेधा[3]दिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— **विशेषस्तु ज्ञाने स्यादिति** ॥ ज्ञाने अपरोक्षज्ञाने [4]अनाविष्कारेणोपदे[5]ष्टव्यत्वरूपो विशेषः स्यादित्यर्थः ॥ ९ ॥

———

[प्रारब्धकर्मसद्भावे अपरोक्षज्ञानं जन्मान्तरे सम्भवति, तदभावे तज्जन्मन्येवेति प्रतिपादनम्]

**॥ ओं ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ओं ॥ ३-४-१०**

अप्रस्तुतप्रतिबन्धे प्रारब्धप्रतिबन्धाभावे अपरोक्षज्ञानं ऐहिकं इह भवं ऐहिकं इह जन्मन्येव भवति। तत्सद्भावे जन्मान्तरे, कुतः? [6]दर्शनात् तथा श्रुतेरिति सूत्रार्थः ॥

अत्र ज्ञानं श्रवणादिसाधनसम्पूर्तिजन्मन्येव भवति। साधनसम्पूर्तावपि ज्ञानानुदये कारणाभावात्। न च स्वर्गादिवदुपपत्तिः। तस्यैतच्छरीरेण [7]भोगायोगात्तत्पातानन्तरं प्राप्त्युपपत्तेः। न चात्र तादृशं कारणं अस्तीति प्राप्ते--

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

[1] नाविष्कारेणैवोपदेशः—क. [2] "ह"—क. नास्ति। [3] इति सिद्धान्तः कृतः—क. [4] आविष्कारेण—ग. [5] ष्टव्यरूपो—क. [6] तर्शनात्—ग. [7] भागायोगात्तत्पातानन्तरप्राप्त्युपपत्तेः—क.

ज्ञानं [1]श्रवणादिसम्पूर्तिजन्मन्येव भवतीति न नियमः । किन्तु प्रारब्धकर्मसद्भावे जन्मान्तरे, तदभावे तज्जन्मन्येवेति अभ्युपगमात् । तत्कुतः ? १ "[2]श्रुत्वात्मानं मतिपूर्वं [3]ह्युपास्येहैव दृष्टिं परमस्य विन्देत् । [4]यद्यारब्धं कर्म [5]निबन्धकं स्यात् प्रेत्यैव पश्येदि"ति श्रुतेरिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह —**विशेषस्तु ज्ञाने स्यादिति** ॥ तुशब्दः प्रतिबन्धाभावसूचकः । प्रारब्धप्रतिबन्धाभावे ज्ञाने अपरोक्षज्ञाने विशेषः= श्रवणादिसम्पूर्तिजन्मन्येवोत्पत्तिरूपः स्यात् । [6]तत्सद्भावे जन्मान्तरे उत्पत्तिरूपो विशेषः स्यादित्यर्थः ॥ १० ॥

---

[प्रारब्धकर्मप्रतिबन्धाभावे ज्ञानिनः तच्छरीरपातानन्तरमेव मोक्ष , तत्सद्भावे तु जन्मान्तरं प्राप्य मोक्षः इति निरूपणम् ]

**॥ ओं ॥ एवं मुक्तिफलानियमः तदवस्थावधृतेः तदवस्थावधृतेः ॥ ओं ॥ ३-४-११**

यथा एवं ज्ञाने नियमाभावः तथा मुक्तिफलानियमः । मुक्तिलक्षणफलेऽपि [7]यच्छरीरे ज्ञानमुत्पन्नं तच्छरीरपातानन्तरमेव मोक्ष इति [8]नियमो नास्ति । अप्रतिबन्धे तद्देहपातानन्तरमेव, प्रतिबन्धसद्भावे देहान्तरावसाने इत्यस्य प्रमितत्वात् । ज्ञानोत्पत्त्यनन्तरं मुक्त्यभावे कदापि नेति कुतो न कल्पते । [9]प्रतिबन्धककल्पना कुतः इत्यत उक्तं—तदवस्थावधृतेः

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे सौपर्णश्रुतिवाक्यत्वेनोदाहृतम् ॥

[1] श्रवणादिजन्मन्येव—क. [2] श्रुत्वात्मानमतिपूर्वं—घ. [3] ह्युपास्ते हैव - क. [4] यथा आरब्धं कर्म—क.ग [5] निबद्धकं—क. [6] तद्भावे—क. [7] तच्छरीरे—ग. [8] नियमोस्ति - ग. [9] प्रतिबन्धकल्पना—ग.

तदवस्थावधूते: इति । तस्मिन् [1]ब्रह्मण्यवस्था स्थितिः यस्य तस्य ब्रह्मसंस्थस्य [2]अवधूते: १ ''ब्रह्मसंस्थो [3]अमृतमेत्येवेति श्रुतौ [4]ज्ञानिनः मुक्तिफलावधारणात् । द्विरुक्तेः प्रयोजनन्तु पूर्वमेवोक्तमिति सूत्रार्थः ॥

अत्र यच्छरीरे ज्ञानमुत्पन्नं तत्पातानन्तरं एव मोक्षो भवति । कारणे सति कार्यविलम्बायोगात् । न च ज्ञानवदुपपत्तिः । तत्र प्रतिबन्धकसद्भावात् । न चात्र [5]तादृशं प्रतिबन्धकं पश्यामः [6]प्रमाणाभावात् इति प्राप्ते—

यथा ज्ञाने अनियमः तथा मुक्तिफलेऽपि । [7]तच्छरीरपातानन्तरं एव वा, जन्मान्तरं [8]प्राप्य वा भवति । न चानियमे कारणाभावः । प्रारब्ध[9]प्रतिबन्धकभावाभावयोरेव [10]अनियमकारणत्वात् । [11]तत्कुतः ?

२ ''अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ।
न चेद्बहूनि जन्मानि प्राप्यैवा[12]न्ते न संशयः ॥''

इति स्मृतेः इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विशेषस्तु [13]ज्ञाने स्यादुत्तरोत्तरमिति** ॥ तुशब्दः पूर्वोक्त एवार्थः । ज्ञाने अपरोक्षज्ञाने देहविशेषे उत्पन्ने सति

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं प्रमाणम् ॥
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे नारायणाध्यात्मवाक्यत्वेनोदाहृतम् ॥

[1] ब्रह्मण्यवस्थितिः—ग. [2] अवधूतेः ज्ञानिनः—क. [3] अमृतत्वमेवेत्येवेति—ग. [4] 'ज्ञानिनः'—क. नास्ति । [5] 'तादृशं' ग. नास्ति ॥ [6] प्रमाणादिति प्राप्ते—क.ग. [7] तच्छरीरपातानन्तरं वा—क. तच्छरीरपातानन्तरं एव मोक्ष इति नियमो नास्ति । किन्तु तच्छरीरपातानन्तरं वा—ग.घ. [8] 'प्राप्य'—ग. नास्ति । [9] प्रतिबन्धभावाभावयोः—ग.घ. [10] नियमकारणत्वाभावात्—क. [11] कुतः—क. [12] न्ते विशेषतः—क. [13] ज्ञाने स्यादिति – क.

प्रारब्धप्रतिबन्धाभावे विशिष्यते सर्वेभ्य इति विशेषो मोक्षः, तु=तद्देहपातानन्तरमेव स्यात्, तत्सद्भावे जन्मान्तरं प्राप्य स्यात् इत्यर्थः ॥ ११ ॥

[1]मद्राचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥ (समाप्तः)

॥ श्री कृष्णार्पणमस्तु ॥

तृतीयाध्यायः सम्पूर्णः

---

[1] "मद्राचार्य" इत्ययं श्लोकः—क.ग. नास्ति ।

# अथ चतुर्थाध्यायस्य प्रथमः पादः

श्रीगुरुभ्यो नमः

विष्णुर्ब्रह्म तथाऽऽदातेत्येवं नित्यमुपासनम् ।
कार्यम् ॥

---

हरिः ओम्

[1]यस्य मूर्ध्नि करं न्यस्य मनुं धन्वन्तरेर्जपेत् ।
स वीतरोगो रोगी स्यात् तं हरिं सततं भजे ॥ १ ॥

एवं वैराग्यादि[2]साधनैः [3]सम्प्रसन्नः परमेश्वरः कीदृशं फलं प्रयच्छतीत्यतः कर्मक्षयोत्क्रान्तिमार्गभोगाख्यफलनिरूपणार्थं चतुर्थाध्यायः प्रवृत्तः ॥

तत्र कर्मक्षयाख्यं फलमस्मिन् पादे निरूप्यते । [4]तत्राप्यत्यावश्यकान्तरङ्गसाधनं प्रथमतो निरूप्यते ।

[श्रवणादीनां आवृत्तिः कार्या इति प्रतिपादनम्]

## ॥ ओं ॥ आवृत्तिरसकृदुपदेशात् ॥ ओं ॥ ४–१–१

श्रवणादीनामावृत्तिः कार्या । कुतः ? १"स आत्माऽतत्त्वमसि [5]श्वेतकेतो" इत्युद्दालकेन श्वेतकेतुं प्रति असकृदुपदेशादिति सूत्रार्थः ॥

अत्र श्रवणादिकं [6]सकृदेवानुष्ठेयं, तावतैव श्रवणादिविधिपर्यव-

---

१ छान्दोग्योपनिषत् । (६—८—७)

[1] अयं श्लोकः—क·ग. नास्ति । [2] साधनसम्पन्नैः—क. [3] सम्पन्नः—क.
[4] तत्राप्यावश्यक—क. "तत्राप्यत्या" इत्यारभ्य "निरूप्यते" इत्यन्तं—ग. नास्ति ।
[5] "श्वेतकेतो"—ग. नास्ति । [6] सकृदेवानुष्ठेयं—घ.

सानात् । अन्यथा सकृदेव ज्योतिष्टोमादिकं [1]अनुष्ठाय कृती न स्यात् । एवं च विहितश्रवणाद्यनुष्ठानेन ज्ञानादर्शनात् न श्रवणादि ज्ञानसाधनमिति प्राप्ते—

आवृत्तिरेव श्रवणादीनां फलहेतुः । न सकृदनुष्ठानं, अपरोक्षज्ञान-सिद्धये उद्दालकेन नवकृत्वः श्वेतकेतुं प्रति तत्वस्योपदिष्टत्वात् । [2]श्रुत-विद्यस्यापि भृगोः १"स तपोऽतप्यत । पुनरेव वरुणं पितरमुपससार" इति पुनः पुनः वरुण प्रति [3]आवृत्तिलिङ्गाच्च ।

२"नित्यशः श्रवणं चैव मननं ध्यानमेव च ।
कर्तव्यमेव पुरुषैः ब्रह्मदर्शनमिच्छुभिः ॥"

इति स्मृतेश्च । एवञ्चावृत्तौ नियमेन फलोपलम्भात् श्रवणादिकं ज्ञानसाधन-मिति सिद्धान्तः कृतः ॥

तस्य [4]तात्पर्यमाह—[5]**नित्यमुपासनं कार्यमिति** ॥ नित्यं सर्वदा बहुवारमिति यावत् । उपासनं-शास्त्राभ्यासदिरूपश्रवणादिकं कार्यम् ।

३"उपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपा परा चेति", इति युक्तेः ॥

[6]विष्णुर्ब्रह्मेत्यादेस्तु उत्तराधिकरणेषूपयोगं वक्ष्यामः ॥ १ ॥

---

१ तैत्तिरीयोपनिषत् । (३ - १—२)
२ ब्रह्मसूत्रभाष्ये एतदधिकरणे बृहत्तन्त्रवाक्यत्वेनोदाहृतम् ॥
३ ब्रह्मसूत्रानुव्याख्यानम् । (३-३-१-५२)

1 अनुष्ठाय—घ. अनुष्ठीय—ग. 2 "श्रुतविद्यस्यापि" इत्यारभ्य "इति स्मृतेश्च" इत्यन्तं—घ. नास्ति । 3 आवर्तनलिङ्गाच्च—क. 4 तात्पर्यमाह—विष्णुरिति । विष्णुः ब्रह्म पूर्णगुणः । आदाता 'मोक्षप्रद इत्येवं नित्यं सर्वदा—घ 5 'नित्यमुपासनं कार्यमिति'—घ. नास्ति । 6 "विष्णुर्ब्रह्म" इत्यारभ्य "वक्ष्यामः" इत्यन्तं—घ. नास्ति ॥

[विष्णुः मम स्वामीति उपासना कर्तव्येति निरूपणम् ]

**॥ ओं ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ओं ॥ ४-१-२**

विष्णुरात्मेत्युपदेशः उपासनं च सर्वदा सर्वथा मोक्षार्थिभिः कार्यमेव । कुतः [1]यतो महान्तः तथोपगच्छन्ति उपासते ग्राहयन्ति च, शिष्यान् प्रति उपदिशन्ति चेति सूत्रार्थः ॥

अत्र आत्मत्वं न सर्वोपास्यं । हरेः जगत्स्वामित्वस्य [2]शश्वदतिप्रसिद्धत्वात् । [3]प्रसिद्धस्योपासनं व्यर्थमेव । किन्तु अप्रसिद्धगुणोपासनस्य ज्यायस्त्वेन तदेव नित्यशः [4]कर्तव्यमिति प्राप्ते—

[5]विष्णुरात्मेत्युपासनं सदा कार्यमेव । तस्यैव मोक्षसाधनत्वात् ।

१ "आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः ।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ॥"

इति स्मृतेः । [6]न केवलं तथोपासनमावश्यकं किन्तु तथोपदेशश्च कर्तव्यः । तदभावे मोक्षासिद्धेः । [7]कुतः ?

२ "आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः ।
[8]सर्वेषां च मुमुक्षूणां उपदेशश्च तादृशः ॥
कर्तव्यो नास्य हानेन कस्यचिन्मोक्ष इष्यते" ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पर्ववाक्यत्वेनोदाहृतम् ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्राह्मपुराणवाक्यत्वेनोदाहृतम् ॥

1 "यतो"—ग नास्ति । 2 शश्वदिति—क. 3 प्रसिद्धस्य चोपासनं—क. 4 कर्तव्य इति—क. 5 विष्णरात्मेत्युपासनं सदा कार्यमेव । तस्यैव मोक्षसाधनत्वात् । न केवलं तथोपासनमावश्यकं—क. विष्णुरात्मेत्युपासनं आवश्यकं किन्तु--- ग. 6 "न केवलं तथोपसनं" इत्यारभ्य "इति स्मृतेः" इत्यन्त—घ. नास्ति । 7 'कुतः'—क घ नास्ति । 8 "सर्वेषां च" इत्यारभ्य "इति स्मृतेः" इत्यन्तं—क.घ. नास्ति ।

इति स्मृतेः ॥ न च प्रसिद्धत्वादनुपास्यत्वम् । उपासनस्य फलहेतुतायाः प्रामाणिकत्वेन प्रसिध्यप्रसिद्धिभ्यां अकर्तव्याद्यसिद्धेरिति सिद्धान्तः कृतः ॥

तस्य [1]तात्पर्यमाह— **विष्णुरादातेति । [2]एवं नित्यमुपासनं कार्यमिति ।** आदाता मोक्षस्येति शेषः । [3]स्वामीति यावत् । १"विष्णुर्हि दाता [4]मोक्षस्ये"त्युक्तेः । [5]केचित्तु विष्णुरादाता आत्मा स्वामीत्येवं नित्यमुपासनं कार्यम् । आत्मेति वाच्ये [6]आदातेत्युक्तिः आदत्ते [7]भृत्यानित्यात्मेति आत्मशब्दो योगेन [8]स्वामिवाचीति सौत्रात्मेतिपदं व्याख्यातुम् । तदुक्तमनुव्याख्याने—

"आदानार्थत्वतश्चायं आत्मशब्दः [9]पतिं वदेदित्य"पि व्याचक्षते ॥ २ ॥

———

[प्रतिमा ब्रह्मस्वरूपमिति न विजानीयात् किन्तु प्रतिमायां ब्रह्मेति विजानीयादिति समर्थनम् ]

**॥ ओं ॥ न प्रतीके न हि सः ॥ ओं ॥ ४-१-३**

नामादिप्रतीके ब्रह्मदृष्टिः न कार्या । कुतः ? हि यस्मात् सः

१ महाभारततात्पर्यनिर्णयः । (१ – ७९)

[1] तात्पर्यमाह—विष्णुर्ब्रह्म तथादातेति नित्यमुपासनं कार्यमिति—क. तात्पर्यमाह–विष्णुर्ब्रह्म तथादातेति एवं नित्यमुपासनं कार्यमिति—ग. [2] 'एवं'—क नास्ति । [3] यामीति यावत्—क. "स्वामीति यावत्"—घ नास्ति [4] मोक्षस्येत्युक्तेः । हेतुगर्भमेतत् । अतः जगत्स्वामीति लभ्यते । हेतुहेतुमद्भावेनैवोपासने महाफलमस्तीति सूचनाय हेतूपन्यासःकृतः इति ज्ञातव्यम् । यद्वा आत्मेति वाच्ये आदातेत्युक्तिः आदत्ते भृत्यानित्यात्मेत्यात्मशब्दो योगेन स्वामिवाचीति सौत्रात्मपदं व्याख्यातुमिति द्रष्टव्यम् ॥—घ [5] "केचित्तु विष्णुरादाता" इत्यारभ्य "व्याचक्षते ॥ २ ॥" इत्यन्तं—घ. नास्ति । [6] आदेतेत्युक्तिः—ग [7] भृत्यानात्मेति—ग. [8] स्वामीति–क. [9] पतिं वदेत्यपि—क.

विष्णुः प्रतीकं न भवतीति सूत्रार्थः ॥

अत्र नामवागादिकं ब्रह्मतयोपास्यं, १"नामब्रह्मेत्युपासीत" [1]इत्यादि सामानाधिकरण्यश्रुतेः इति प्राप्ते—

न प्रतीके ब्रह्मदृष्टिः कार्या। मिथ्योपासनस्य अनर्थहेतुत्वात्। [2]कथं तर्हि तदुपासना कार्या इति चेत्। [3]नामादिस्थत्वेनैवेति ग्रहाण। [4]प्रथमाश्रवणात् [5]कथमस्यार्थस्य लाभः इति [6]चेन्न। २"[7]सप्तसु प्रथमे' ति वचनेन [8]प्रथमायाः सप्तम्यर्थत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह--**एवं [9]तथा नित्यमुपासनं कार्यमिति** ॥ तथाशब्दोऽवधारणार्थः। अव्ययानामनेकार्थत्वात्। तथाच एवं तथा [10]एवमेव स्वामित्वेनैव [11]नित्यमुपासनं कार्यं न प्रतीकैक्येनेत्यर्थः ॥ ३ ॥

---

[भगवतः ब्रह्मत्वेनोपासना कार्या इति प्रतिपादनम्]

**॥ ओं ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ओं ॥ ४-१-४**

आत्मनि ब्रह्मदृष्टिः ब्रह्मत्वोपासनं कार्यं, कुतः? उत्कर्षात्। तथोपासनस्य भगवत्प्रसादोत्कर्षसाधनत्वादिति सूत्रार्थः ॥

---

१ छान्दोग्योपनिषत्। (७—१—५)

२ महाव्याकरणसूत्रम् ॥

[1] इत्यादिश्रुतेः इति प्राप्ते—घ [2] कथ तदुपासना कार्या—क. कथं तर्हि उपासना कार्या—ग घ. [3] नामादिस्थत्वेनेति ग्रहण—क. नामादिस्थत्वेनैवेति ग्रहण—ग. [4] द्वितीयाश्रवणात्—घ [5] कथमस्यार्थलाभः—ग. [6] चेन्न सुपां सुपो भवन्तीति कात्यायनवचनेन—घ [7] 'सप्तसु प्रथमेति'—घ. नास्ति। [8] द्वीतीयायाः—घ. [9] तथापि क. [10] 'एवमेव'—ग नास्ति। [11] नित्यमित्युपासनं—क.

अत्र न ब्रह्मत्वं [1]सर्वदोपास्यं, भगवत्प्रसादार्थं [2]हि तदुपासनं कार्यं, तस्य [3]च विविधगुणोपासनेनापि सम्भवादिति प्राप्ते—

कार्यमेव सर्वदा ब्रह्मत्वोपासनम् । यतः ब्रह्मत्वोपासनं नाम [4]सर्वोत्कृष्टत्वोपासनमेव । सर्वोत्कृष्टत्वोपासनं च अन्योपासनेभ्यो [5]अतिशयेन [6]भगवत्प्रसादहेतुः [7]तदुक्तम् ।

१ "ब्रह्मदृष्टया सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् ।
[8]महत्ववाची शब्दोऽयं महत्वज्ञानमेव हि ॥
सर्वतः प्रीतिजनक [9]अतस्तत्सर्वथा भवेत्" ॥

इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विष्णुर्ब्रह्म इति** ॥ [10]सर्वोत्कृष्ट इत्युपासनं कार्यमिति । [11]नित्यं आपद्युपासनं कार्यमिति ।

२ "आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।
गुणानां स्मरणाऽशक्तौ विष्णोर्ब्रह्मत्वमेव तु ॥
स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेत्" ॥

इति स्मृतेः ॥ ४ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे नारायणतन्त्रवाक्यत्वेनोदाहृतम् ॥

[1] सदोपास्यं—घ. [2] 'हि'—ग. नास्ति । [3] 'च'—ग. नास्ति । [4] सत्त्वोत्कृष्टत्वोपासनं —ग. [5] अतिशयत —ग. [6] भगवत्प्रसादहेतुः इति सिद्धान्तः कृतः—घ. [7] "तदुक्तं" इत्यारभ्य "सर्वथा भवेत्" इत्यन्तं —घ. नास्ति ॥ [8] महत्ववाचि—क. [9] अतस्तत्सथा —क. [10] "सर्वोत्कृष्ट" इत्यारभ्य "कार्यमिति" इत्यन्तं — घ. नास्ति । [11] "नित्यं आपद्युपासनं" इत्यारभ्य "इति स्मृतेः" इत्यन्तं —क.ग. नास्ति ॥

[आदित्यादिदेवैः स्वाश्रयत्वेन भगवदङ्गोपासनं कार्यं इति समर्थनम् ]

**॥ ओं ॥ आदित्यादिमतय[1]श्चाङ्ग उपपत्तेः ॥ ओं ॥　　४–१–५**

[2]अङ्गे भगवदङ्गेषु आदित्यादिमतयश्च आदित्यादिदेवैः स्वाश्रयत्वेनोपासनाश्च [3]कार्याः । कुतः? उपपत्तेः । मुक्तौ तत्र [4]प्रवेशस्य अपेक्षितत्वं इत्युपपत्तेरिति सूत्रार्थः ॥

अत्र न देवैः स्वाश्रयत्वेन सदा भगवदङ्गोपासनं कार्यं सूर्यादीनामितस्ततः सञ्चरणेन सदा भगवच्चक्षुराद्याश्रितत्वाभावात् । तथाप्युपासने अन्यथोपासनत्वेनानर्थप्रसङ्गादिति प्राप्ते -

कार्यमेवादित्यादिदेवैः स्वाश्रयत्वेन [5]सदा भगवदङ्गो[6]पासनं । मुक्तौ तत्र प्रवेशस्य अपेक्षितत्वेन तथोपासनस्य तत्साधनत्वेनावश्यकत्वात् ।

१ "[7]स्वोत्पत्त्यङ्गं च देवानां [8]विष्णोश्चिन्त्यं [9]सदैवत्वि"ति स्मृतेश्च । न चान्यथोपासनेनानर्थप्रसङ्गः । नित्यं रूपान्तरेणाङ्गानां स्वाश्रयत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**तथा नित्यमुपासनं कार्यं इति ।** यथा भगवदङ्गेषु आश्रितः तथेत्यर्थः ॥ ५ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे नारायणतन्त्रवाक्यत्वेनोदाहृतम् ।

[1] श्चाङ्गवदुपपत्तेः—क. [2] अङ्गे भगवदङ्गे—ग. [3] कार्या—क. उपासना कार्या—ग. [4] प्रवेशस्यापेक्षितत्वात्—क. प्रवेशस्योपपादितत्वात्—ग. [5] 'सदा'—क.घ. नास्ति । [6] पासनं कार्यं—ग. [7] स्वोत्पत्त्यङ्ग च—क [8] विष्णोश्चित्यं—क. [9] सवैवत्विति—क.

[पद्माद्यासनयुक्तेनैव उपासना कार्या इति साधनम् ]

॥ ओं ॥ आसीनः सम्भवात् ॥ ओं ॥ ४-१-६

आसीनः [1]आसने उपविष्टः ध्यानं [2]कुर्यात् । कुतः? सत्येवासने [3]सम्यगुपासनस्य सम्भवादन्यथा असम्भवादिति सूत्रार्थः ॥

अत्र नासनं सर्वथापेक्षितं, तत्कृत्याभावात् । भगवद्दर्शनार्थं हि उपासनाद्यन्वेष्टव्यं, उपासनादिकं च विनाप्यासनेन सिध्यति । अन्यथा

१ "स्मर्तव्यः सततं विष्णुः [4]विस्मर्तव्यो न जातुचित्" ।
[5]इति सर्वदोपासना[6]विधीनामनुपपत्तिप्रसङ्गादिति प्राप्ते—

[7]पद्माद्यासनयुक्तेनैव [8]जिज्ञासुना विशेषतः उपासनं कार्यम् । सत्येवासने उपासनस्य सम्यक् सम्भवात् । न चैतावता "स्मर्तव्यः सततं विष्णुः" इत्युक्तसर्वदोपासनाऽसम्भव इति मन्तव्यम् । ध्यानोपासनार्थमेवासननियमाभिधानात् । उपासनं हि द्विविधं, स्मरणं ध्यानं चेति । तत्र स्मरणं सर्वदा योग्यं, ध्यानोपासनन्तु आसन एवेति ।

२ "[9]स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।
स्मरणं सर्वदा योग्यं ध्यानोपासनमासने" ॥ इति स्मृतेरिति सिद्धान्तः कृतः ॥

---

१ महाभारततात्पर्यनिर्णयः । (२—७३) सदाचारस्मृतिः ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे नारायणतन्त्रवाक्यत्वेनोदाहृतम् ।

[1] आसीने—क. [2] कार्यम्—क. [3] सम्यगुपासीनस्य—क [4] 'विस्मर्तव्यो न जातुचित्'—ग.घ. नास्ति । [5] इत्यादिसर्वे—क. [6] विधीनामुपपत्ति—क. [7] पद्मापद्मासन—ग. [8] जिज्ञासुविशेषतः—क. [9] "स्मरणोपासनं" इत्यारभ्य "द्विधा" इत्यन्तं घ. नास्ति ।

तस्य तात्पर्यमाह—**तथोपासनं कार्यमिति** ॥

१"उपविश्यासने [1]युञ्ज्याद्योगमात्मविशुद्धये"। इति स्मृतौ यथोक्तं [2]तथा=तदुक्तप्रकारेण आसने उपविश्य ध्यानोपासनं कार्यमित्यर्थः ॥ ६ ॥

---

[ज्ञानप्राप्त्यनन्तरमपि मोक्षप्राप्तिपर्यन्तं ध्यानं कार्यं इति प्रतिपादनम् ]

**॥ ओं ॥ आ प्रायणात् तत्रापि हि दृष्टम् ॥ ओं ॥**　४-१-७

[3]आ प्रायणं मोक्षपर्यन्तं ध्यानं कार्यं, [4]कुतः? दृष्टं हि, दृष्टं श्रुतिः हि यस्मात् २"[5]प्रायणान्तमि"ति श्रुतिः अस्ति। [6]कैमुत्यन्यायेनाप्याह—तत्रापीति। मुक्तावपीति। मुक्तावपि ध्यानं कुर्वन्ति किमु ततः प्रागित्यर्थः। तदपि कुतः इत्यत उक्तं—दृष्टं हीति। ३"मुक्तावपि ह्येनमुपासते" इति [7]श्रुतिः यतः इति सूत्रार्थः ॥

अत्र मुमुक्षुणा ज्ञानपर्यन्तमेव ध्यानं कार्यं, तद्दर्शनार्थमेव श्रवणादि-विधानात्। ज्ञानार्थं विहितस्य मुक्तिपर्यन्तमनुष्ठाने प्रमाणाभावादिति प्राप्ते—

---

१ भगवद्गीता। (६—१२)

२ षट्प्रश्नोपनिषत्। (५—१)

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे सौपर्णश्रुतित्वेनोदाहृतम्।

[1] युञ्ज्याद्योगमात्मन सिद्धये—क. युञ्ज्यात् इति स्मृतौ—घ. [2] 'तथा'—ग. नास्ति। [3] आप्रायणात्—ग. [4] 'कुतः'—क.घ. नास्ति। [5] प्रायणं तमिति—क [6] कैमुत्येनाप्याह—ग. [7] श्रुतः इति सूत्रार्थः—क.

**आपद्यपि ब्रह्म तेन यात्यपरोक्षताम् ।**

कर्तव्यमेव मुमुक्षुणा [1]मोक्षपर्यन्तं ध्यानम् । [2]"प्रायणान्तमोङ्कारमभिध्यायीत" इति श्रुतेः । ओङ्कारो हरिः । १"आविमुक्तेः विधिर्नित्यं स्वत एव ततः परम्" ॥ इति स्मृतेश्चेति सिद्धान्तः [3]कृतः ॥

तस्य तात्पर्यमाह—[4]**आपद्युपासनं कार्यमिति ।** आपद्यपि लिङ्गभङ्गरूपमहापद्यपि मुक्तावपीति यावत् ! [5]उपासनं दृष्टमिति शेषः । मुक्तिपर्यन्तं उपासनं कार्यमिति किमु वक्तव्यमिति कैमुत्य[6]द्योतनार्थं अपिशब्दः । एवमु[7]पासनस्यावश्यानुष्ठेयत्वमुपपाद्य उपासनस्य फलमाह—**तेनेति ।** तेनोपासनेन ध्यानरूपेणापरोक्ष्यतां [8]अपरोक्षज्ञानविषयतां [9]अधिकारिणामिति शेषः । यातीत्यर्थः ॥ ७ ॥

---

[भगवदपरोक्षज्ञानेनैव पूर्वपापविनाशः उत्तरपापाश्लेषश्च इति निरूपणम् ]

**॥ ओं ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ओं ॥ ४-१-८**

तदधिगमे ब्रह्मापरोक्षज्ञाने उत्तराघस्याश्लेषः पूर्वाघस्य विनाशः कुतः [10]तद्व्यपदेशात् । २"[11]तद्यथा पुष्करपलाश [12]आप" इति श्रुतौ अश्लेषस्य

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्माण्डपुराणवाक्यत्वेनोदाहृतम् ।

२ छान्दोग्योपनिषत् । (४—३—७)

[1] मोक्षपर्यन्तमेव—क. [2] प्रमाणान्त—क. [3] "कृतः"—क. नास्ति [4] आपद्युपासन मिति—क. [5] 'उपासनं दृष्टमिति शेषः'—घ नास्ति । [6] द्योतनार्थम् । तत्र हि दृष्टमिति सूत्रानुसारेणापि शब्दः । एवं—क. [7] पासनस्यानुष्ठेयत्व—ग. [8] अपरोक्षंविषयतां—क.ग. [9] अधिकारिण इति—घ. [10] तद्व्यपदेशात्—क. [11] तथा तद्यथा —क. [12] 'आपः'—ग नास्ति ।

१"[1]तद्येशीका तूलमिति" श्रुतौ नाशस्य च व्यपदेशादिति सूत्रार्थः ॥

[2]अत्र न ज्ञानेन मोक्षः [3]प्रागापादितकर्मणां भावात् । [4]न च तानि ज्ञानजन्मनि भुज्यन्ते । विभिन्नानेकशरीरफलकर्मणां भावात् । [5]न चैकत्र कायव्यूहेन युगपद्भोगः [6]विभिन्नदेशकालविपाकत्वात् । न च क्रमेण भोगः । बहुकालान्तरितस्य ज्ञानस्य जीर्णधान्यवत् क्षीणशक्तिकत्वेन मोक्षजनकत्वासम्भवात् । न च वाच्यं ज्ञानेनैव प्राचीनकर्मणां क्षय इति । २"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" । इति स्मृतिविरोधादिति प्राप्ते—

सम्भवत्येव ज्ञानेन मोक्षः । [7]ज्ञानेनैव पूर्वपापविनाशात् उत्तरस्याश्लेषाच्च । ननु "नाभुक्तं" इति [8]स्मृतिविरोध इति चेन्न । यथा खलु प्रायश्चित्तविधिबलादेतत्स्मृतेः अकृतप्रायश्चित्तविषयत्वं [9]कल्प्यते [10]तथा अज्ञानिविषयत्वस्यापि सम्भवात् । न चात्र मानाभावः ।

"तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते
[11]एवं विदि पापं कर्म न श्लिष्यते ।"

"[12]तद्यथेषीका तूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः

१ छान्दोग्योपनिषत् । (५—२४ - ३)

२ ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिकायां एतदधिकरणे उदाहृतं प्रमाणम् ।

1 तद्यैषीका—क. 2 अत्र ज्ञो न मोक्षः—क. अत्र न यज्ञेन मोक्षः—ग.घ. 3 प्रागादितकर्मणां—क. 4 "न च तानि" इत्यारभ्य "भावात्" इत्यन्तं—क.ग. नास्ति । 5 न चैकाव्यूहन—क. 6 विभिदेशकाल—क.ग. 7 ज्ञानेनात्र सर्वपापविनाशात्—क 8 श्रुतिविरोधः - क. 9 कल्पते—क 10 यथा न विषयत्वस्यापि—क. 11 "एवं विदिय" इत्यारभ्य "न श्लिष्यते" इत्यन्तं—क. नास्ति । 12 तद्यथैका तूलमिति श्रुतेः—क. तद्यथैषीका तुल—घ.

**प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः ।**
**अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥**

---

प्रदूयन्त'' इति श्रुतेः । न चैवं सति ज्ञानोदयानन्तरमेव मोक्षापत्तिः । [1]अप्रारब्धानामेव कर्मणां विनाशाङ्गीकारेण प्रारब्धभोगाय [2]विलम्बस्य भाव्यत्वादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**प्रारब्धेति** ॥ [3]यस्य कर्मणः फलं भोक्तुमारब्धं तत् प्रारब्धं, यस्य कर्मणः फल भोक्तुं नारब्धं तत्सञ्चितम् । ज्ञानोत्तरकृतं कर्म आगामीत्युच्यते, इति [4]विज्ञेयम् । तत्र [5]प्रारब्ध कर्मणः [6]अन्यस्योभयस्य सञ्चितस्यागामिनश्च सर्वस्यानिष्टस्य [7]अनिष्टफलस्य पुण्यस्य समग्रस्य पापस्य च ज्ञानादेव [8]अपरोक्षज्ञानादेव परिक्षयः=अश्लेषश्च भवतीति शेषः । अन्यस्य उक्तोभयान्यस्य [9]प्रारब्धकर्मण इत्यर्थः । सर्वस्यापि [10]प्रारब्धपुण्यस्य [11]प्रारब्धपापस्य च भोगतः [12]भोगेनैव परिक्षयो [13]भवतीत्यर्थः । [14]प्रारब्धस्यैवेति वक्तव्ये अन्यस्येत्युक्तिः प्रारब्धपुण्यपापोभयग्रहणाय । अयं भावः । ज्ञानिनां कर्म त्रिविधम् । सञ्चितं प्रारब्धं [15]आगामि चेति । सञ्चितं द्विविधम् । पुण्यं पापं चेति ।

[1] आरब्धानामेव—क. प्रारब्धानामेव ग. [2] विलंस्य—क. [3] तस्य—क. [4] ज्ञेयम्—ग.घ. [5] प्रारब्धकर्मणः अन्यस्य उभयस्य सञ्चितस्य आगामिनश्च अनिष्टस्य इष्टपुण्यव्यतिरिक्तस्य सर्वस्यापि काम्यपुण्यस्य पापस्य च ज्ञानादेव—घ. [6] "अन्यस्योभयस्य" इत्यारभ्य "पापस्य च" इत्यन्तं—घ. नास्ति । [7] "अनिष्टफलस्य"—ग. नास्ति । अनिष्टफलस्य समग्रपापस्य च —क. [8] 'अपरोक्षज्ञानादेव'—क नास्ति । [9] "प्रारब्धकर्मण इत्यर्थः"—क.ग. नास्ति । [10] "प्रारब्ध" इत्यारभ्य "पापस्य च" इत्यन्तं —घ. नास्ति । [11] प्रारब्धस्य—ग. [12] "भोगेनैव"—घ नास्ति । [13] भवतीति इत्यर्थः —क. [14] ''प्रारब्धस्यैवेति'' इत्यरभ्य ''उभयग्रहणाय'' इत्यन्तं —क घ नास्ति । ''प्रारब्धस्यैवेति'' इत्यारभ्य ''अयं भावः'' इत्यन्तम्—क. नास्ति । [15] आगामीति चेति—क.

पुण्यं द्विविधम् । अकाम्यं काम्यं चेति । [1]काम्यं द्विविधम् । इष्टमनिष्टं चेति । तत्र अकाम्य[2]पुण्यस्यापरोक्षज्ञाने उपयोगः । [3]काम्यं द्विविधम् । इष्टमनिष्टं च । तत्र [4]काम्येष्टपुण्यस्य ज्ञानेन नाशो नास्ति किन्तु प्रारब्धवत् भोगेनैव नाशः । अतः [5]सञ्चितमध्ये काम्यमनिष्टं [6]पुण्यं [7]समग्रं पापं च ज्ञानादेव [8]नश्यति ।

[9]प्रारब्धं द्विविधं पुण्यं पापं चेति । अस्य सर्वस्यापि भोगेनैव नाशः । आगामि द्विविधम् । पुण्यं पापं चेति । पुण्यं द्विविधम् । अकाम्यं काम्यं चेति । काम्यं द्विविधम् । [10]इष्टमनिष्टं चेति । तत्राकाम्य पुण्यं [11]आनन्दातिशयहेतुः, काम्येष्टपुण्यं ज्ञानिना भुज्यते । अनिष्टपुण्यस्याश्लेषः । तच्च सुहृद्भिः भुज्यते । "सुहृदः साधुकृत्यामि"ति श्रुतेः । पापमपि द्विविधम् । अल्पं महच्चेति । तत्र देवानां मनुष्यादीनां च अल्पपापस्याश्लेषः । तच्च द्वेषिभिः भुज्यते । "द्विषन्तः [12]पापकृत्यामि"ति श्रुतेः । महता पापेन च मनुष्याणां [13]स्वयोग्यतापेक्षया क्लृप्तस्यैवानन्दस्य ह्रासो भवति । देवानां च महता पापेन क्लृप्तस्य हानिर्नास्ति । किन्तु स्वयोग्यतापेक्षयाधिकसाधनेन यदानन्दादिकं मोक्षे भोक्तव्यतया प्रसक्तं [14]तस्य [15]यश्च क्लृप्तस्यैवानन्दादेः समुद्रतरलोपमः, उन्नाहः मोक्षे [16]प्राप्यः । [17]तस्याप्यभावो भवतीति ॥ ८ ॥

[1] "काम्यं द्विविधं" इत्यारभ्य "मनिष्टं चेति" इत्यन्तं—घ. नास्ति । [2] पुण्यपापस्य—क. [3] "काम्यं द्विविधं" इत्यारभ्य "तत्र" इत्यन्तं—क.ग. नास्ति । [4] काम्येषु पुण्यस्य—घ. [5] सञ्चिते—घ. [6] पुण्यं पुण्यं—क. [7] समग्रपापं—क. [8] नश्यति । प्रारब्धकर्मादौ विशेषस्तु विशेषग्रन्थादनुसंधेयः ॥ ८ ॥—घ [9] "प्रारब्धं द्विविधम्" इत्यारभ्य "भवतीति ॥ ८ ॥" इत्यन्तो भागः – घ. नास्ति । [10] इष्टमनिष्टं च—क. [11] आनन्दातिशयज्ञानहेतुः—क [12] पापकृत्यमिति —क. [13] स्वयोग्यतापेक्षया क्लिष्टस्यैव—क. [14] 'तस्य'—ग.घ. नास्ति । [15] यस्य —क. [16] पापः—क. [17] तस्याप्यभावे— क.

[1]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

॥ श्री कृष्णार्पणमस्तु ॥

1 "मदाचार्य" इत्यय श्लोकः—क.ग. नास्ति

## अथ चतुर्थाध्यायस्य द्वितीयः पादः

श्रीगुरुभ्यो नमः

उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा ॥
वायुर्विष्णुं प्रविश्यैव भोगांश्चैवोत्तरोत्तरम् ।
उत्क्रम्य मानुषा मुक्तिं यान्ति

---

हरिः ओम्

[1]पद्मासने सन्निषण्णं १रत्नाकल्पसमञ्चितम् ।
सुन्दरं पीतवसनं वामनं [2]भावयाम्यहम् ॥ १ ॥

[3]देवानां स्वोत्तमप्रवेशेन लयरूपं तदितरेषां चोत्क्रान्तिरूपं देहक्षयाख्यं फलमस्मिन् पादे निरूप्यते ।

तत्र यत्र देवतालये विवादः सः विचार्यते ॥

[उमा रुद्रे विलीयते इति प्रतिपादनम्]

**॥ ओं ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ओं ॥ ४-२-१**

[4]वाक् मनसि लीयते । कुतः ? वाचो मनोवशत्वदर्शनात् । तथा श्रुतेरिति सूत्रार्थः ॥

---

१ रत्नाभरणैः पूजितमित्यर्थः ॥

[1] "पद्मासने" इत्ययं श्लोकः—क.ग. नास्ति ॥ [2] भावयाम्यहम् ॥ १ ॥ देवानां तदितरेषां च क्रमेण देहलयोत्क्रान्तिरूपदेहक्षयाख्यं फलमस्मिन्पादे निरूप्यते—घ. [3] "देवानां" इत्यारभ्य "स विचार्यते"—घ. नास्ति । [4] वाक् मनसि लीयते । तथाहि । तदधीनस्य—क. "वाक् मनसि" इत्यतः "सूत्रार्थः" इत्यन्तं—घ नास्ति ।

[1]अत्र वाङ्मनसि न लीयते । तथाहि । तदधीनस्य तत्र लयो वक्तव्यः । न च वाङ्मनसोः [2]नियमत्वादि निश्चेतुं शक्यते । नियामकाभावेन वैपरीत्यस्यापि सुवचत्वादिति प्राप्ते —

अस्त्येव वाचो मनसि लयः । [3]प्रत्यक्षतो वाचो मनोवशत्वदर्शनात् । १"[4]मनसा वाऽग्रे सङ्कल्पयत्यथ वाचा व्याहरति" [5]इति श्रुतिसिद्धयुक्तेश्च । २"यावन्न वाङ्मनसि सम्पद्यत इति शब्दाच्चेति सिद्धान्तः कृतः ॥

अत्र [6]वाक्शब्देन उमोच्यते । मनश्शब्देन रुद्र [7]उच्यते ।

३"उमा वै [8]वाक्समुद्दिष्टा मनो रुद्र उदाहृतः ।
तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्विहीयते" ॥

इति [9]वचनादिति ज्ञेयम् ॥ १ ॥

---

[मनोभिमानी रुद्रः प्राणे विलीयत इति निरूपणम् ]

॥ ओं ॥ तन्मनः प्राण उत्तरात् ॥ ओं ॥ ४-२-२

तत् पूर्वोक्तं मनः प्राणे चतुर्मुखे [10]विलीयते । कुतः ? उत्तरात् । "मनः प्राणे" इति "वाङ्मनसि सम्पद्यत" इति पूर्वोदाहृतवाक्यादिति सूत्रार्थः ॥

---

१ न्यायविवरणे एतदधिकरणे उदाहृतं प्रमाणम् ।

२ छान्दोग्योपनिषत् । (६—१५—१)

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे स्कान्दपुराणवाक्यत्वेनोदाहृतम् ।

[1] वाङ्मनसि लीयते कुतः तदधीनस्य—ग. [2] नियमत्वादिति—क. [3] प्रत्यक्षत एव वाचो—क. प्रत्यक्षतो वाचां—ग. [4] मनसा वा सङ्कल्पयत्यथ—क. मनसा वाग्रे सङ्कल्प्याथ—ग. [5] 'इति'—क. नास्ति । [6] वाक्शब्देनोच्यते—ग. [7] 'उच्यते'—घ. नास्ति । [8] वाक्यमुद्दिष्टा—क. [9] 'वचनादिति'—ग. नास्ति । [10] लीयते—क.

अत्र न प्राणे मनो [1]विलीयते । तत्समत्वात् । दृश्यते हि [2]प्राणस्य सर्वप्रवृत्तिहेतुत्ववत् मनसोऽपि सर्वप्रवृत्तिहेतुत्वम् । न च [3]तज्जन्यत्वात्तत्र लयः । मानाभावादिति प्राप्ते—

लीयत एव मनः प्राणे । १"वाङ्मनसि सम्पद्यते मनः प्राण" इति श्रवणात् । न च [4]तदनुत्पन्नत्वात्तत्र लयाऽसम्भवः । २"वायोर्वाव रुद्र उदेती"ति श्रुतेः । न च तयोः [5]श्रेष्ठत्वसाम्य, ३"मनः [6]उदक्रामत् मीलित इवाश्नन् पिबन्नास्ते । प्राण उदक्रामत् [7]तत्प्राण उत्क्रान्ते अपद्यत [8]मनः प्रविशद्दशयदेव प्राणः प्राविशत् । तत्प्राणे [9]प्रपन्न उदतिष्ठदित्यादेः" इति सिद्धान्तः कृतः ॥ २ ॥

———

[प्राणः परमात्मनि लीयत एवेति समर्थनम्]

॥ ओं ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ओं ॥ ४–२–३

स प्राणः अध्यक्षे परमात्मनि लीयते । कुतः ? तदुपगमादिभ्यः । तदुपगमः तत्प्राप्तिः । आदिपदेन तदधीनत्वादि ग्राह्यम् । [10]तेन च तद्बोधकश्रुत्यादिकं गृह्यते । ४"प्राणः परमुपगच्छति । प्राणः [11]परम-

१ छान्दोग्योपनिषत् । (६—१५—१)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ।

४ बृहदारण्यकोपनिषत् ।

[1] लीयते—क. [2] प्राणस्ये —ग. [3] जन्यत्वात्—क [4] तदुत्पन्नत्वात्—क [5] श्रेष्ठकत्वसाम्यं—क [6] उदक्रमत् मीलित—ग. उदक्रमत् मीलित—घ. उदक्रामत् लीयत—क [7] प्राण उत्क्रान्ते—क. [8] मनः प्रविशदेव—क. मनः प्रविशतदशय—ग. [9] प्रपन्नुदतिष्ठत्—फ. [10] न तद्बोधक—ग. [11] परमनुप्राणति—ग.

नुप्राणिति । १ "अग्निरिन्द्रं [1]तथेन्द्रश्च वायुमाविश्य सोऽपि तु । आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् ॥" इत्यादि तदुपगमादिप्रतिपादकश्रुतिस्मृतिभ्यः इति सूत्रार्थः ॥

अत्र न प्राणः परमात्मनि लीयते । तस्य [2]तदनधीनत्वात् । न च वाच्यं [3]चक्षुरादिवत् तत्सह[4]शिष्ट्यादिभ्यः इत्यादौ प्राणस्य तदधीनत्वं उक्तमिति [5]तस्यानन्दाधीनत्वे बहुश्रुतिसद्भावादिति प्राप्ते—

प्राणः परमात्मनि लीयत एव । तस्य तदधीनत्वात् । न च तदनिर्णयः । तदधीनत्वेऽ[6]पि बहुश्रुतिसद्भावात् । न च साम्यम् । तदधीनत्वश्रुतीनां निरवकाशत्वात् । तदनधीनश्रुतीनां तु ईश्वरान्याधीनत्वाभावपरत्वेन सावकाशत्वात् । सावकाशनिरवकाशयोः निरवकाशस्य प्राबल्यादिति सिद्धान्तः कृतः ॥ ३ ॥

---

[न अग्नावेव सर्वेषां देवानां लयः किन्तु पञ्चसु भूतेषु लय इति प्रतिपादनम् ]

॥ ओं ॥ भूतेषु तच्छ्रुतेः ॥ ओं ॥ ४–२–४

[7]ये विशिष्योक्तेभ्योऽन्ये देवाः ते सर्वेषु भूतेषु विलीयन्ते, [8]नैकस्मिन्नग्नाविति बहुवचनार्थः । कुतः? तथा श्रुतेरिति सूत्रार्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः ।

[1] यथेन्द्रश्च—क [2] तदधीनत्वात्—क. [3] चक्षुरादिवत्सह—ग. [4] शिष्यादिभ्यः—क. [5] तस्यानधीनत्वेन—ग. [6] पि श्रुत्यादिबाहुल्यसद्भावात्. घ. पि श्रुत्यादिबाहुलसद्भावात्—क. [7] यो—ग. [8] नैतमाविति—क.

अत्र अग्नावेव सर्वेषां देवानां लयः। [1]नान्यभूतेषु। १"अग्नौ सर्वे देवा विलीयन्ते" इति श्रुतेः इति प्राप्ते—

नाग्नावेव सर्वेषां [2]लयः, ये विशिष्योक्तेभ्योऽन्ये देवास्तेषा पञ्चसु भूतेषु लयः। न त्वेकस्मिन्नग्नावेव। २"भूतेषु देवा लीयन्ते" इति श्रुतेः। न "चाग्नौ सर्वे देवाः" इति श्रुतिविरोधः। भूतेष्विति निरवकाशबहुवचनश्रवणबलेन पूर्वश्रुतेः सङ्कोचनीयत्वादिति सिद्धान्तः कृतः ॥ ४ ॥

---

[यो यत्र निर्दिष्टः तस्य तत्र लयः अनिर्दिष्टानां सर्वेषां देवानां अग्नौ लय इति निरूपणम्]

**॥ ओं ॥ नैकस्मिन् दर्शयतो हि ॥ ओं ॥ ४-२-५**

एकस्मिन्नग्नावेव न सर्वे देवा विलीयन्ते, कुतः? हि यस्मात् महोपनिष[3]च्चतुर्वेदशिखे च तथा दर्शयतः। तस्माद्यो यत्र निर्दिष्टः तस्य तत्र लयः अन्येषां सर्वदेवानां अग्नौ लयः इति सूत्रार्थः।

अत्र अग्नावेव सर्वेषां देवानां लयः। "अग्नौ सर्वे देवा विलीयन्ते" इति श्रुतेः। न च "भूतेषु विलीयन्त" [4]इति श्रुतिविरोधः। सर्वेषां देवानामग्नौ, अग्नेः वायौ, वायोराकाशे, लयाङ्गीकारेण भूतेषु लय स्याङ्गीकृतत्वादिति प्राप्ते—

---

१ ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिकायां एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ॥ ब्रह्मसूत्रभाष्यदीपिकायामपि एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम्।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे बृहच्छ्रुतित्वेनोदाहृतम्।

[1] तान्यभूतेषु—क. [2] लयः एव विशिष्योक्तेभ्योऽन्ये देवाः—क. ये विशिष्योक्तेभ्यो देवेभ्यो देवाः—ग. [3] चतुर्वेदशिखा च दर्शयतः—ग. [4] इति विरोधः—ग.

नैकस्मिन्नग्नावेव भूते [1]सर्वेषां देवानां लयो वाच्यः । १"[2]पृथिव्यां ऋभवो विलीयन्ते, [3]वरुणे अश्विनावग्नावग्नयो, वायाविन्द्रः । [4]तथा २"मृत्यवः पृथिव्यां, वरुणे आपो, [5]अग्नयस्तेजसि [6]मरुतो मारुते, आकाशे [7]विनायका विलीयन्ते" इति [8]श्रुतिभ्यां प्रत्येकं भूतेषु देवतालयस्योक्तत्वादिति सिद्धान्तः कृतः ॥

तदेतदधिकरणपञ्चकस्य [9]समानाभिधेयत्वात् युगपदेव तात्पर्यमाह— [10]**उत्तरेषूत्तरेष्वित्यादिना वायुर्विष्णुं [11]प्रविश्यैव इत्यन्तेन ।** [12]प्रविश्ये-त्यर्थस्य उत्तरत्रोपयोगं वक्ष्यामः । वक्ष्यमाणं मुक्तिं यान्तीत्यादिकं अत्राप्य-नुषज्यते । [13]विमुक्तिगाः मुक्तिगन्तारः, सुराः अधमदेवाः [14]उत्तरेषूत्तरेषु इति वीप्सायां द्विर्वचनम् । [15]स्वस्वोत्तमदेवेषु [16]यथानिर्देशं [17]यावद्वायुं वायुपर्यन्तं [18]प्रविश्य [19]देहलयं प्राप्य, तदन्तः तद्देहान्तः बहिर्वा निर्गत्य च भोगानेव भुञ्जते न क्लेशानित्यर्थः ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे महोपनिषद्वाक्यत्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे चतुर्वेदशिखावाक्यत्वेनोदाहृतम् ।

[1] सर्वदेवानां—ग.घ. [2] पृथिव्या—क. [3] वरुणो—क. [4] तथा ऋभवः—क. 'तथा'—ग. नास्ति [5] अग्नयो तेजसि—क. [6] मरुतो मारुतो—ग.घ. [7] विनायको—क. [8] श्रुतिभ्यो प्रत्येन्द्रं—ग. [9] समामिधेयत्वात—क.घ. समाना-भिनयत्वात्—ग [10] उत्तरेष्वित्यादिना—घ [11] प्रविश्यैवेत्यनेन - घ प्रविश्येत्यन्तेन—ग. प्रविश्येत्यनेन। वक्ष्यमाणस्य सुरा इत्यस्य अत्राप्यनुषङ्गः—क. [12] "प्रविश्येत्यर्थस्य" इत्यारभ्य "अत्राप्यनुषज्यते" इत्यन्तं—क ग. नास्ति । [13] 'विमुक्तिगाः मुक्ति-गन्तारः'—ग नास्ति । [14] उत्तरेषूत्तरेषुपीप्सायां—क उत्तरेषूत्तरेषु वीप्सायां—घ. [15] स्वस्वोत्तमेषु—घ [16] यथा निर्देशं—घ. नास्ति । [17] यावद्वायुपर्यन्तं—क [18] प्रविश्य तत्र देहक्षयात् देहलयात् मुक्तिं यान्ति । अत्र वायुशब्देन चतुर्मुखः । वायुस्तु विष्णुं प्रविश्यैव देहक्षयात् मुक्तिं यातीत्यर्थः ॥ ५ ॥—घ. [19] "देहलयं प्राप्य" इत्यारभ्य "रसयति"इत्यन्तं—घ. नास्ति ।

अनेन ॥ ओं ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ओं ॥
॥ ओं ॥ तन्मनः प्राण उत्तरात् ॥ ओं ॥
॥ ओं ॥ भूतेषु तच्छ्रुतेः ॥ ओं ॥
॥ ओं ॥ नैकस्मिन् दर्शयतो हि ॥ ओं ॥

इति चतुर्णां अधिकरणानां तात्पर्यमुक्तमिति वेदितव्यम् । [1]वायुः विष्णुं प्रविश्येत्यत्र वायुशब्देन चतुर्मुखो ग्राह्यः । वायुस्तु विष्णुं प्रविश्यैव तदन्तः बहिर्वा भोगान् भुङ्क्त इत्यर्थः ॥

अनेन ॥ ओं ॥ [2]सोऽध्यक्षे तदुपगमादिभ्यः ॥ ओं ॥

इत्यधिकरणतात्पर्यं उक्तमित्यवगन्तव्यम् । प्रलयकालेऽपि देवानां दिव्य विषयभोगोस्तीति ज्ञापयितुं प्रवेशमार्गे भोगोक्तिरित्यवगन्तव्यम् । एवमेवो- त्क्रान्तस्य [3]ज्ञानिसङ्घस्यापि तत्काले अर्चिरादिमार्गे [4]दिव्यविषयभोगोस्तीत्यपि ज्ञेयम् । तदुक्तं [5]भागवते द्वितीयस्कन्धे द्वितीयाध्याये— "घ्राणेन गन्धं रसनेन वै रसमि"ति ॥ ५ ॥

---

[न रमा परमात्मनि लीयते इति प्रतिपादनम्]

## ॥ ओं ॥ [6]समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ओं ॥ ४–२–६

न रमा परमात्मनि लीयते । कुतः ? यतः अनुपोष्य च परमु- पास्यैव । [8]अमृतत्वं नित्यमुक्तत्वम् । [9]कुतः ? असृत्युपक्रमात्=कदापि

[1] 'वायुः'–ग घ. नास्ति । [2] 'सोध्यक्षेण तदवगमादिभ्यः—क. [3] ज्ञानि- सम्बन्धस्यापि —क. [4] विप्रविषयभोगो—क. [5] 'भागवते'—ग घ. नास्ति । [6] ओं समाना चासृत्युपत्रमादमृतत्वम् चानुपोष्या ओं—क. [7] अनुपोष्या च—क. [8] अमुतत्वम्—क [9] तदेव कुतः—क तदपि कुतः—ग

संसारोपक्रमणाभावात् । तदपि कुतः? समना देशतः कालतश्च [1]न्याय्या समः समानः [2]न परमपुरुषो यस्याः सा तथोक्ता, हेतुगर्भमेतत् । ईशवत् नित्यत्वात् [3]सर्वगत्वाच्चेति सूत्रार्थः ॥

अत्र प्रकृतिः परमात्मनि लीयते । १"तेजः परस्यां देवतायां' इति श्रुतेरिति प्राप्ते—

न प्रकृतिर्लीयते, नित्यमुक्तत्वात् । [4]तदेव कुतः? कदापि संसाराभावात् । तदपि कुतः? परमपुरुषवन्नित्यत्वात् । सर्वगतत्वाच्च । न च श्रुतिविरोधः । [5]अतिसामीप्यार्थतयोपपत्तेः ।

२"हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः [6]प्रकीर्तितः ॥" इति वचनादिति [7]सिद्धान्तः कृतः ॥

[8]तस्य तात्पर्यमाह—**वायुर्विष्णुमेव प्रविश्येति ।** चतुर्मुखः विष्णुमेव प्रविश्य मुक्तिं याति । न तु प्रकृतिमित्यवधारणार्थः । कुत इति चेन्न । परमात्मविलयस्यैव मुक्तिहेतुत्वेन प्रकृतिविलयस्य मुक्तिहेतुत्वाभावात् । ३"विलीनो हि प्रकृतौ ससारमेति । विलीनः परमे ह्यमृतत्वमेतीति" श्रुतेः । तथाच प्रकृतेः परमात्मनि लयसत्वे चतुर्मुखः तत्रैव लीनो भवेत् । अतः तस्याः देहलयः तत्र नास्तीति भावः ॥ ६ ॥

---

१ छान्दोग्योपनिषत् । (६—१५—१)

२ भागवततात्पर्यम् । (एकादशस्कन्दः)

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे सौपर्णश्रुतित्वेनोदाहृतम् ।

[1] न्याय्या समानः—क. व्याख्या समः—ग [2] नापरपुरुषो क [3] सर्वगत्वाच्चेत्यपि—क. [4] "तदेव कुतः" इत्यारभ्य "सर्वगतत्वाच्च" इत्यन्तं—घ. नास्ति । [5] अतिसामीप्यतयार्थोपपत्तेः —क. [6] प्रकीर्तितम्—ग. [7] सिद्धान्तः कृतः ॥ ६ ॥—ग. सिद्धान्तः कृतः ॥ एतदधिकरणतात्पर्यंतु वायुर्विष्णुं प्रविश्येत्यादिवत् लक्ष्मीलयस्याकथनात् सूचितमिति बोध्यम् ॥ ६ ॥—क. [8] "तस्य तात्पर्यमाह" इत्यारभ्य "नास्तीति भावः" ॥ ६ ॥ इत्यन्तं—क.ग. नास्ति ॥

देहक्षयात्सुराः ।

---

[सर्वे देवाः प्राणमाविश्य परमात्मनि विलीयन्ते इति समर्थनम् ]

**॥ ओं ॥ तानि परे तथाह्याह ॥ ओं ॥ ४-२-७**

तानि सर्वाणि दैवतानि प्राणद्वारेण परमात्मनि लीयन्ते । कुतः ? हि यस्मात् १"[1]सर्वे देवाः प्राणमाविश्येति" श्रुतिस्तथाऽहेति सूत्रार्थः ॥

अत्र न देवाः परमात्मनि लीयन्ते तेषां तत्प्रतिबिम्बत्वाभावात् । प्राणस्यैकस्यैव तत्प्रतिबिम्बत्वात् । २"प्रतिबिम्बो हरेः प्राणः प्राणस्यान्याः कलाः क्रमात् ।" इति वचनात् । [2]प्रतिबिम्बस्य च बिम्बे लयनियमादिति प्राप्ते--

देवाः [3]परमात्मनि लीयन्त एव । न च प्राणप्रतिबिम्बत्वविरोधः । तेषां [4]तत्प्रतिबिम्बत्वेन तद्द्वारा परमात्मनि लयाङ्गीकारात् । ३"सर्वे देवाः प्राणमाविश्य देवे [5]मुक्ता लयं परमे यान्त्यचिन्त्य" इति श्रुतेरिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह— [6]**सुराः** [7]वायुद्वारा विष्णुं [8]प्रविश्यैव [9]तदन्तर्बहिर्वा भोगान् भुञ्जत इति । तेषां भोगे तारतम्यमाह **भोगश्चेति** ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौषारवश्रुतित्वेनोदाहृतम् ॥

२ ब्रह्मसूत्रभाष्यदीपिकोदाहृतम् प्रमाणवचनम् ।

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौषारवश्रुतित्वेनोदाहृतम् ॥

[1] सर्वेवेदाः—क. [2] प्रतिबिम्बस्य च बिम्बस्य च बिम्बे लयादिति प्राप्ते ग. [3] "परमात्मनि" इत्यारभ्य "तद्द्वारा" इत्यन्तं—ग. नास्ति । [4] प्राणप्रतिबिम्बत्वेन—क. [5] मुक्ता देवे लयं—क. [6] सुराः विमुक्तिगाः, मुक्ता संतः चतुर्मुखद्वारेति शेषः—घ. [7] 'वायुद्वारा'—घ. नास्ति । [8] प्रविश्यैव स्वेच्छया—घ [9] तदंतर्बहिरेव वा—ग.

[1]एवशब्दोऽध्याहृतेन अधिक इत्यनेन सम्बध्यते । [2]च शब्दो [3]व्यक्ति-निर्देशार्थः । तेषां भोगस्तु उत्तरोत्तरमधिक एवेत्यर्थः ॥ ७ ॥

---

[भगवदधीना एव मुक्ताः परमात्मेच्छानुसारेण कामयन्तीति समर्थनम् ]

## ॥ ओं ॥ अविभागो वचनात् ॥ ओं ॥ ४-२-८

मुक्तानां सत्यकामत्वादेरविभागः भगवदिच्छया विभागो नास्ति । [4]तदिच्छानुसारित्वमिति यावत् ! कुतः? वचनात्=तथा श्रुतेरिति सूत्रार्थः ॥

अत्र मुक्ताः स्वतन्त्रा [5]एव न पराधीनाः । मुक्तत्वादेव । [6]अस्वातन्त्र्ये संसारवत् दुःखादिप्राप्तेः । १"एते देवा एतमात्मानमनुप्रविश्य सत्याः सत्यकामाः" इति सायुज्यं प्राप्तानां देवानां [7]सत्यकामत्वादिश्रुतेश्च । न हि परतन्त्रेषु सत्यकामादि सम्भवतीति प्राप्ते—

परमात्माधीना एव मुक्ताः । [8]न तु स्वतन्त्राः । न चोक्तश्रुतिविरोधः । श्रुतिर्हि यत्सत्यकामत्वं वक्ति । तत्तेषां सत्यकामत्वं परमेश्वरेच्छानुसारेणैवेत्यङ्गीकारात् । २"कामेन मे काम [9]आगादि"ति [10]श्रुतेः । [11]अत एव न दुःखप्राप्तिः । यदा खलु भगवदिच्छानुसारेणे-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

२ तैत्तिरीयारण्यकम् । (३—१५—४)

1 एवशब्देन अध्याहृतेन—क. 2 "च शब्दो" इत्यारभ्य "निर्देशार्थ." इत्यन्तं—क. नास्ति । 3 'व्यक्ति'—घ. नास्ति । 4 एतदिच्छा—क 5 'एव' —क. नास्ति । 6 "अस्वातन्त्र्ये" इत्यारभ्य "प्राप्तेः" इत्यन्तं—क.ग. नास्ति । 7 सत्यकामत्वादिति—घ. 8 न तु श्रुतिविरोधः—क. न त्व श्रुतिविरोधः घ 9 आगाध्हृदयादिति—ग. 10 श्रुतेरिति सिद्धांत कृतः—क. 11 "अत एव" इत्यारभ्य "कामयन्ते" इत्यन्तो भागः—क.ग. नास्ति ।

च्छन्ति तदा तदलाभेन दुःखादिः स्यात् । मुक्तास्तु भगवत्कामानुसारेणैव कामयन्ते । इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**विष्णुं प्रविश्यैव** । तं अनुसृत्यैव भोगान् भुञ्जत इति । न तु [1]स्वातन्त्र्येणेत्येवार्थः ॥ ८ ॥

———

[ज्ञानिमरणस्य अज्ञमरणसाम्यं न इति निरूपणम्]

**॥ ओं ॥ [2]तदोकोग्रज्वलनं तत्प्रकाशित[3]द्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ओं ॥ ४–२–९**

उत्क्रान्तिकाले [4]तदोकोग्रज्वलनं [5]तदोकसः भगवदोकसः हृदयस्याग्रे ज्वलनं प्रकाशो भवति । तदा ज्ञानी तत्प्रकाशितद्वारः तेन प्रकाशेन प्रकाशित[6]नाडीद्वारः सन् विद्यासामर्थ्यात्=[7]तदपरोक्षज्ञानसामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च अपरोक्षज्ञानाङ्गभूत[8]गत्यनुस्मरणयोगाच्च । [9]हार्दानुगृहीतः=[10]हार्देन [11]हृदिस्थेन विद्याप्रसन्नेन भगवतानुगृहीतः सन् [12]शताधिकया सुषुम्नानामकब्रह्मनाड्या निष्क्रामतीति सूत्रार्थः ॥

अत्र [13]ज्ञानिचरममरणं अज्ञमरणसदृशं तस्यापि अन्यमरणवत् प्रारब्धनिबन्धनत्वात् । न च तदा प्रारब्धाभावः । तस्य देहत्यागावसानत्वादिति प्राप्ते —

[1] स्वातन्त्र्येणैवेत्यर्थः—क.ग. [2] तदेक्कोग्र—क. [3] द्वारा – क. [4] तदौकोग्र—क. [5] तदोक्तभगवदोकसः—क. [6] नाडीद्वयस्सन्—क. [7] अपरोक्षज्ञान—ग. [8] गत्यनुस्मरणायोगाच्च—क. [9] हार्द्दानुगृहीतः—क. [10] हार्द्देन—क. [11] हृदिस्थितेन—क. [12] शताधिकया सुषुम्नानाड्या सुषुम्नानामकब्रह्मनाड्या—क. [13] ज्ञानिमरणं—क.

न [1]ज्ञानिचरममरणस्य [2]अज्ञमरणसाम्यं यतः उत्क्रान्तिकाले ज्ञान-सामर्थ्यात् [3]हृदयस्याग्रे प्रकाशे सति ज्ञानी तेन प्रकाशितनाडीद्वारः सन् [4]ज्ञानप्रसन्नभगवदनुग्रहेण सुषुम्ना नाड्या [5]गत्यनुस्मृतिपूर्वकं [6]देहादुत्क्रामति। न तु तथा अज्ञानी। अतो न साम्यम्। न च ज्ञानसामर्थ्यात् पूर्व-मरणस्याप्येवं विधत्वप्रसङ्गः। मार्गानुसरणरूपसहकारिविरहादिति सिद्धान्तः कृतः ॥ ९ ॥

---

[ज्ञानयोगिनः ब्रह्मप्राप्तिः कर्मयोगिनः चन्द्रप्राप्तिः इति प्रतिपादनम् ]

**॥ ओं ॥ योगिनः प्रति स्मर्येते स्मार्ते चैके ॥ ओं ॥ ४–२–१०**

एते ब्रह्मचन्द्रगती ज्ञानयोगिनः कर्मयोगिनश्च प्रति स्मर्येते। "अग्निर्ज्योतिः" "धूमो रात्रि" रित्यादौ स्मृतौ उच्येते। ज्ञानादिसाध्यतया स्मर्येते इति यावत्। न कालादिकृत इत्यर्थः। एते स्मार्ते च=स्मृतेरिमे स्मार्ते गत्यनुस्मृतिसाध्ये चेति, स्मर्येते गत्यनुस्मरणादिति स्मृत्या उच्येते इति सूत्रार्थः ॥

अत्र [7]उत्क्रमणयोग्यज्ञानिनः न ब्रह्मादिप्राप्त्यर्थं विद्यागत्यनुस्मृती [8]अपेक्षेते।

---

[1] ज्ञानिमरणस्य --क. [2] अन्यमरणसाम्यं ---ग. [3] हृदयाग्रप्रकाशने सति ---क. [4] "ज्ञानप्रसन्न" इत्यारभ्य "नाड्या" इत्यन्तं —घ नास्ति। [5] गत्यनुस्मरणपूर्वकं हृदयमारभ्य ब्रह्मप्राप्तिपर्यन्तं धूमो रात्रिरिति श्लोके योगीति विशेषणात्—क. गत्यनुस्मृत-पूर्वकं हृदयमारभ्य ब्रह्मप्राप्तिपर्यन्तं देहादुत्क्रामति। नत्वज्ञानी। अतो न साम्यमिति सिद्धान्तः कृतः ॥ ९ ॥—ग. [6] "देहादुत्क्रामति। न तु तथा अज्ञानी इत्यारभ्य "ब्रह्मविद इति विशेषणात्" इत्यन्तं —क. नास्ति ॥ [7] उत्क्रान्तस्य ज्ञानिनः ब्रह्मादि-प्राप्त्यर्थं ---ग. [8] नापेक्षेतो — ग.

१ "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिः योगी प्राप्य निवर्तते ॥"

इत्यादिस्मृतौ केवलकालाधीनत्वस्योक्तत्वात् । न ह्यनयोः श्लोकयोः [1]ब्रह्मचन्द्रगत्योः प्राप्तौ उत्तरायणकालदक्षिणायन[2]कालमरणं विनान्यत्कारणमुच्यते इति [3]प्राप्तौ —

ब्रह्मादिप्राप्त्यर्थं विद्यागत्यनुस्मृती [4]अपेक्ष्येते एव । यतः गत्योः विद्यादिकृतत्वमेव स्मर्यते । न कालादिकृतत्वम् । 'अग्निर्ज्योतिरि'ति श्लोके ब्रह्मविद इति विशेषणात् । [5]धूमो रात्रिरिति श्लोके योगीति विशेषणात् । [6]न च गत्यनुस्मृतौ विशेषप्रमाणाभावः । २"गत्यनुस्मरणाद्ब्रह्म [7]चन्द्रं वा गच्छति ध्रुवम्" । इति स्मृतेरिति सिद्धान्तः कृतः ॥

तदेतदधिकरणद्वयतात्पर्यमाह— **उत्क्रम्य मानुषा इति** ॥ गत्यनुस्मरणपूर्वकमिति शेषः ॥

अत्र मानुषशब्दः देवेतरज्ञान्युपलक्षकः । तदुक्तम् । "देवानां च मनुष्याणां" इत्यनुव्याख्यानसुधायां [8]मानुष्यशब्दो देव[9]व्यतिरिक्तानुपलक्षयतीति । तथा च ज्ञानिनः गत्यनुस्मरण[10]पूर्वकं ब्रह्मनाड्या देहादुत्क्रम्य

---

१ भगवद्गीता । (८—२४, २५)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे अध्यात्मवाक्यत्वेनोदाहृतम् ।

[1] ब्रह्मचन्द्रगती प्राप्तौ—ग. [2] कालं विनान्यत्कारणं—ग. [3] प्राप्तौ, गत्यर्थं विद्यागत्यनुस्मृती—घ. [4] अपेक्षिते एव—ग. [5] धुमो रात्रिरि शोके—क. [6] न गत्यनुस्मृतौ —ग. [7] चन्द्र वागगच्छते ध्रुवम्—क. [8] मनुष्यशब्दादेव—क. [9] व्यतिरिक्तान् लक्षयतीति—क. [10] पूर्वकं देहादुत्क्रम्य —क.

मुक्तिं [1]यान्ति, [2]नाऽज्ञानिन [3]इत्यर्थः ॥

उत्क्रम्य मानुषा इत्येतत् प्रायिकत्वाभिप्रायं, तेन १ "केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन" इति वचनविरोधो [4]नेत्यवगन्तव्यम् ॥

नन्वेवं तर्हि देवानां सर्वथोत्क्रान्तिर्नास्तीति [5]प्राप्तं बाढमिति चेन्न। देवानां उत्क्रान्तेः प्रमितत्वात् इत्यत आह—**देहक्षयात् सुरा इति।** मुक्तिं यान्तीत्यनुवर्तते। मुक्तिं यान्तीत्युक्त्या मुक्तिं प्रति गमनकाले एव सुराणां देहलयः। भूमाववतारदशायां[6]तु उत्क्रमणमप्यस्तीति सूचयति। तदुक्तमनुव्याख्याने

"जातानां मानुषे लोके देवानां च कदाचन।
उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते ॥"

इति ॥ १० ॥

"[7]मदाचार्यमनोधाममध्वमानसमञ्चके।
शयानः श्रीधरश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥"

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारिनृसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य द्वितीयः पादः ॥

१ ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य चतुर्थपादे नवमाधिकरणे गरुडपुराणवाक्यत्वेनोदाहृतम् ॥

[1] यान्ति ज्ञानिनः—क. [2] ज्ञानिन अतो ज्ञानिचरममरणस्य न पृथक् जननमरणसाम्यमिति भावः ॥ १० ॥—घ. [3] "इत्यर्थः। उत्क्रम्य" इत्यारभ्य "मुक्तिरिष्यते इति" इत्यन्तं—घ. नास्ति ॥ [4] नेत्यवधेयम्—क. [5] प्राप्तमिति चेन्न—ग. [6] 'तु'—क.घ. नास्ति। [7] "मदाचार्य" इत्ययं श्लोकः—क.ग. नास्ति।

## अथ चतुर्थाध्यायस्य तृतीयः पादः

श्रीगुरुभ्यो नमः

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्ति

---

हरिः ओम्

[1]समुद्गिरन्तं श्वसतो नस्तो विद्या अशेषतः ।
मुखादपि हयग्रीवं वन्दे सर्वेष्टसिद्धये ॥ १ ॥

ब्रह्मनाड्योत्क्रान्तानां ज्ञानि[2]नां ब्रह्मप्राप्तौ मार्गो गम्यं च अस्मिन् पादे निरूप्यते ॥

[अर्चिरादिः एक एव ब्रह्मप्राप्तिमार्ग इति प्रतिपादनम् ]

**॥ ओं ॥ अर्चिरादिना तत्प्रथितेः ॥ ओं ॥ ४-३-१**

ज्ञानी [3]अर्चिरादिना मार्गेण गच्छति । [4]कुतः ? तस्य उक्तार्थस्य [5]प्रथितेः श्रुतौ स्मृतौ च प्रसिद्धेः इति सूत्रार्थः ॥

अत्र प्राणिनां ऊर्ध्वगमनार्थं द्वौ मार्गौ । तत्र एकस्मिन् मार्गे अर्चिर्लोकः प्रथमः । मार्गान्तरे वायुलोकः प्रथमः । १"तेऽर्चिषम[6]भिसम्भवन्ति [7]अर्चिषोऽहरह्न आपूर्यमाणपक्षम्" ॥ २"यदाह वै पुरुषो

---

१ छान्दोग्योपनिषत् । (५—१०—१)

२ बृहदारण्यकोपनिषत् । (७—१०—१)

[1] "समुद्गिरन्तं" इत्ययं श्लोकः—क.ग. नास्ति ॥ [2] नां प्राप्त्यर्थं मार्गो—घ

[3] अर्चिरादिमार्गेण—क. [4] 'कुतः'—ग.घ. नास्ति । [5] 'प्रथितेः'—ग घ. नास्ति

[6] भिसंविशंति—ग. [7] तेऽर्चिषो—क

अस्माल्लोकात् प्रैति स [1]'वायुमागच्छती''ति उभयविधश्रुतेः । अतो [2]मार्गा-निर्णयात् गत्यनुस्मृत्ययोग इति प्राप्ते —

न मार्गभेदेनोभयोः [3]प्राथम्यं कल्प्यम् । किन्तु एक एव [4]विपश्चितां मार्गः । स च अर्चिरादिः । १''द्वावेव मार्गौ प्रथितौ अर्चिरादिर्विपश्चिताम् ।

धूमादिः [5]कर्मिणां चैव [6]सर्ववेदविनिर्णयात्'' ॥ इति स्मृतेः । न च ''[7]स वायुमागच्छती''ति [8]श्रुतिविरोधः । स्मृतिसहितैतच्छ्रुति-विरोधेन अर्चिर[9]नन्तरार्थत्वोपपत्तेः । अतो गत्यनुस्मृतिसम्भवः इति सिद्धान्तः कृतः ॥ १ ॥

---

[अर्चिरादिमार्गेण गत्वा वायुलोकं प्राप्नोति इति समर्थनम्]

॥ ओं ॥ वायु[10]शब्दादविशेषविशेषाभ्याम् ॥ ओं ॥ ४–३–२

वायुलोकस्यैव द्वितीयप्राप्यत्व, कुतः ? अविशेषविशेषाभ्यां सामान्यतः [11]विशेषतश्च वायुशब्दात् वायोः [12]प्राप्यत्वश्रुतेरिति सूत्रार्थः ॥

अत्र पूर्ववदधिकारिभेदेन मार्गभेदात् वायुलोकस्येव अहर्लोकस्यापि द्वितीयप्राप्यत्वं २''अस्माल्लोकात्प्रैति । स वायुमागच्छति'' [13]इति,

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मतर्कवाक्यत्वेनोदाहृतम् ॥

२ बृहदारण्यकोपनिषत् । (७—१०—१)

[1] वायुमागच्छति—ग. [2] मार्गानियमात् —ग. [3] प्राथम्यकल्प्यं—क. [4] विपश्चितान्मार्गः—ग. [5] कर्मिणश्चैव—ग. [6] सर्वेदेति सर्ववेद—क [7] 'स'—ग नास्ति । [8] स्मृतिविरोधः—ग. [9] नन्तरार्थापत्तेः—क. [10] शब्दादशेष—ग. [11] विशेषः अतश्च—क. [12] प्राप्यत्वश्रुतिरिति—क. [13] 'इति'—ग.घ. नास्ति ।

[1]अर्चिषोऽहरित्युभयत्रापि श्रुतिसद्भावादिति प्राप्ते—

तत्र मार्गभेदः किन्त्वेक एव [2]मार्गः। तत्रापि अर्चिषो [3]वायुं गच्छति, [4]न चार्चिषोऽहरिति [5]श्रुतिविरोधः वायोरनन्तरं अहर्लोकस्य [6]प्राप्तिसम्भवात्। कुत एतदिति [7]चेन्न। "अस्माल्लोकात्प्रैति स वायुमागच्छती"ति श्रुतौ सामान्यतः वायोः [8]प्रथमप्राप्यत्वोक्तेः। तस्माच्च पूर्वोक्त[9]विशेषवचनबाधेन वायोः अर्चिरनन्तरप्राप्यत्वार्थत्वस्य न्याय्यत्वात्। १ "[10]स इतो गतो द्वितीयां गतिं वायुमागच्छतीति विशेष[11]श्रुतेश्चेति सिद्धान्तः कृतः ॥ २ ॥

---

[संवत्सरामिमानिलोकप्राप्त्यनन्तरं तटिल्लोकप्राप्तिः तदनन्तरं वरुणलोकप्राप्तिरिति निरूपणम्.]

॥ ओं ॥ [12]तटितोऽधि वरुणः सम्बन्धात् ॥ ओं ॥ ४-३-३

तटितः तटिल्लोकात् अधि उपरि [13]वरुणः लोकः प्राप्यः। कुतः? सम्बन्धात्। [14]तटिताह्यूह्यत इति तस्योपरि सम्बन्धत्वश्रुतेः इति सूत्रार्थः ॥

अत्र वरुणतटिल्लोकयोरुभयोरपि संवत्सरलोकानन्त[15]र्यम्। २ "मासेभ्यः

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृतं प्रमाणम् ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्डिन्यश्रुतित्वेनोदाहृतम्।

[1] तथार्चिषो हरित्युभयत्तापि—क. तथार्चिषोऽन्हरित्युभयप्राप्ति—ग. [2] मार्गभेदः—ग [3] वायुगच्छति—क. वायुं गच्छति तदनन्तरमहर्लोकं—घ. [4] "न चार्चिषो" इत्यारभ्य "न्याय्यत्वात्" इत्यन्तं—घ. नास्ति। [5] 'श्रुति'—क.घ नास्ति। [6] प्राप्तिसद्भावात्—ग [7] चेत्—ग. [8] 'प्रथम'—ग घ नास्ति। [9] 'विशेष'—ग.घ नास्ति। [10] 'स'—ग. नास्ति। [11] श्रुतेरिति—घ. [12] तटितो वरुणः—ग [13] वारुणः—क. [14] पठिताद्यूयत इति—क. तटितोह्यत इति ग. [15] र्यं मासेभ्यः—ग.

संवत्सरं संवत्सरात् ब्रह्मलोकं" तथा १"संवत्सरात् तटितमागच्छती"ति उभयथापि [1]श्रुतेः । [2]मार्गभेदेनोभयोरपि संवत्सरा[3]नन्तर्योपपत्तौ अन्यतर स्वीकारे [4]कारणाभावात् । अतो मार्गानिर्णयात् तदनुसरणानुपपत्तिरिति प्राप्ते —

नोभयोरपि संवत्सरानन्तर्यं ग्राह्यम् । किन्तु एक एव मार्गः । तत्र [5]संवत्सरानन्तरं तटितमेव गच्छति । न च श्रुत्यन्तरविरोधः । तटितोऽनन्तरं [6]वरुणस्य प्राप्यत्वेन श्रुतेः तदर्थत्वोपपत्तेः । कुतः ? २"तटितो वरुणं गच्छति । [7]तटिताह्यूह्यते [8]वरुणलोक" इति श्रुतेः । [9]अतो मार्गैक्येनानुसरणमुपपद्यत इति सिद्धान्तः कृतः ॥ ३ ॥

---

[वायुलोको नाम आतिवाहिकाख्यः वायुलोकः न तु मुख्यः इति समर्थनम् ]

॥ ओं ॥ आतिवाहिकस्तल्लिङ्गात् ॥ ओं ॥ ४-३-४

पूर्वोक्तो वायुः [10]आतिवाहिकाख्यः न मुख्यः । कुतः ? पूर्वप्राप्यत्वलक्षणतल्लिङ्गादिति सूत्रार्थः ॥

अत्र ३"स वायुमागच्छती"ति अर्चिरनन्तरं प्राप्यतयोक्तो वायु-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे गौपवनश्रुतित्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः ॥

३ बृहदारण्यकोपनिषत् । (७—१०—१)

[1] श्रुतेः । न च पूर्ववन्मार्गभेदः । साधकाभावादिति प्राप्ते—घ. [2] "मार्गभेदेन" इत्यारभ्य "प्राप्ते" इत्यन्तं—घ. नास्ति. [3] नन्तर्योपपत्ती—क. [4] करणाभावात्—ग. [5] संवत्सरानन्तर्यं—ग. [6] वरुणप्राप्यत्वेन—क. [7] तटिताह्यूह्यते—क [8] वरुणा लोक इति—ग. [9] "अतो" इत्यारभ्य "उपपद्यते" इत्यन्तो भागः—घ नास्ति ॥ [10] आतिवाहिकः—ग.

मुख्यः। वायुशब्दस्य तत्रैव मुख्यत्वात्। बाधकं विना मुख्यार्थत्यागायोगात् इति प्राप्ते—

आतिवाहिक [1]एवायं वायुः, [2]न तु मुख्यः। [3]कुतः? [4]पूर्वप्राप्यत्वलिङ्गात्। मुख्य[5]वायोश्च चरमप्राप्यत्वात्। किमत्र मानमिति चेत्। १"[6]उत्क्रान्तो विद्वान् [7]परममिगच्छन् विद्युत[8]मेवान्तत उपगच्छति [9]धौर्वाव विद्युत्। तत्पतिं वायुं [10]उपगम्य तेनैव ब्रह्म गच्छतीति" श्रुतेः।

२"उत्क्रान्तस्तु शरीरात् स्वात् गच्छन्त्यर्चिषमेव [11]तु।
ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः॥
[12]ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा।
[13]तटितं वरुणं चैव [14]प्रजापं सूर्यमेव च॥
सोमं वैश्वानरं [15]चेन्द्रं ध्रुवं देवीं दिवं तथा।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम्॥"

[16]इति स्मृतेरिति सिद्धान्तः कृतः॥ ४॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता श्रुतिः।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः।

[1] एक एव वायं वायुः—क. [2] न मुख्यः—ग. [3] कुत इति चेत्—घ. [4] "पूर्वप्राप्यत्वलिङ्गात्" इत्यारभ्य "इति श्रुतेः" इत्यन्तं—घ. नास्ति। [5] वायोश्चरमप्राप्यत्वात्—क. घ. [6] उनात्क्रान्तो—क [7] परममगच्छन्—क. [8] मेवान्त उपगच्छति—क. [9] धौर्वा वा विद्युत्—क [10] मुपगम्यते। नैव ब्रह्म गच्छति—क. उपगम्य स्वेनैव—ग. [11] तत्—क [12] "ततोऽहः" इत्यारभ्य "तेनैति पुरुषोत्तमम्" इत्यन्तं श्लोक द्वयं—घ. नास्ति। [13] पठितं—क. [14] प्राजापं—ग. [15] चन्द्रं—क [16] इति सिद्धान्तः कृतः—क ग.

[ब्रह्मप्राप्तिमार्गेषु मुख्यवायुलोक एव अन्तिमप्राप्य इति प्रतिपादनम् ]

## ॥ ओं ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ओं ॥ ४–३–५

वायोरूर्ध्वं [1]ईशादर्वाक् प्राप्योऽस्तीति न [2]शङ्क्यम् । कुतः ? वैद्युतेनैव=विद्युत्पतिना वायुनैव, तच्छ्रुतेः=ब्रह्म[3]गमनस्य श्रवणात् । ततः=तस्माद्धेतोः स [4]एवान्ततः प्राप्य इति सूत्रार्थः ॥

अत्र ब्रह्मणोऽवस्तात् वायोरूर्ध्वं प्राप्योस्ति, तथाङ्गीकारे बाधकाभावादिति प्राप्ते—

विद्युत्पतिः वायुरेवान्तिमः प्राप्यः । तस्यैव ब्रह्मप्रापकत्वात् । अन्यस्य तदभावात् । कुतः ? १"स एनान् ब्रह्म गमयती"ति श्रुतेः ॥

२"विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिः तमृते प्राणनायकम्" ॥

इति स्मृतेश्चेति सिद्धान्तः [5]कृतः ॥

तदेतदधिकरणपञ्चकस्य तात्पर्यमाह—[6]**अर्चिरादिपथा वायुं प्राप्य** [7]**तेन जनार्दनम् । यान्तीति ॥** उपलक्षणमेतत् । स्वोत्तमप्रवेशमार्गेणेत्यपि ज्ञेयम् । न चात्र मानाभावः ॥

---

१ छान्दोग्योपनिषत् । (४–१५–६)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे बृहत्तन्त्रवाक्यत्वेनोदाहृतम् ।

[1] ईशादधः—क [2] शक्यं—क. [3] गमनश्रवणात्—ग. [4] एवान्तिमप्राप्य—क. [5] 'कृतः—ग. नास्ति । [6] अर्चिरादिपथा विद्युत्पतिं वायुं प्राप्य इति ॥ ५ ॥ ग. [7] "तेन जनार्दनं यान्तीति" इत्यारभ्य "इत्यवधेयम् ॥ ५ ॥" इत्यन्तो भागः—ग. नास्ति ।

"स्रष्टृष्वेव तु [1]सृष्टानां प्रवेशो ब्रह्मणो लये ।
देवानां मार्ग उद्दिष्टः नार्चिरादिर्न चोत्क्रमः" ॥

इत्यनुव्याख्यानात् ॥ इयमत्र योजना । उत्क्रान्ताः नरोत्तमाद्याः । [2]सर्वेऽपि ज्ञानिनः अर्चिरादिमार्गेण । उत्तमाः देवास्तु, [3]"तस्मादशेषा गिरिजां प्रविश्य तथैव रुद्रं सह तेन वाणीं" [4]इत्याद्यनुव्याख्यानोक्तस्वोत्तम-प्रवेशमार्गेण विद्युत्पतिं वायुं प्राप्य तेन चतुर्मुखं प्राप्य जनार्दनं यान्तीति ज्ञेयम् । अर्चिरादि[5]मार्गस्यैव एतत्पादोक्तत्वेऽपि प्रवेशमार्गः [6]पूर्वपादार्थः प्रसङ्गादत्रानूदितो ब्रह्मप्राप्तिकथनार्थमित्यवधेयम् ॥ ५ ॥

---

[वायुः उपासकान् परं ब्रह्म नयति तदन्यान् कार्यं ब्रह्म नयतीति निरूपणम् ]

॥ ओं ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ओं ॥ ४–३–६

१"स एनान् ब्रह्म गमयतीति" श्रुतौ कार्यं ब्रह्म चतुर्मुखाख्यं [7]वायुर्गमयतीत्युच्यते । इति बादरिराचार्यो मन्यते । [8]ब्रह्मशब्दस्य ईशे मुख्यत्वात् कथमेवं व्याख्यानं इत्यत उक्तं अस्येति । चतुर्मुखमुक्ति पर्यन्तं [9]बन्धस्य [10]सत्वेन ततोऽर्वाक् चतुर्मुखस्यैव [11]गत्युपपत्तेरिति सूत्रार्थः ॥

अत्र अर्चिरादिमार्गेण गतानां सर्वेषां कार्यब्रह्मप्राप्तिरेव, न [12]परब्रह्म-

१ छान्दोग्योपनिषत (५–१० २)

[1] स्रष्टॄनां—क [2] सर्वे ज्ञानिनः—ग. [3] तस्माच्छेषं गिरिजां—क [4] इत्य-नुव्याख्यानोक्त—ग. [5] मार्गस्य एतत्पादो—ग. [6] पूर्वपदार्थः—क. [7] वायुमार्ग-मयतीत्यज्यते—क [8] ब्रह्मशब्दस्यैव मुख्यत्वात्—क. [9] बद्धस्य—ग. [10] सन्ततत्वेन—क. [11] गत्युपपत्तिरिति—क [12] परब्रह्मप्राप्तिः सर्वेषां परब्रह्मप्राप्त्ययोग्य-त्वस्य "ऋते देवान् परं ब्रह्म कः पुमान् प्राप्नुयात्क्वचित्" इति स्मृतिसिद्धत्वादित्येकः पूर्वः पक्षः—ग.

प्राप्तिः । "[1]स एनान् ब्रह्म गमयती"ति श्रुतेः । न च वाच्यं ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात् [2]परब्रह्मस्वीकारो युक्त इति । तथा प्रकृतेः बन्धो १"ब्रह्मणा सह मिद्यते" इत्यादिना चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वेन ततोऽर्वाक् चतुर्मुखस्यैव गत्युपपत्तेः । २"यदि ह वा व परममिपश्यति । प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखमिति" [3]श्रुतेः । [4]सर्वेषां परब्रह्मप्राप्त्ययोग्यत्वस्य,

३"ऋते देवान् परं ब्रह्म कः पुमान् प्राप्नुयात् कचित्" ॥

इति स्मृतिसिद्धत्वाच्च इत्येकः पूर्वः पक्षः ॥

सर्वेषां परब्रह्मप्राप्तिरेव न [5]कार्यब्रह्मप्राप्तिः । "स एनान् ब्रह्म गमयती"ति [6]ब्रह्मशब्दस्य [7]परब्रह्मण्येव मुख्यत्वात् । [8]मुख्यार्थे च सम्भवति अमुख्यार्थ[9]स्वीकारायोगात् इत्यपरः पूर्वः पक्षः ॥

एवं उभयथा पूर्वपक्षे प्राप्ते—

न सर्वान् [10]कार्यं नयतीति श्रुत्यर्थो, नापि परमेवेति

१ ब्रह्मसूत्रभाष्यव्याख्यायां तत्वप्रकाशिकायां एतदधिकरणे उदाहृता श्रुतिः ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौषारवश्रुतित्वेनोदाहृतम् ॥

३ ब्रह्मसूत्रभाष्ये एतदधिकरणे अध्यात्मवचनत्वेनोदाहृतम् ।

[1] "स एनान् ब्रह्म" इत्यारभ्य "चतुर्मुखमिति श्रुतेः" इत्यन्तं घ. नास्ति । [2] परब्रह्मस्वीकारे—क [3] श्रुतेः इत्येकः पूर्वः पक्षः—क. [4] 'सर्वेषां' इत्यारभ्य 'स्मृतिसिद्धत्वाच्च' इत्यन्तं वाक्यं—घ. मातृकायां 'न परब्रह्मप्राप्तिः' इति वाक्यानन्तरं वर्तते । तत्र तद्वाक्यं असङ्गतमिव भाति । अत्र 'श्रुतेः' इत्यस्यानन्तरं सङ्गतमिव भाति ॥ [5] कार्यं ब्रह्म प्राप्तिः—क. [6] ब्रह्मशब्दस्य परब्रह्मशब्दस्य—क. [7] "परब्रह्मण्येव" इत्यारभ्य "स्वीकारायोगात्" इत्यन्तो भागः—घ. नास्ति । [8] ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् इत्यपरः पूर्वः पक्षः—घ. [9] स्वीकारात्—क. [10] कामान्—क.

[1]किन्तु [2]मनुष्योत्तमादि [3]प्रतीकालम्बनान् कार्यं [4]ब्रह्म [5]नयति । अप्रतीकालम्बनान् परं ब्रह्म [6]नयति । [7]कुतः ? सर्वेषां परब्रह्मप्राप्तिपक्षे गत्यनुपपत्यादिदोषस्य उक्तत्वात् । सर्वेषां कार्यब्रह्मप्राप्तिपक्षे च ब्रह्मशब्दामुख्यत्वादिदोषाणां उक्तत्वात् । न चोभयप्राप्तिपक्षे दोषद्वयापातः १"स प्रतीका[8]श्चतुर्मुखप्रतीकाः परमुहैते गच्छन्ती"त्यादि प्रमाणबलेन सर्वस्योपपत्तेरिति सिद्धान्तः कृतः ॥

१ ब्रह्मसूत्रन्यायविवरणे एतदधिकरणे उदाहृता श्रुतिः ।

[1] किन्तु वायुः प्रतीकालम्बनान्—घ [2] मनुष्योत्तमादींश्च—घ. [3] प्रतीकालम्बनान्—घ नास्ति । [4] 'ब्रह्म'—ग. नास्ति [5] नयति । देवव्यतिरिक्ताप्रतीकालम्बनान्—क. [6] नयतीति—क. नयति । न च प्रतीकालम्बनत्वदिविभागे प्रमाणाभावः ।

*"प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् ।
न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ॥
अप्रतीका देवतास्तु ऋषीणां शतमेव च ।
राज्ञां च शतमुद्दिष्टं गन्धर्वादिशतं तथा ॥
एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये न तु क्वचित् ।
अयोग्यदर्शने यत्नाद्भ्रंशः पूर्वस्य चापि तु ॥
अप्रतीकाश्रया ये हि ते यान्ति परमेव तु ।
स्वदेहे ब्रह्म दृष्ट्वैव गच्छेद्ब्रह्मसलोकताम् ॥
ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम् ॥"

इति स्मृतेः ॥

†"देवा वा व सर्वप्रकाशाः ऋषयोऽन्तः प्रकाशाः मनुष्या एव बहिः प्रकाशाः" इति श्रुतेश्च, तत्र प्रमाणत्वादिति सिद्धांतः कृतः—घ [7] "कुतः ? सर्वेषां" इत्यारभ्य "सिद्धांतः कृतः" इत्यंतं—घ. नास्ति । [8] श्चतुर्मुखमप्रतीकाः – क.

* ब्रह्मसूत्रवाक्ये एतदधिकरणे गरुडपुराणवाक्यत्वेनोदाहृतम् ॥

† ब्रह्मसूत्रभाष्ये एतदधिकरणे चतुर्वेदशिखावाक्यत्वेनोदाहृतम् ।

उत्तमा नरोच्चाद्या ब्रह्मलोकात्सहामुना ॥

---

तस्य तात्पर्यमाह—**तेन जनार्दनमित्यादिना अमुनेत्यन्तेन** ॥ नरोच्चाद्याः मनुष्योत्तमाद्याः [1]प्रतीकालम्बनाश्चेति शेषः । [2]तेन=वायुना, ब्रह्मलोकात् । ल्यब्लोपनिमित्ता पञ्चमी । ब्रह्मलोकं=[3]सत्यलोकं प्राप्य [4]कार्यं ब्रह्म प्राप्येति यावत् । [5]प्रथममिति शेषः । अमुना चतुर्मुखब्रह्मणा [6]सह जनार्दनं [7]परान्त इति शेषः । [8]मुक्तवैकुण्ठस्थानगतं हरिं यान्ति । उत्तमाः=[9]मुख्याः [10]अप्रतीकालम्बनाः तेन वायुना साक्षादेव जनार्दनं अमुक्तवैकुण्ठस्थानगतं [11]हरिं [12]प्राप्य, प्रथममिति शेषः । अनन्तरं अमुना ब्रह्मणा सह [13]लिङ्गभङ्गं प्राप्य जनार्दनं मुक्तवकुण्ठ[14]स्थानगतं हरिं [15]यान्तीत्यनुषङ्गः । [16]तदुक्तमनुव्याख्याने

"सिद्धान्तनिर्णीतिकराः प्रतीकं
देहादिकं तद्गतमेव ये नराः ।
उपासते ते [17]पुरतः समाप्नुयुः
[18]ब्रह्माणमस्मान्मतिमाप्य विष्णुम् ॥

---

[1] प्रतीकालम्बनाः तेन वायुना—क. [2] "तेन" –ग. नास्ति । [3] सत्य. लोकं'—क. नास्ति । [4] "कार्यं"—क. नास्ति । [5] "प्रथममिति शेषः"—ग.घ. नास्ति । [6] "सह" – क. नास्ति । [7] "परांत इति शेषः" - क ग. नास्ति । [8] 'मुक्तवैकुण्ठस्थानगतं हरिं'—घ. नास्ति । [9] मुख्यदेवव्यतिरिक्ताः—क. [10] प्रतीकालम्बनाः—क. [11] हरिं यान्ति । तदुक्तमनुव्याख्याने—क. [12] "प्राप्य प्रथममिति" इत्यारभ्य "स्थानगतं हरिं" इत्यन्तं—क. नास्ति । [13] "लिङ्गभङ्गं प्राप्य" इति—क ग नास्ति । [14] स्थानगतं परं ब्रह्म –घ. [15] यान्ति । तदुक्तमनुव्याख्याने—क "इत्यनुषङ्गः" इति—क ग. नास्ति । यांतीत्यनुषङ्गः । तदुक्तं द्वितीयस्कंधतात्पर्ये "विष्णोर्लोकं तदैवैके यान्ति कालांतरे परे विहृत्यैवान्यलोकेषु मुच्यन्ते ब्रह्मणा सह" ॥ इति—घ. [16] "तदुक्तमनुव्याख्याने" इति –ग. नास्ति । "तदुक्तं" इत्यारभ्य "इति द्रष्टव्यम्" इत्यन्तं—घ. नास्ति । [17] परतः—ग. [18] ब्रह्माणमस्मातिमाप्य—क.

प्राप्स्यन्त्यतोऽन्येऽपि तमाप्य तस्मात्

हरिं गताः मुक्तिभाजः परान्ते ॥'' इति । देवास्तु प्रवेश-मार्गेण ब्रह्मणा सह जनार्दनं यान्तीति अर्चिरादिपथेत्यत्रैवोक्तं [1]इति द्रष्टव्यम् ॥ ६ ॥

[2]मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥

[3]इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकाया श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य तृतीयः पादः ॥

॥ श्री कृष्णार्पणमस्तु ॥

[1] 'इति'—क घ. नास्ति [2] "मदाचार्य" इत्ययं श्लोकः—क.ग. नास्ति
[3] इति श्री अणुवेदान्ते चतुर्थाध्यायस्य तृतीयः पादः समाप्तः—क. इति श्रीमदानंदतीर्थ-भगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थस्य तृतीयः पादः ॥—ग.

# अथ चतुर्थाध्यायस्य चतुर्थः पादः

श्रीगुरुभ्यो नमः

यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः ।
जगत्सृष्ट्यादिविषये महासामर्थ्यमप्नुते ॥

---

हरिः ओम्

[1]सालग्रामशिलाचक्रे देवग्रामैरमावसत् ।
समग्रैः कमलादेव्या समग्राघं हरेद्धरिः ॥ १ ॥

एवं चतुर्मुखेन सह ब्रह्म प्राप्तानां भोगात्मकमोक्षस्वरूपं निरूप्यतेऽस्मिन् पादे ॥

[मुक्तः परं ब्रह्म प्राप्य तदविहायैव स्वस्वरूपेण भोगान् भुङ्क्ते इति प्रतिपादनम् ]

॥ ओं ॥ सम्पद्याविहाय स्वेन शब्दात् ॥ ओं ॥ ४-४-१

ज्ञानी परं ब्रह्म सम्पद्य=प्राप्य, अविहाय ब्रह्मानतिक्रमेण स्वेन रूपेण स्थितस्सन् भोगान् भुङ्क्ते । कुतः ? शब्दात्, तथा श्रुतेरिति सूत्रार्थः ॥

अत्र [2]मुक्तः [3]परब्रह्म अतिक्रम्य भोगान् भुङ्क्ते । [4]"एतं सेतुं तीर्त्वेति" ब्रह्मातिक्रमानन्तरं स्वरूपाविर्भावस्योक्तत्वादिति प्राप्ते-

---

[1] 'सालग्राम' इत्ययं श्लोकः—क ग. नास्ति । [2] मुक्ताः—ग. [3] परं ब्रह्मानतिक्रम्य—क. [4] एतु—घ.

मुक्तः [1]परं ब्रह्म प्राप्य तदविहायैव भोगान् भुङ्क्ते । १ "[2]एवं पश्यन्नात्मानम[3]भिसम्पद्यैतेनात्मना यथा कामं सर्वान् [4]कामान् अनुभवतीति श्रुतेः । २ "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतेश्च । न च ३ "[5]एतं सेतुं तीर्त्वेति श्रुतिविरोधः । [6]तत्र एतं सेतु गन्तुं अन्य-त्तीर्त्वेति ब्रह्मप्राप्तये [7]अन्यतरणस्यैव तदर्थत्वात् । न चात्र प्रमाणाभावः । "४इमां घोरमशिवां नदीं [8]तीर्त्वैतं सेतुं आप्यैतेनैव सेतुना मोदते प्रमोदत" इति श्रुतेरिति सिद्धान्तः कृतः ।

देहलीदीपन्यायेन प्रयुक्तममुना सहेत्येतत् एतत्पादसम्बन्धित्वेनापि योजनीयमित्यभिप्रेत्य अस्य अधिकरणस्य तात्पर्यमाह— **अमुना सहेति** ॥ अमुना परमात्मना सह परमात्मानम[9]विहाय [10]तमनतिक्रम्येति यावत् । [11]मुक्ताः भोगान् भुञ्जत इत्यनुवर्तते । [12]जनार्दनं [13]यान्तीति प्राप्यत्वेन परमात्मनोऽपि प्रकृतत्वात् नानुपपत्तिरिति बोध्यम् ॥ १ ॥

———

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे सौपर्णश्रुतित्वेनोदाहृतम् ॥

२ छान्दोग्योपनिषत् । (८—३—४)

३ छान्दोग्योपनिषत् । (८—४—२)

४ ब्रह्मसूत्रभाष्ये एतदधिकरणे मौद्गल्यश्रुतित्वेनोदाहृतम् ॥

[1] परब्रह्म—ग. [2] 'एवं पश्यन्'—घ. नास्ति । [3] भिसम्पद्य तेनात्मना—क. भिसम्पद्यते आत्मना—ग. [4] कामानिति श्रुतेः—घ. [5] एतुं—घ. [6] "तत्र"—क.ग. नास्ति । [7] अन्यतरस्यैव—क. [8] तीर्त्वेतं—क. [9] विहाय इति यावत्—घ. [10] "तमतिक्रम्य"—घ. नास्ति । [11] "मुक्ताः"—घ. नास्ति । [12] जनार्दनं इति परमात्मनोऽपि—ग. जनार्दनं यान्तीति प्राप्तत्वेन परमात्मनः प्रकृतत्वात्—क. [13] "यान्तीति प्राप्यत्वेन"—घ. नास्ति ॥

[“स तत्र पर्येतीति” श्रुतौ मुक्त एवोच्यत इति समर्थनम् ]

**॥ ओं ॥ मुक्तः प्रतिज्ञानात् ॥ ओं ॥ ४-४ २**

“स तत्र” इति श्रुत्युक्तो मुक्तः, कुतः? १“अहरहरेन”मिति श्रुतौ [1]अमुक्तानां दिव्यभोगाभावमुक्त्वा [2]मुक्तानां दिव्यभोगप्रतिज्ञानादिति सूत्रार्थः ॥

अत्र २“स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा [3]ज्ञातिभिर्वाज्ञातिभिर्वा” इति श्रुत्युक्तो न मुक्तः। पर्येतीत्यादिना अनेकविधक्रीडाप्रतीतेः। न च क्रीडावत्त्वं कृतकृत्यस्य मुक्तस्योपपद्यत इति प्राप्ते—

[4]स तत्र पर्येतीत्यत्र मुक्त एवोच्यते। अन्यस्य [5]एतादृशभोगा[6]नुपपत्तेः। [7]न च ब्रह्मप्राप्त्या तदुपपत्तिः। “अहरहरेनमनुप्रविशति उपसङ्क्रमे च। न तत्र मोदते न प्रमोदते न कामाननुभवति, बद्धो ह्येष [8]तदा भवति। अथ [9]यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे बृहच्छ्रुतित्वेनोदाहृतम्।

२ छान्दोग्योपनिषत्। (८-१२-३)

[1] मुक्तानां—क. [2] मुं दिव्यं—क. [3] ज्ञातिभिर्वेति—क. [4] ‘स तत्र पर्येति इति’—घ. नास्ति। [5] एतद्भोग—घ. [6] नुपपत्तेः। न च त्र प्रमाणाभावः। अथ यदेनम्—घ. [7] “न च ब्रह्मप्राप्त्या” इत्यारभ्य “ह्येष तदा भवति” इत्यन्तम्—घ. नास्ति। [8] ‘तदा’—क.घ. नास्ति। [9] यदेनम्—घ.

कामांश्चैवानुभती''ति [1]श्रुतौ [2]ब्रह्मप्राप्तानामपि मुप्तानाममुक्ततया दिव्यभोगाभाव[3]मुकूत्वा मुक्तस्यैव तत्प्राप्त्या दिव्यभोगप्रतिज्ञानात् । न च कृतकृत्यत्वेन क्रियावत्वानुपपत्तिः । आनन्दोद्रेकात् कृतकृत्यस्यापि भगवत इव स्वेच्छया तदुपपत्तेरिति सिद्धांतः कृतः ॥

तस्य तात्पर्यमाह—[4]**अमुना सहेति** ॥ [5]अवधारणार्थकचशब्दस्य अत्र उत्तरत्रापि अनुषङ्गः । तथाच मुक्ता एव भोगान् भुञ्जते । नामुक्ता इत्यर्थः । [6]एवं च 'स तत्र पर्येतीति' श्रुत्युक्तो मुक्त एव । नामुक्त इति भावः ॥ २ ॥

———

[परंज्योतिश्शब्देन परमात्मैवोच्यते न आदित्यः इति साधनम्]

**॥ ओं ॥ नात्मा प्रकरणात् ॥ ओं ॥ ४-४-३**

आत्मा परमात्मैव परं ज्योतिश्शब्देनोच्यते । कुतः? "य आत्मेति" परमात्मप्रकरणादिति सूत्रार्थः ॥

अत्र परं [7]ज्योतिरुपसम्पद्येति श्रुत्युक्तं ज्योतिः न विष्णुः ।

[1] श्रुतेरिति सिद्धान्तः कृतः—घ. [2] "ब्रह्मप्राप्तानाम पि" इत्यारभ्य. "तदुपपत्ते." इत्यन्तम्—घ. नास्ति । [3] मुकुत्वा ममुक्तस्यैव—क. [4] अमुनासहेति । मुक्ता एव परमात्मना सह तमनुप्रविश्येति यावत् । भोगान् भुञ्जते—क. [5] "अवधारणार्थक" इत्यारभ्य "तथाच" इत्यन्तम्—क ग नास्ति । [6] "एवम् च स तत्र" इत्यारभ्य "इति भावः" इत्यन्तम्—क ग नास्ति । [7] ज्योतिरिति श्रुत्युक्तम्—क. 'उपसम्पद्य'—घ नास्ति ।

ज्योतिश्शब्दस्य आदित्येऽपि प्रयोगदर्शनात् । एवं च न मुक्तस्य [1]ब्रह्मसमीपे भोग इति प्राप्ते—

अत्र परं ज्योतिश्शब्देन [2]परमात्मैवोच्यते । [3]न आदित्यः । "य आत्मा अपहतपाप्मे"ति परमात्मन [4]एवारभ्याधीतत्वेन अस्य तत्प्रकरणत्वात् ।

१"परं ज्योतिः परं ब्रह्म परमात्मादिका गिरः ।
सर्वत्र हरिमेवैकं [5]ब्रूयुर्नान्यं कथञ्चन ॥"

[6]इति [7]स्मृत्या परंज्योतिःशब्दस्यान्यत्राभावाच्च । अतः परं ज्योतिः ब्रह्मैवेति [8]तत्प्राप्त्याविहायैव मुक्तो भोगान् भुङ्क्ते इति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—[9]**सह अमुनेति** ॥ [10]तथाच अमुनैव परं ज्योतिःशब्दवाच्येन परब्रह्मणैव [11]सह [12]उपसम्पद्य मुक्ताः भोगान भुञ्जते । एवं च २"परंज्योतिरिति" श्रुत्युक्तो विष्णुरेव नादित्य इति भावः ॥ ३ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्माण्डपुराणवाक्यत्वेनोदाहृतम् ।

२ छान्दोग्योपनिषत् । (८—३—४)

[1] ब्रह्मसमीपभोग इति —ग. [2] परमात्मैवोच्यते । परं ज्योतिःशब्दस्य भगवत्येव वृत्तेः, कुत इति चेन्न --घ. [3] "न आदित्य" इत्यारभ्य "तत्प्रकरणत्वात" इत्यन्तम्—घ. नास्ति । [4] एकारभ्या—क. [5] ब्रूयुर्नान्यैः—क. [6] इति स्मृतेः—घ. इति श्रुत्या —क. [7] "स्मृत्या" इत्यारभ्य "अन्यत्राभावाच्च" इत्यन्तं —घ. नास्ति । [8] तत्प्राप्त्याविहायैव —क. [9] 'सह' क. नास्ति । [10] "तथाच अमुनैव' इति—क.ग. नास्ति । [11] सह तदविहायैवेति (तदविहायेति—ग.) यावत् । मुक्ताः भोगान् भुञ्जत इति ॥ ३ ॥—क.ग. [12] "उपसम्पद्य" इत्यारभ्य "इति भावः ॥ ३ ॥" इत्यंतं—क.ग. नास्ति ।

[मुक्ताः भगवद्भुक्तभोगान् भुञ्जते इति निरूपणम् ]

**॥ ओं ॥ अविभागेन दृष्टत्वात् ॥ ओं ॥ ४-४-४**

अविभागेन ये भोगाः परमात्मना भुज्यन्ते, त एव भोगाः सायुज्य-भाग्भिः [1]भुज्यन्ते । न विभागेन । कुतः? तथा श्रुतेरिति सूत्रार्थः ॥

[2]अत्र मुक्ताः [3]परमात्माभुक्तभोगान् [4]भुञ्जते अन्यथा कदाचिन्मुक्तानां भोगेच्छायामपि अवाप्तकामत्वादीश्वरस्य तदनिच्छायां मुक्तानां भोगो [5]न स्यात् । [6]ततश्च [7]भगवद्भुक्तभोगभोक्तृत्वान्मुक्तानां न तस्य भोगभोक्तृ-त्वमिति प्राप्ते—

मुक्ताः भगवद्भुक्तभोगान् भुञ्जते । १"यानेवाहं शृणोमि यान् पश्यामि यान् जिघ्रामि तानेवैत इदं शरीरं विविच्यानुभवन्तीति श्रुतेः ।

२"[8]मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित् ।
बहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथञ्चन" ॥

इति स्मृतेश्च । न च कदाचित् [9]इत्युक्तरीत्या भोगाभावः ।

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे चतुर्वेदशिखावाक्यत्वेनोदाहृतम् ।

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे भविष्यत्पर्ववाक्यत्वेनोदाहृतम् ।

[1] भुज्यन्ते— क. भुञ्जते - ग. [2] 'अत्र'—घ. नास्ति । [3] परमात्मना भुक्तभोगा न भुञ्जन्ते—क. परमात्मभुक्तभोगान् भुञ्जते— क. [4] भुञ्जते । अवाप्तमहापुरुषार्थत्वात्— घ. [5] न स्यात् । ततश्च भगवद्भुक्तभोगभोक्तृणैवेदं सर्वमनुभवतीति श्रुतेः क. [6] "ततश्च" इत्यारभ्य "ब्रह्मणैवेदं सर्वं" इत्यन्तं— क नास्ति । [7] भगवद्भुक्तभोग— ग. [8] "मुक्ताः प्राप्य" इत्यारभ्य "इति स्मृतेश्च" इत्यन्तं— ग. नास्ति । [9] युक्तरीत्या — ग.

१"पूर्णानन्दः 'पूर्णभुक्'" इति ईश्वरस्य पूर्णानन्दत्वेऽपि पूर्णभोगश्रवणात् । अतो युक्तं तस्य [2]सर्वभोक्तृत्वमिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह —**सहामुनेति** ॥ मुक्ताः अमुना परब्रह्मणा सहैव अविभागेनैव भोगान् [3]भुञ्जत । [4]ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैः भुज्यन्ते । न तु तदभुक्ताः उक्तश्रुतेरित्यर्थः ॥ ४ ॥

———

[मुक्तः भगवद्देहेन स्वस्वरूपदेहेनापि भोगाननुभवतीति प्रतिपादनम् ]

**॥ ओं ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ओं ॥** ४–४–५

मुक्तस्य स्वदेहाभावेऽपि ब्रह्मसम्बन्धिना देहेन भोगोऽस्तीति जैमिनिराचार्यो मन्यते । कुतः ? श्रुतौ तथोपन्यासात् । आदिपदेन स्मृतेः युक्तेश्चेति सूत्रार्थः ।

अत्र न मुक्तानां भोगो युक्तः । शरीराभावादिति प्राप्ते—

अस्त्येव मुक्तानां भोगः । न च शरीराभावः । मुक्तस्य स्वदेहाभावेऽपि परमात्मानं [5]प्रविष्टस्य तद्देहेनैव ग्रहवत् भोगसम्भवात् । न च [6]अत्र प्रमाणाभावः । २"स वा [7]एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमति-

१ ब्रह्मसूत्रन्यायविवरणोदाहृता श्रुतिः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे माध्यन्दिनायनश्रुतित्वेनोदाहृतम् ॥

[1] पूर्णभोक्ता—ग. [2] "सर्व" इति पदं—ग. नास्ति । [3] भुञ्जत इति ज्ञातव्यम् ॥ ४ ॥—ग. [4] "ये भोगाः परमात्मना" इत्यारभ्य "उक्तश्रुतेरित्यर्थः" ॥ ४ ॥ इत्यन्तं—ग. नास्ति । [5] प्रविश्य —ग [6] तत्र –ग. [7] एव —ग.

सृज्य "[1]ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति, ब्रह्मणा शृणोति, ब्रह्मैवेदं सर्वं अनुभवतीति" श्रुतेः ॥

१ "आदत्ते हरिहस्तेन हरिदृष्ट्यैव [2]पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ॥

इति स्मृतेश्च ॥

"[3]गच्छामि [4]विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् ।
इत्यादिपूर्वस्मरणात् मुक्तस्यैतद्भविष्यति ॥" इति

[5]बृहत्तन्त्रोक्तयुक्तेश्च । अथ वा मुक्तानामपि चिन्मात्र[6]देहो विद्यते एव । २ "सर्वं वा [7]एतदचित्परित्यज्य [8]चिन्मात्र एवैष भवति । चिन्मात्र एवावतिष्ठते । तामेतां मुक्तिरित्याचक्षते" । इति श्रुतेः इति सिद्धान्तः कृतः ।

तस्य तात्पर्यमाह— **चिदानन्दशरीरिण इति** ॥ चिदानन्दस्य [9]ज्ञानानन्दादिरूपस्य विष्णोः शरीरं एषामस्तीति चिदानन्दशरीरिणः । अथवा चिदानन्दावेव शरीरं एषामस्तीति चिदानन्दशरीरिण [10]इति विग्रहः । तथाच मुक्तस्य ब्राह्मदेहाभावेऽपि परमात्मानं प्रविष्टस्य ब्रहवत्तद्देहेनैव [11]वा [12]चिदानन्दाद्यात्मकस्वदेहेन वा भोगः सम्भवतीति भावः ॥ ५ ॥

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे उदाहृता स्मृतिः ॥

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे उद्दालकश्रुतित्वेनोदाहृतम् ॥

[1] ब्रह्मणाभिसम्पद्य— ग. [2] पश्यसि— क. [3] "गच्छामि" इत्यारभ्य "बृहत्तन्त्रोक्तयुक्तेश्च" इत्यन्तं — घ. नास्ति । [4] हरिपादाभ्यां— ग. [5] बृहत्तन्त्रोक्तेश्च— क. [6] देह विद्यते — क. [7] एतदत्परित्यज्य—क [8] चिन्मात्र एष घ [9] ज्ञानानन्दरूपस्य—क. [10] इति विग्रहात् -क. इति वा विग्रहः - घ. [11] 'वा'— घ. नास्ति । [12] चिदानन्दात्मकस्वदेहेनैव क. चिदानन्दाद्यात्मकदेहेनैव— ग.

[सङ्कल्पमात्रसाध्य एव मुक्तभोगः इति समर्थनम्]

॥ ओं ॥ **सङ्कल्पादेव च तच्छ्रुतेः** ॥ ओं ॥ ४-४-६

मुक्तानां सङ्कल्पादेव भोगसिद्धिः । कुतः? तच्छ्रुतेः [1]तथा श्रुतेरिति सूत्रार्थः ॥

अत्र मुक्तभोगः न [2]सङ्कल्पमात्रसाध्यः, भोगत्वात् । संसारिभोगवदिति प्राप्ते—

सङ्कल्पमात्रसाध्य एव मुक्तभोगः । १स यदि [3]पितृलोककामो भवति सङ्कल्पादेवास्य पितरः [4]समुत्तिष्ठन्ते । इति श्रुतेः । [5]न चोक्तयुक्तिविरोधः । श्रुतिविरोधेन युक्तेराभासत्वादिति सिद्धान्तः [6]कृतः ॥

तस्य तात्पर्यमाह - **यथा सङ्कल्प[7]भोगाश्चेति** ॥ [8]विशेषणसमुच्चये चशब्दः । यथासङ्कल्पं स्वेच्छामनतिक्रम्य भोगो येषान्ते यथोक्ताः स्वेच्छामात्रसाध्यभोगवन्तः इत्यर्थः ॥ ६ ॥

———

१ छान्दोग्योपनिषत् । (८—२—१)

[1] तत्राश्रुतेरिति—क [2] सङ्कल्पसाध्यः । भोगत्वं - क. [3] पितृकामोभगवति-—घ. [4] समुत्तिष्ठन्ति—घ. [5] "न चोक्तयुक्ति" इत्यारभ्य "आभासत्वात्" इत्यन्तं -घ. नास्ति । [6] "कृतः" इति पदं—ग.घ. नास्ति । [7] भोगा इति—घ. [8] "विशेषणसमुच्चये चशब्दः" इति —घ. नास्ति । "चशब्दः" इति—ग. नास्ति ।

[मुक्ताः न स्वावरनियम्याः किन्तु, स्वोत्तमनियम्याः इति निरूपणम् ]

॥ ओं ॥ अत एव चानन्याधिपतिः ॥ ओं ॥ ४-४-७

मुक्तः अनन्याधिपतिः=[1]कॢप्तपतिभ्योऽन्याधिपतियुक्तो न भवति । कुतः । अत एव सत्यसङ्कल्पत्वादेवेति सूत्रार्थः ॥

अत्र मुक्ताः स्वावरनियम्याः सर्वाधिपतिसदननिविष्टत्वात् । राजसदन[2]निविष्टामात्यवदिति । दृश्यन्ते हि अमात्या अपि राजसदननिविष्टाः नीचैरपि [3]प्रतीहारैः नियम्यमानाः, अतो मुक्तेः [4]संसारसाम्यमिति प्राप्ते--

न [5]मुक्ताः स्वावरनियम्याः किन्तु स्वोत्तमनियम्याः । कुतः? सत्यसङ्कल्पत्वात् । लोके स्वावरनियम्यत्वं ह्यनपेक्षितमेव भवति [6]तच्च [7]तस्य मुक्तस्य [8]सत्यसङ्कल्पत्वादेव न युज्यते ।

१ "[9]परमोऽधिपतिस्तेषां विष्णुरेव न संशयः ।
तत: [10]प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् ॥
एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः ॥"

इति स्मृतेः । अतो युक्तं मुक्तेः संसारवैलक्षण्यं इति सिद्धान्तः कृतः ॥

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे वराहपुराणवाक्यत्वेनोदाहृतम् ।

[1] कॢप्तातिरिक्तोन्याधिपति युक्तो—क. [2] निविष्टात्मेत्यादिवत् – क. निविष्टामात्यादिवत्—घ. [3] प्रतिहारैः—क.ग.घ. तत्त्वप्रकाशिकायां एतदधिकरणे "प्रतीहारैः" इति शब्दः प्रयुक्तः ॥ [4] संसारिसाम्यं—घ. [5] मुक्ताः संसारनियम्याः – ग. [6] 'तच्च' इति—क. नास्ति । [7] 'तस्य' इति—घ. नास्ति । [8] सत्यसङ्कल्पादेव – क. [9] परमोऽपि पतिः—क. [10] प्राणादिनामाः — क.

**यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान् ।**
**अनन्यवशगाश्चैव**

तस्य तात्पर्यमाह **विना स्वाभाविकोत्तमान्, अनन्य**[1]**वशगाश्चैवेति** ॥ च शब्दः पूर्वोत्तरविशेषण[2]समुच्चायकः, कुलपतिभ्योऽन्यपतिनिवारणायैव [3]सूत्रानुसारेणैवानन्यवशगा इत्युक्तम् । अन्यथा [4]अवशगा इत्येवावक्ष्यत् । तस्यैव विवरणं—[5]स्वाभाविकोत्तमानिति स्वरूपोत्तमान् [6]विनेत्यर्थः ॥ ७ ॥

---

[मुक्ताः चिन्मात्रदेहेन वा शुद्धसत्वात्मकदेहेन वा भोगाननुभवन्तीति समर्थनम् ]

**॥ ओं ॥ अभावं बादरिराह ह्येवम् ॥ ओं ॥** ४-४-८

अभावं चिन्मात्रदेहातिरिक्तदेहाभावं बादरिराचार्यो मन्यते । कुतः ? हि यस्मात् १"अशरीरो वा व तदा भवतीति" श्रुतिरेवमाहेति सूत्रार्थः ॥

अत्र न मुक्तानां भोगो युज्यते । [7]देहभावाभावपक्षयोः [8]विरुद्धत्वात् । तथाहि । मुक्तस्य बाह्यदेहो वर्तते न वा । नाद्यः । [9]दुःखप्रसङ्गात् । द्वितीये भोगासम्भवः । [10]अशरीरिणो भोगायोगात् । न च चिच्छरीरेण भोगोपपत्तिः । सुप्त्यादौ [11]सतोऽपि तस्य [12]भोगानायतनत्व-

---

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे कौण्ठरव्यश्रुतित्वेनोदाहृतम् ।

[1] वशगाश्चेति—क. [2] समुच्चा कुलप—क. [3] सूत्रानुसारेणानन्य ग.घ [4] अवशगा इति इत्येव—क.ग. [5] स्वाभाविकोत्तमान्विति—ग स्वाभाविकोत्तमान्विनेति—घ. [6] विनेति ॥ ७ ॥—क. [7] देहभावाभावयोः—क. [8] विरोधात्—क. [9] बाह्यदुःखप्रसङ्गात्—क [10] अशरीरिणां—ग. [11] सन्तोऽपि—क. [12] भोगायतनत्व—ग.घ.

दर्शनात् । न च [1]ब्राह्मेण देहेन तदुपपत्तिः । [2]सायुज्यभाजां कथञ्चिदुपपत्तावपि तदन्येषां अनुपपत्तेरिति प्राप्ते—

युक्त एव मुक्तानां भोगः । चिन्मात्रदेहसद्भावात् । न च सुषुप्त्यादौ तस्य [3]विद्यमानस्यापि [4]भोगायतनत्वादर्शनात् मुक्तावपि तदसम्भवः । अज्ञानाद्यावृतत्वेन [5]तदा भोगायतनत्वाभावेऽपि अज्ञाननिवृत्यनन्तरं तत्सम्भवात् । अथवा युक्त एव मुक्तानां भोगः, बाह्यदेहसद्भावात् । न च तत्र मानाभावः । १"[6]चिता वाऽचिता वा नित्येन वाऽनित्येन वा [7]अथानन्दीह्येवैष भवतीति' श्रुतेः । न च दुःखप्रसङ्गः । [8]दुःखादिरहिता नित्यं' इति वक्ष्यमाणत्वेन कर्मारब्धदेहस्यैव दुःखाविनाभावादिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**चिदानन्दशरीरिणश्चेति** । [9]अत्र चशब्दोऽनुक्तबाह्यदेहसमुच्चायकः । "चिताावाऽचिताावेति" श्रुतेः ॥ ८ ॥

———

[मुक्ताः जगत्सृष्ट्यादिव्यतिरिक्तान् स्वयोग्यकामाननुभवन्तीति प्रतिपादनम् ]

**॥ ओं ॥ जगद्व्यापारवर्ज्यं ॥ ओं ॥ ४-४-९**

जगत्सृष्ट्यादिव्यापारं वर्जयित्वा सर्वकामावाप्तिः मुक्तस्येति सूत्रार्थः ॥

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे औद्दालकश्रुतित्वेनोदाहृतम् ॥

[1] बाह्येन—क. [2] सायुज्यभोगं—क. [3] 'विद्यमानस्यापि' इति—क. नास्ति । [4] भोगायतनत्वादेः दर्शनात्—क. [5] तदभोगायत—क. [6] चितावचिता वा—ग. [7] अथानन्दी ह्येष—क. [8] दुःखादिहीनान्नित्यं—क. [9] 'अत्र' इति—ग.घ नास्ति ।

अत्र मुक्ता अपि [1]पारमेश्वरं सृष्ट्यादिव्यापारं कुर्वन्त्येव । १"सर्वान् कामानिति" श्रुतेः । [2]सृष्ट्यादिव्यापारस्यापि काम्यत्वात् । न च सर्वशब्दसङ्कोचः [3]बाधकाभावादिति प्राप्ते

न मुक्तानां [4]जगद्व्यापारः, प्रमाणाभावात् । न च "सर्वान् कामानिति" श्रुतिः प्रमाणमिति वाच्यम् । [5]योग्यकामावाप्तेरेव श्रुत्यर्थत्वात् । सर्वश्रुतेः [6]कुतः सङ्कोच इति चेन्न ।

२"स्वाधिकानन्दसम्प्राप्तौ [7]सृष्ट्यादिव्याप्रतिष्वपि ।
मुक्तानां नैव कामःस्यात् अन्यान् कामांस्तु भुञ्जते ॥
न चायोग्यं विमुक्तोऽपि प्राप्नुयात् न च कामयेत् ॥"

इति स्मृतेरिति सिद्धान्तः कृतः ॥

तस्य तात्पर्यमाह—**जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते । यतेष्ट[8]शक्तिमन्तश्च इति** ॥ [9]अपि=मुक्ताः अपि । चशब्दः अयोग्यकामनाराहित्यसमुच्चायकः । जगत्सृष्ट्यादिविषय इति क्वचित्पाठः ॥ ९ ॥

---

१ ऐतरेयारण्यकम् । (२ · ५—४)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे वराहपुराणवाक्यत्वेनोदाहृतम् ॥

[1] परमेश्वरं—क. परमेश्वरसृष्ट्यादि—ग. [2] 'सृष्ट्यादिव्यापारस्यापि काम्यत्वात्' इति—घ. नास्ति । [3] बाधकाभावात्—क. [4] जगद्व्यापारवर्जः—क. [5] योग्यकामनावाप्तिरेव—ग. [6] 'कुतः' इति—ग नास्ति [7] सृष्ट्यादौ व्याप्रतिष्वपि—घ. सृष्ट्यादिव्यापारनिधिपि—क [8] शक्तिमन्तश्चेति । महासामर्थ्यमीश्वरस्येति शेषः । अपि शब्दात् (अपि पदात्—घ.) स्वयोग्यानन्दादि (स्वयोग्याधिकानन्दादि—घ.) प्राप्तिं च ऋते यथेष्टशक्तिमन्त इति ज्ञेयम् । च शब्दः अवरमुक्तनियामकत्वसमुच्चायकः । "मुक्तस्वकीयावरयन्तृता च" इति वचनात् । जगत्सृष्ट्यादिविषयमिति क्वचित्पाठ ॥ ९ ॥—ग. घ. [9] "अपि मुक्ता अपि" इत्यारभ्य "क्वचित्पाठः" इत्यन्तं—ग घ. नास्ति ॥

[न मुक्तानन्दादीनां वृद्धिह्रासौ विद्येते, मुक्तोपासना तु फलरूपैव न साधनरूपेति समर्थनम् ]

॥ ओं ॥ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ओं ॥ ४ ४-१०

"न जायत इति" श्रुतिः, स्थितिं मुक्तानामेकप्रकारेण अवस्थानमाह । महतां प्रत्यक्षं कारणशून्यत्वानुमानं च एवमेकप्रकारेण [1]अवस्थितिं दर्शयत इति सूत्रार्थः ॥

[2]अत्र मुक्तस्याप्या[3]नन्दादीनां वृद्धिह्रासौ विद्येते । १"एतत्साम गायन्नास्ते" इति तस्याप्युपासनादिसाधनश्रवणादिति प्राप्ते—

न मुक्तानन्दादीनां वृद्धिह्रासौ [4]विद्येते । [5]किन्त्वेकप्रकारेणैवावस्थानम् । कुतः ? २"स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते । न म्रियते । न हीयते । न वर्धते । न ह्रसते । स्थित एव सर्वदा भवती"ति श्रुतेः । [6]वृध्याद्यभावग्राहिमहत्प्रत्यक्षात् । मुक्तो न वृध्यादिमान् कारणशून्यत्वादिति अनुमानाच्च । न चोपासनाविरोधः । मुक्तिगतोपासनादेश्च फलरूपत्वेन साधनरूपत्वाभावात् ।

---

१ तैत्तिरीयोपनिषत् । (३—१०)

२ ब्रह्मसूत्रभाष्ये एतदधिकरणे जाबालश्रुतित्वेनोदाहृतम् ।

[1] अवस्थि—ग. [2] अत्रमुक्तस्य—क [3] नन्दादिवृद्धिहासो विद्यते—क. आनन्दादिवृद्धिहासौ विद्येते—ग. [4] विद्येते । अनुमानाच्च । न चोपासनाविरोधः—क. [5] "किन्त्वेकप्रकार" इत्यारभ्य "कारणशून्यत्वादिति" इत्यन्तं—क. नास्ति । [6] "वृध्याद्यभाव" इत्यारभ्य "अनुमानाच्च" इत्यन्तं—घ. नास्ति ।

वृद्धिह्रासविवर्जितः ।

१"हरेरुपासना चात्र सदैव सुखरूपिणी ।
न च साधनभूता सा सिद्धिरेवात्र सा यतः" ॥

इति स्मृतेरिति सिद्धान्तः [1]कृतः ॥

तस्य तात्पर्यमाह —**वृद्धिह्रास [2]विवर्जिता इति** ॥ १० ॥

———

[न मुक्तः पुनरावृत्तिमानिति निरूपणम् ]

**॥ ओं ॥ अनावृत्तिश्शब्दात् अनावृत्तिश्शब्दात् ॥ ओं ॥ ४-४-११**

मुक्तानामनावृत्तिः । न [3]स्वर्गिवत् पुनरावृत्तिः । कुतः ? शब्दात्=तथा श्रुतेः । समस्तशास्त्रावधारणार्था [4]सूत्रस्य द्विरुक्तिरिति सूत्रार्थः ॥

अत्र मुक्तः पुनरावृत्तिमान् स्वस्थानं विहाय [5]अन्यत्र गतत्वात् । [6]स्वर्गादिगतवदिति प्राप्ते—

न मुक्तः पुनरावृत्तिमान्, २"न च पुनरावर्तते, न च पुनरावर्तते" इति श्रुतेः, इति सिद्धान्तः कृतः ॥

———

१ ब्रह्मसूत्रभाष्ये एतदधिकरणे ब्रह्मवैवर्तवाक्यत्वेनोदाहृतम् ॥

२ छान्दोग्योपनिषत् । (८—१५—१)

[1] 'कृतः' । इति—ग. नास्ति । [2] विवर्जित इति—क.ग. [3] स्वर्गीव—क. [4] सूत्रस्यैव—क [5] अन्यगतत्वात्—क. [6] स्वर्गादिवत—क.

**दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् ॥**

**पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसङ्ग्रहः ।**
**कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः ॥**

---

तस्य तात्पर्यमाह—**दुःखादीति** ॥ आदिपदेन अज्ञानादिपरिग्रहः । अविरतं सन्ततं अविच्छिन्नमित्यर्थः । "सन्तताविरतानिशम्" इत्यमरः । सुखं स्वरूपानन्दं नित्यं सर्वदा पुनरावर्तिरहिता इति यावत् । मोदन्ते अनुभवन्ति । मोदनस्य [1]आनन्दानुभवरूपत्वेऽपीह सुखमिति श्रवणादनुभवमात्रं [2]ग्राह्यम् । तदेवं विरक्तिभक्ति उपास्तिजनितभगवत्साक्षात्कारोदिततत्प्रसादात् अशेषपुरुषार्थप्रवरकैवल्यसिद्धेः अशेषगुणपूर्णतया निर्दोषतया [3]ज्ञेयतया गम्यतया च [4]श्री भगवान्नारायणो जिज्ञास्य इति सिद्धम् ॥ ११ ॥

अथायं भाष्यकारः स्वभाषितभाष्यस्य [5]अत्याप्तिमूलत्वसमर्थनाय [6]श्रुतिप्रसिद्धं [7]स्वस्य परमाप्तत्वं दर्शयन्, तथा शिष्याणां आदरातिशयजननाय [8]ग्रन्थाणुत्वेऽपि [9]अर्थाधिक्यं च दर्शयन् स्वकृतग्रन्थस्य [10]हरिप्रीतिमेव फलत्वेन प्रार्थयते ॥ **पूर्णप्रज्ञेनेति** ॥ दशप्रमतिशब्दपर्याय[11]पूर्णप्रज्ञशब्दप्रयोगेण स्वस्य १ "[12]तृतीयमस्य [13]ऋषभस्य दोहसे दशप्रमतिं जनयन्त

---

१ बलित्थासूक्तम् ।

[1] आनन्दानुभवपरत्वेऽपि—क. ग. [2] ग्राह्यम् । यद्वा नित्यं मोदन्ते, कुतः ? यतोऽविरतं सुखं सुखसाधनमिति योजना । तदेवं—घ. [3] "ज्ञेयतया गम्यतया" इति—ग. नास्ति । [4] श्रीमद्भगवान्नारायणो - क [5] आप्तिमूलत्व—क. [6] श्रुतिसिद्धं—क. [7] तस्य—क. [8] ग्रन्थस्याप्यणुत्वेऽपि—क. ग्रन्थस्याणुत्वेपि—ग. [9] आधिक्यं दर्शयन्—क. [10] हरिप्रीतिरेव फलत्वेन—क. [11] पूर्णशब्द - क [12] तृतीयमस्येति श्रुति—क. [13] "ऋषभस्य दोहसे" इत्यारभ्य "सूरयः इत्यादि" इत्यन्तं—क. ग नास्ति ।

योषण: । निर्यदीं बुध्नान्महिषस्य वर्पसा ईशानास: श्रवसा क्रन्त सूरय:" इत्यादि [1]श्रुतिप्रसिद्धिं सूचयति ॥ तदुक्तं स्थानान्तरे १"यस्य त्रीण्युदितानि वेदवचने" इति । [2]पूर्णप्रज्ञेनेत्यनेन विवक्षितार्थतत्वज्ञानं, [3]मुनिनेत्यनेन [4]अविप्रलम्भकत्वं, सर्वशास्त्रार्थसङ्ग्रह: अयं ग्रन्थ: कृत इत्यनेन विवक्षाकरणपाटवावपि सूचयति । [5]रमापतिरित्यनेन रमाया: [6]सकलवाङ्मनसदेवतात्वेन तत्महितस्यैव परमात्मन: [7]प्रीत्याशासनं [8]युक्तमिति सूचयति ॥

[9]अयमत्र तृतीयमित्यादिश्रुत्यर्थ: । ऋषभस्य देवश्रेष्ठस्य अस्य वायो: तृतीयं दशप्रमतिं पूर्णप्रज्ञनामकं रूपं "दशेतिपूर्णमुद्दिष्टं" इति वचनात् । योषण: योषित: आचार्याणां मातृत्वेन पूज्यत्वात् बहुवचनम् । दोहसे ज्ञानदोहनार्थं जनयन्त अजनयन्त । ईशानास: रुद्राद्या: सूरय: ज्ञानिन: महिषस्य महितषड्गुणस्य हरे: वर्पस: वरणीयत्वात् पालकत्वात् वर्पोनामकान् गुणान् ज्ञानादीन् यत् यस्मात् ईं एव यस्मादेवेत्यर्थ: । बुध्नात् बोधरूपात् पूर्णबोधाख्यावतारात् । श्रवसा सुखेन निरक्रन्त नितरां ज्ञातवन्त: । तत्तृतीयं वपुरिति पूर्वेण सम्बन्ध: । अत: परमाप्ततमप्रणीतत्वादिदं भाष्यं सर्वसज्जनैरादरेण अङ्गीकार्यमिति भाव: ॥

---

१ ब्रह्मसूत्रभाष्यस्य अन्तिम श्लोकत्वेनोक्तम् ॥

1 श्रुतिप्रसिद्धं—क. 2 पूर्णप्रज्ञेत्यनेन—क. 3 मुनिना यतिनेत्यनेन—क. 4 विप्रलंभकत्वं—क. 5 रमापतिरिति रमाया:—ग घ. 6 'सकल' इति—ग. नास्ति । 7 प्रीत्याशंसनं—क. 8 कार्यमिति—क.घ. 9 "अयमत्र" इत्यारभ्य "अङ्गीकार्यमिति भाव." इत्यन्तं—क ग नास्ति ।

**नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ।**
**विरिञ्चशर्वपूर्वेड्यवन्द्याय श्रीवराय ते ॥**

[1]अथ स्वस्वरूपप्रतिपादनेनैव ग्रन्थो [2]न परिसमापनीय इत्याशयेन अन्तेऽपि मङ्गलाचरणस्य आवश्यकत्वात् [3]एतद्ग्रन्थप्रतिपाद्यगुण[4] विशिष्टतया भगवन्नतिस्तुतिरूप[5]मङ्गलमाचरति— **नमो नम इति** ॥ द्विरुक्तिरादरार्था । अशेषदोषैः [6]दूराः तदसमानाधिकरणा इति यावत् । पूर्णाः [7]निरवधिकाः गुणाः एव आत्मा स्वरूपं यस्य [8]स तथा तस्मै । विरिञ्चशर्वपूर्वैः ईड्यः स्तुत्य इति [9]सम्बुद्धिः । [10]अथवा विरिञ्चशर्वपूर्वेड्यैः वन्द्यायेत्यर्थः । [11]वन्द्याय ज्ञेयाय गम्याय चेत्यर्थः । [12]धातूनामनेकार्थत्वात् । [13]यद्वा विरिञ्चशर्वपूर्वैः ईड्याय वन्द्यायेत्यर्थः । ब्रह्मादयः तत्त्वज्ञानार्थं भगवन्नुत्यादिकं कुर्वन्तीति यावत् । श्रीवराय, श्रियः सर्वाभीष्टदात्र्याः लक्ष्म्याः वराय उत्तमायेत्यर्थः । सर्वदा अपरोक्षीकृत[14]भगवत्त्वात्त इति अपरोक्षनिर्देशः । पूर्वार्धेन पूर्वाध्यायद्वयार्थः । उत्तरार्धेन [15]उत्तराध्यायद्वयार्थोऽपि प्रदर्शित इति अशेषमिति मङ्गलम् ॥

प्रत्यध्यायं प्रतिनयं प्रतिपादं च वर्णशः ।
वासुदेवादिरूपेण प्रोक्तो विष्णुः प्रसीदताम् ॥ १ ॥

---

[1] ततः—ग. 'अथ' इति—ग घ नास्ति । [2] "न" इति—क. नास्ति । [3] ग्रन्थप्रतिपाद्य—ग. [4] विशिष्टतभगवन्नति—क. [5] मङ्गत्वलमाचरति—ग मङ्गलत्वमाचरति—घ. [6] दूरः—क. [7] निरधिकाः—क [8] 'स' इति—ग. नास्ति । [9] सम्बन्धः—क. [10] "अथवा" इत्यारभ्य "वन्द्यायेत्यर्थः" इत्यन्तं—क.ग. नास्ति। [11] "वन्द्याय" इत्यारभ्य "अनेकार्थत्वात्" इत्यन्तं—घ. नास्ति । [12] "धातूनां" इत्यारभ्य "उत्तमायेत्यर्थः" इत्यन्तं—ग. नास्ति । [13] "यद्वा विरिञ्च" इत्यारभ्य "कुर्वन्तीति यावत्" इत्यन्तं—क.ग. नास्ति । [14] भगवत्त्वतः—क. [15] उत्तराध्यायद्वयार्थो दर्शितः—ग.

मदाचार्यमनोधाममध्वमानसमञ्चके ।
शयानः श्रीधराश्लिष्टः [1]तुष्येन्मत्कृतितो हरिः ॥ २ ॥

बहुग्रन्थान् समालोच्य बहुज्ञैः संविचार्य च ।
कृतत्वात् बुद्धिशुध्यर्थं कृपयन्तूत्तमा मयि ॥ ३ ॥

छलारिनरसिंहार्य[2]शिष्यशेषविनिर्मिता ।
अणुभाष्यस्य टीका स्यात् सतां सन्तोषकारिणी ॥ ४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य
टीकायां श्रीमच्छलारीनरसिंहाचार्याणां निजशिष्येण शेषेण
विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य
चतुर्थपादः समाप्तः ।

चतुर्थाध्यायश्च समाप्तः ।

समाप्तोऽयं ग्रन्थः ।

॥ श्री कृष्णार्पणमस्तु ॥

---

[1] तुष्येत्सत्कृतितो हरिः —ग.  [2] प्रियशिष्येण निर्मिता —क.

# अनुबन्धः

॥ श्रीः ॥

# श्रीमद्ब्रह्मसूत्राधिकरणसूत्रानुक्रमणिका

॥ ॐ ॥

# ॥ साकरप्रमाणाकाराद्यनुक्रमणिका ॥

| क्रमसं | प्रमाणानि | आकर | पुटसंख्या |
|---|---|---|---|
| 20 | अथ ह नित्या | — — | 89 |
| 21 | अथात आनन्दस्य | तै.उ 2, 8 | 172 |
| 22 | अथाविद्वान् | — — | 151 |
| 23 | अथैक एव | शाण्डिश्रु | 104 |
| 24 | अथैतयो: | छां 5, 10, 8 | 148 |
| 25 | अथैनं यजमानं | कौण्डि.श्रु | 139 |
| 26 | अथैष एव | बृह 6, 3, 33 | 176 |
| 27 | अधिकारं फलं | भाग.ता 1, 1, 1 | 2 |
| 28 | अद्भ्यो हीदमु | कौण्डि.श्रु | 130 |
| 29 | अनादिनिधना | — — | 63 |
| 30 | अनादिर्वा | — — | 88 |
| 31 | अजामेकां | म.ना.उ 9, 2 | 86 |
| 32 | अनुरूप: क्रम: | प.पु | 97 |
| 33 | अन्तर्दृष्ट्यो | कम | 224 |
| 34 | अन्तर्ग अणु | कौण्डि.श्रु | 125 |
| 35 | अन्तस्तमसि | — — | 98 |
| 36 | अन्त: प्रविष्टं | तै.आ 3, 11 | 12 |
| 37 | अन्नं रसादि | — — | 69 |
| 38 | अन्यज्ञानं तु | — — | 177 |
| 39 | अन्य: परोऽन्यो | काषा.श्रु | 108 |
| 40 | अपरं त्वक्षरं | स्कां.पु | 29 |
| 41 | अपाम सोमं | ऋ 8, 48, 3 | 141 |
| 42 | अप्रसिद्धेरवा | गरुड | 9 |
| 43 | अयमग्निर्वैश्वा | बृह 7 | |

| क्रमसं | प्रमाणानि | आकराः | पुटसंख्या |
|---|---|---|---|
| 175 | तद्य इह शुभ | भाल.श्रु | 146 |
| 176 | तद्यच्छेज्ज्ञान | काठ 3, 13 | 97 |
| 177 | तद्यथा पुष्कर | छां 4, 3, 7 | 262 |
| 178 | तद्यथा ह्यणु | शाण्डि श्रु | 118 |
| 179 | तद्येशीका | छां 5, 24, 3 | 263 |
| 180 | तद्धि त्वं प्राणो | तै.आ 3, 14 | 15 |
| 181 | तद्धि त्वं प्राणो | तै.आ. 3, 14 | 41 |
| 182 | तमेव भान्त | काठ 5, 15 | 39 |
| 183 | तमेव भान्त | श्वे.उ. 3, 8 | 221 |
| 184 | तमेवं विदित्वा | श्वे.उ. 3, 8 | 220 |
| 185 | तमेवं विद्वान् | तै.आ 3, 12, 7 | 141 |
| 186 | तमेवैकं जानथ | मुं 2, 2, 5 | 34 |
| 187 | तमेवैकं जानथ | मुं 2, 2, 5 | 229 |
| 188 | तस्मादशेषा | अनुव्या | 287 |
| 189 | तस्मान्मन | ऐ.आ 2, 11, 8 | 116 |
| 190 | तस्मिन्नेतस्मिन् | छां 5, 4, 2 | 139 |
| 191 | तस्य प्रियमेव | तै.उ. 1, 5 | 192 |
| 192 | तस्याभिध्याना | श्वे.उ 1, 10, | 95 |
| 193 | तस्यैतस्या सा | ऐ.आ. 3, 2, 1 | 23 |
| 194 | ता अन्नमसृ | छां 6 | 93 |
| 195 | ता वा एता | ऐ.आ 2, 2, 2 | 52 |
| 196 | तासां त्रिवृतं | छां 6, 2, 2 | 136 |
| 197 | तासां त्रिवृतं | छां 6, 2, 2 | 128 |

| क्रम सं | प्रमाणानि | आकराः | पुटसंख्या |
|---|---|---|---|
| 198 | तिर्यक्षु नरके | भ.प | 151 |
| 199 | तुष्टोऽर्थे न गुरु | महा | 234 |
| 200 | तृतीयमस्य | ब्र सू | 307 |
| 201 | तेजः परस्यां | छां 6, 15, 1 | 274 |
| 202 | ते यदन्तरा | छां 8, 14, 1 | 46 |
| 203 | तेऽर्चिषमभि | छा 5, 10, 1 | 281 |
| 204 | ते वा एते | काषा.श्रु | 99 |
| 205 | त्रैविद्या मां | भ.गी 9, 20 | 144 |

(द)

| | | | |
|---|---|---|---|
| 206 | दर्शनेनात्म | अध्या | 226 |
| 207 | दिवः स्थास्नूत् | पौष्या.श्रु | 156 |
| 208 | दिवीव चक्षु | ऋ 1, 22, 10 | 118 |
| 209 | दृष्ट्वैव ह्यव | अध्या | 224 |
| 210 | दृष्ट्वैव तं मुच्य | — — | 224 |
| 211 | देवस्यैष स्व | मां.उ 2, 9 | 72 |
| 212 | देवा वा व सर्व | च.शि | 289 |
| 213 | द्रव्यं कर्म च | — | 73 |
| 214 | द्वादश वा एते | कौण्डि.श्रु | 117 |
| 215 | द्वादशैवेन्द्रि | पौत्रा.श्रु | 127 |
| 216 | द्वावेव मार्गौ | ब्र.त | 282 |
| 217 | द्विधा हैवे | गौप.श्रु | 114 |
| 218 | द्विरूपावंश | वरा.पु | 110 |

| क्रमसं | प्रमाणानि | आकराः | पुटसंख्या |
|---|---|---|---|
| 259 | पायूपस्थेऽपानं | षट्.उ 3, 6 | 123 |
| 260 | पुण्येन पुण्य | षट्.उ 3, 7 | 72 |
| 261 | पुण्येन पुण्यं | षट्.उ 3, 7 | 182 |
| 262 | पुरुषस्य मृतौ | ब्रा.पु | 138 |
| 263 | पूजयेन्नान्य | — | 229 |
| 264 | पूर्णानन्दः पूर्ण | — | 298 |
| 265 | पूर्वं मनस्स | वायु | 115 |
| 266 | पूर्वस्मादुत्त | बृ.त | 219 |
| 267 | पृथिवीं शरीर | — | 130 |
| 268 | पृथिव्यां ऋभ | महो | 272 |
| 269 | प्रकृतिं पुरुषं | कौ.पु | 68 |
| 270 | प्रज्ञान्तर | ब्र.सू 3, 3, 32-52 | 240 |
| 271 | प्रतिबिम्बो | — | 275 |
| 272 | प्रतीकं देह | गरु.पु | 289 |
| 273 | प्रदर्शकस्तु | — | 164 |
| 274 | प्रधानादिद | — | 65 |
| 275 | प्राज्ञेनात्मना | बृ. 6, 3, 35 | 45 |
| 276 | प्राज्ञेनात्मना | बृ. 6, 3, 35 | 47 |
| 277 | प्राज्ञेनात्मना | बृ 6, 3, 11 | 47 |
| 278 | प्राण एवाध | — | 125 |
| 279 | प्राणः परमु | बृह | 269 |
| 280 | प्राणश्च प्राणाश्च | गौप श्रु | 120 |
| 281 | प्राणा एवा | काषा श्रु | 113 |

| क्रसं | प्रमाणानि | आकरा. | पुटसंख्या |
| --- | --- | --- | --- |
| 321 | मनोगतांस्तु | ब्र.पु | 160 |
| 322 | ममैवांशो | भ.गी 1, 5, 7 | 109 |
| 323 | महत: परम | कठ 1, 3, 15 | 51 |
| 324 | महत्त्वबुद्धि | प.पु | 171 |
| 325 | मासेभ्य: संव | कौण्डि.श्रु | 283 |
| 326 | मिश्राणि हि | काषा.श्रु | 130 |
| 327 | मिश्राणि हि | काषा.श्रु | 136 |
| 328 | मुक्ता अपि हि | ब्र.त | 204 |
| 329 | मुक्ता: प्राप्य परं | भ.प | 297 |
| 330 | मुक्तावपि ह्ये | सौप | 261 |
| 331 | मुख्यप्राणादिदं | वायु | 120 |
| 332 | मुख्यस्यैव | गौप.श्रु | 123 |
| 333 | मृत्यत्र: पृथिव्यां | च.शि | 272 |
| 334 | मृदब्रवीत् | शत.ब्रा 6, 1, 3 | 64 |

(य)

| क्रसं | प्रमाणानि | आकरा. | पुटसंख्या |
| --- | --- | --- | --- |
| 335 | य आकाशे तिष्ठन् | बृह 5, 7, 12 | 54 |
| 336 | य आत्मा अप | छां 8, 7, 3 | 39 |
| 337 | य आत्मा अप | छां 8, 7, 3 | 38 |
| 338 | य आत्मानमन्त | अं.ब्रा | 69 |
| 339 | य एष आनन्द: | — | 177 |
| 340 | य एषोऽन्तर | छां 4, 15 | 26 |
| 341 | य एषोऽन्तर | छां 4, 15 | 244 |

| क्रमसं | प्रमाणानि | आकराः | पुटसंख्या |
|---|---|---|---|
| 366 | यदादित्यगतं | भ.गी 15, 12 | 40 |
| 367 | यदापश्यःपश्यते | मुं 3, 1, 3 | 169 |
| 368 | यदाश्रयादस्य | महाभा | 121 |
| 369 | यदाह वै पुरु | बृह 7, 10, 1 | 281 |
| 370 | यदिदं किञ्च | कठ 2, 3, 2 | 44 |
| 371 | यदिह वाव | कौषा.श्रु | 288 |
| 372 | यदु किञ्चेमाः | माध्य.श्रु | 246 |
| 373 | यन्मनसा न | केन 1, 6 | 180 |
| 374 | यः पृथिव्यांति | बृह 5, 7, 3 | 27 |
| 375 | यः प्राणे तिष्ठन् | बृह 5, 7, 16 | 126 |
| 376 | यमेवैष वृणुते | काठ 2, 23 | 171 |
| 377 | यं यं लोकं मन | मुं 3, 1, 10 | 239 |
| 378 | य एष सुप्तेषु | काठ 3, 5, 8 | 160 |
| 379 | यस्त्वेतमेवं | छां 5, 18, 1 | 30 |
| 380 | यस्माद्विरेव | ब्रा.पु | 128 |
| 381 | यस्मिन् द्यौः | मुं 2, 2, 5 | 34 |
| 382 | यस्मिन् पञ्च | बृह 6, 4, 17 | 53 |
| 383 | यस्मिन् यस्मिन् | पौत्रा.श्रु | 235 |
| 384 | यस्य त्रीण्युदि | ब्र.सू.भा 4, 4, 11 | 308 |
| 385 | यस्य यावद्गुणाः | — | 189 |
| 386 | या प्राणेन सं | कठ 2, 1, 7 | 56 |
| 387 | यानेवाहं शृणोमि | च.शि | 297 |
| 388 | यावत्सेवा परे | स्कां.पु | 194 |

| क्रमसं | प्रमाणानि | आकराः | पुटसंख्या |
| --- | --- | --- | --- |
| 389 | यावदिन्द्राश्च | स्कां पु | 146 |
| 390 | यावन्नवाङ्ग | छां 6, 15, 1 | 268 |
| 391 | यो देवनां नाम भा | — | 25 |
| 392 | योऽयं विज्ञानमयः | बृह 6, 3, 7 | 45 |
| 393 | यो वेद निहितं | तै.उ 2, 1 | 25 |
| 394 | यो वै भूमा | छां 7, 23 | 35 |
| 395 | योऽसौ विरुद्धो | पैङ्गि | 70 |

(र)

| | | | |
| --- | --- | --- | --- |
| 396 | रुजं द्रावयते | ब्र.पु | 35 |
| 397 | रुद्रो माविशान्तकः | महाना 16, 2 | 94 |
| 398 | रुद्रो वाव लोका | त.प्र.चं 3, 11 | 34 |
| 399 | रूपं रूपं प्रति | ऋ 4, 7, 33 | 110 |
| 400 | रूपं रूपंप्रति | ऋ 4, 7, 33 | 170 |
| 401 | रौरवोऽथ महां | महा | 147 |

(व)

| | | | |
| --- | --- | --- | --- |
| 402 | वसन्ते वसन्ते | महा | 52 |
| 403 | वागिन्द्रियस्य | वायु | 116 |
| 404 | वाग्वाव नित्या | पौष्या.श्रु | 116 |
| 405 | वाङ्मनसि सम्प | छां 6, 15, 1 | 269 |
| 406 | वाचा विरूप | ऋ 8, 64, 6 | 63 |

| क्रमसं | प्रमाणानि | आकराः | पुटसंख्या |
|---|---|---|---|
| 428 | श्रुत्वात्मानं मति | सौप | 250 |
| 429 | श्रुत्वा मत्वा तथा | ब्र.त | 215 |
| 430 | श्रोतव्यो मन्तव्यो | बृ. , 4, 5 | 218 |
| | श्रोतव्यो मन्तव्यो | बृ. 4, 4, 5 | 185 |

(स)

| | | | |
|---|---|---|---|
| 2 | स आत्माऽतत्त्व | छां 6, 8, 7 | 253 |
| 433 | स आत्मा, स आत्मानः | — | 102 |
| 434 | स आत्मेदं | — | 102 |
| 435 | स इतो गतो | — | 283 |
| 436 | स इदं सर्वं | — | 95 |
| 437 | स एकधा | पारा.श्रु | 103 |
| 438 | स एनान् ब्रह्म | छां 4, 15-6 | 286 |
| 439 | स एव जागरिते | कौण्ठ.श्रु | 162 |
| 440 | स एष एतस्मिन् | जा.श्रु | 305 |
| 441 | स खल्वेवं वर्त | छां 8, 15, 1 | 247 |
| 442 | सच्चिदानन्द | ब्र.त | 191 |
| 443 | स तत्र पर्येति | छां 8, 12, 3 | 294 |
| 444 | स तपोऽतप्यत | तै.उ 3, 1, 2 | 254 |
| 445 | सता सोम्य तदा | छां 6, 8-1 | 163 |
| 446 | सत्यं पूर्णं विज्ञानं | — | 211 |
| 447 | स दुःखाद्विमुक्तः | पैङ्गि | 106 |
| 448 | सदेव सौम्य | छां 6, 2, 1 | 37 |

| क्रमसं | प्रमाणानि | आकराः | पुटसंख्या |
|---|---|---|---|
| 449 | स नित्यो निरव | गोप.श्रु | 103 |
| 450 | सन्ततविरता | नामर्लि | 307 |
| 451 | सप्त प्राणाः प्रभ | मुं.उ 2, 1, 8 | 117 |
| 452 | सप्त प्राणास्तव | भ.प | 118 |
| 453 | सप्त सुप्रथमा | म.व्या.सू | 257 |
| 454 | सप्रतीकाश्चतु | — | 289 |
| 455 | समुद्रे अन्तः | तै.आ 3, 11, 11 | 13 |
| 456 | समोऽपि भगवान् | — | 226 |
| 457 | सम्पूर्णोपासना | प.पु | 190 |
| 458 | सम्यग्लक्षण | प.रा | 223 |
| 459 | स यदि पितृ | छां 8, 2, 1 | 300 |
| 460 | स यद्यदेवा | बृह 3, 2, 5 | 24 |
| 461 | स योऽतोऽश्रुतः | ऐ आ 3, 2-4 | 54 |
| 462 | सर्वकर्ताऽपि | — | 121 |
| 463 | सर्वच्छन्दोऽस्मि | वा. पु. | 18 |
| 464 | सर्वत्र सर्व | च.शि | 181 |
| 465 | सर्वनाम्नां च | प.पु | 129 |
| 466 | सर्ववर्णाश्रमै | सदा. 32 | 5 |
| 467 | सर्वं वा एत | उ.श्रु | 299 |
| 468 | सर्वस्यवशी | बृह 6, 4, 21 | 48 |
| 469 | सर्वं ह्येवैत | गौप.श्रु | 121 |
| 470 | सर्वाणि रूपाणि | तै. आ. 3, 12 | 129 |
| 471 | सर्वान् कामान् | ऐ.उ 2, 5, 4 | 304 |

| क्रमसं | प्रमाणानि | आकर : | पुटसंख्या |
|---|---|---|---|
| 472 | सर्वान् गुणान् | भाल्ल.श्रु | 200 |
| 473 | सर्वायतना | वत्स | 212 |
| 474 | सर्वे गुणा:ब्रह्म | — | 207 |
| 475 | सर्वे देवा:प्राण | कौषा.श्रु | 275 |
| 476 | सर्वे वा एते | कौण्ठ.श्रु | 146 |
| 477 | सर्वे वा एते | कौण्ठ.श्रु | 122 |
| 478 | सर्वेषु भूतेषु | ऐ.आ 3, 2, 3 | 168 |
| 479 | सर्वैर्गुणैः देव | — | 236 |
| 480 | संवत्सरात् तटि | गौप.श्रु | 284 |
| 481 | स वा एष एत | बृह 6, 3, 15 | 46 |
| 482 | स वा एष देवता | — | 89 |
| 483 | स वा एष परो | छां 1, 9 | 14 |
| 484 | स वा एष प्राणो | कौण्डि.श्रु | 125 |
| 485 | स वा एष ब्रह्म | माध्य.श्रु | 298 |
| 486 | स वा एष महा | बृह 6, 4, 24 | 48 |
| 487 | स वायुमाग | बृह 7, 10, 1 | 284 |
| 488 | स विष्णुराह | साम.अग्नि | 4 |
| 489 | स शिरः स दक्षि | — | 12 |
| 490 | स स्वर्गे भूमौ | पौत्रा.श्रु | 148 |
| 491 | सिद्धान्तनिर्णा | अनुव्या | 290 |
| 492 | सृष्टि च पाल | ब्र.पु | 174 |
| 493 | सोऽनादिना पु | — | 105 |
| 494 | सोऽस्माच्छरीरा | पौष्या.श्रु | 02 |

# प्रमाणाकरसंज्ञाक्षरविवरणम्

| क्रमसं | संज्ञाक्षराणि | विवरणम् |
|---|---|---|
| | (अ) | |
| 1 | अं | अंभ्रणीसूक्तम् |
| 2 | अं.ब्रा. | अन्तर्यामिब्राह्मणम् |
| 3 | अग्नि.श्रु. | अग्निवेश्यश्रुतिः |
| 4 | अध्या. | अध्यात्मस्मृतिः |
| 5 | अथ.उ. | अथर्वणोपनिषत् |
| 6 | अनुव्या. | अनुव्याख्यानम् |
| | (आ) | |
| 7 | आथ.उ. | आथर्वणोपनिषत् |
| 8 | आ.पु. | आग्नेयपुराणम् |
| | (उ) | |
| 9 | उ.श्रु. | उद्दालकश्रुतिः |
| | (ऋ) | |
| 10 | ऋ. | ऋक्संहिता |
| | (ऐ) | |
| 11 | ऐ.आ. | ऐतरेयारण्यकम् |

| क्रमसं | संज्ञाक्षराणि | विवरणम् |
|---|---|---|
| | (क) | |
| 12 | कठ. | कठश्रुतिः |
| 13 | कम | कमठश्रुतिः |
| 14 | काठ | काठकोपनिषत् |
| 15 | काषा.श्रु. | काषायणश्रुतिः |
| 16 | कू.पु. | कूर्मपुराणम् |
| 17 | केन | केनोपनिषत् |
| 18 | कौण्ठ.श्रु. | कौण्ठाख्यश्रुतिः |
| 19 | कौण्डि.श्रु. | कौण्डिन्यश्रुतिः |
| 20 | कौ.पु. | कौर्मपुराणम् |
| 21 | कौशि.श्रु. | कौशिकश्रुतिः |
| 22 | कौषा.श्रु. | कौषारवश्रुतिः |
| | (ग) | |
| 23 | ग.पु | गरुडपुराणम् |
| 24 | गर्भ.श्रु. | गर्भश्रुतिः |
| 25 | गौप.श्रु. | गौपवनश्रुतिः |
| | (च) | |
| 26 | च.शि. | चतुर्वेदशिखा |
| 27 | चि.उ. | चित्युपनिषत् |
| 28 | चं | चन्द्रिका |

| क्रमसं | संज्ञाक्षराणि | विवरणम् |
|---|---|---|
| | (छ) | |
| 29 | छां | छान्दोग्योपनिषत् |
| | (ज) | |
| 30 | जा.श्रु. | जाबालश्रुतिः |
| | (त) | |
| 31 | तं.सा.सं. | तन्त्रसारसङ्ग्रहः |
| 32 | त.प्र. | तत्त्वप्रकाशिका |
| 33 | तल | तलवकारोपनिषत् |
| 34 | तै.आ. | तैत्तिरीयारण्यकम् |
| 35 | तै.उ | तैत्तिरीयोपनिषत् |
| | (न) | |
| 36 | ना.अ | नारायणाध्यात्मम् |
| 37 | ना.त | नारायणतन्त्रम् |
| 38 | ना.प | नारायणपञ्चम् |
| 39 | ना.पु | नारदीयपुराणम् |
| 40 | नामलिं | नामलिङ्गानुशासनम् |
| 41 | नारा.त | नारायणतन्त्रम् |
| 42 | न्या वि. | न्यायविवरणम् |
| | (प) | |
| 43 | प.पु. | पद्मपुराणम् |

| क्रमसं | संज्ञाक्षराणि | विवरणम् |
|---|---|---|
| 44 | प.रा. | पञ्चरात्रम् |
| 45 | प.श्रु. | परमश्रुतिः |
| 46 | पा.पु. | पाद्मपुराणम् |
| 47 | पारा.श्रु. | पाराशर्यायणश्रुतिः |
| 48 | पि.शा. | पिप्पलादशाखा |
| 49 | पु सू. | पुरुषसूक्तम् |
| 50 | पैङ्गि. | पैङ्गिश्रुतिः |
| 51 | पौत्रा.श्रु. | पौत्रायणश्रुतिः |
| 52 | पौष्या.श्रु. | पौष्यायणश्रुतिः |
| | (ब) | |
| 53 | बृ.त. | बृहत्तन्त्रम् |
| 54 | बृ.श्रु | बृहच्छ्रुतिः |
| 55 | बृह | बृहदारण्यकोपनिषत् |
| 56 | बृहत्सं | बृहत्संहिता |
| 57 | ब्र.त. | ब्रह्मतर्कम् |
| 58 | ब्र.पु. | ब्रह्माण्डपुराणम् |
| 59 | ब्र वै.पु. | ब्रह्मवैवर्तपुराणम् |
| 60 | ब्र.सू. | ब्रह्मसूत्रम् |
| 61 | ब्रा.पु. | ब्राह्मपुराणम् |
| | (भ) | |
| 62 | भ.गी. | भगवद्गीता |

| क्रमसं | संज्ञाक्षराणि | विवरणम् |
|---|---|---|
| 63 | भ.प. | भविष्यत्पर्व |
| 64 | भवि.पु. | भविष्यत्पुराणम् |
| 65 | भाग. | भागवतम् |
| 66 | भाग.त. | भागवततन्त्रम् |
| 67 | भाग.ता. | भागवततात्पर्यम् |
| 68 | भाल्ल.श्रु. | भाल्लवेयश्रुतिः |

(म)

| | | |
|---|---|---|
| 69 | म.कौ.पु | महाकौर्मपुराणम् |
| 70 | म.ता.नि. | महाभारततात्पर्यनिर्णयः |
| 71 | म.ना.उ. | महानारायणोपनिषत् |
| 72 | म.पु | मत्स्यपुराणम् |
| 73 | म.व्या.सू. | महाव्याकरणसूत्रम् |
| 74 | महा. | महाभारतम् |
| 75 | महाना. | महानारायणीयम् |
| 76 | महो. | महोपनिषत् |
| 77 | मां.उ. | माण्डूक्योपनिषत् |
| 78 | माठ. | माठरश्रुतिः |
| 79 | माध्य.श्रु. | माध्यन्दिनायनश्रुतिः |
| 80 | मुं. | मुण्डकोपनिषत् |
| 81 | मौ.श्रु. | मौद्गल्यश्रुतिः |

(व)

| क्रमसं | संज्ञाक्षराणि | विवरणम् |
|---|---|---|
| 82 | वत्स | वत्सश्रुतिः |
| 83 | वरा.पु. | वराहपुराणम् |
| 84 | वा.पु. | वामनपुराणम् |
| 85 | वायु. | वायुप्रोक्तम् |
| 86 | व्योमसं. | व्योमसंहिता |
| | (श) | |
| 87 | शत.ब्रा | शतपथब्राह्मणम् |
| 88 | शाण्ड.श्रु | शाण्डल्यश्रुतिः |
| 89 | शाण्डि.श्रु | शाण्डिल्यश्रुतिः |
| 90 | श्वे.उ | श्वेताश्वतरोपनिषत् |
| | (ष) | |
| 91 | षट्.उ. | षट्प्रश्नोपनिषत् |
| | (स) | |
| 92 | सदा. | सदाचारस्मृतिः |
| 93 | साम.अग्नि | सामवेदे अग्निवेश्यशिक्षा |
| | सौत्रा.श्रु. | सौत्रायणश्रुतिः |
| 95 | सौ.प. | सौपर्णश्रुतिः |
| 96 | स्कां.पु. | स्कान्दपुराणम् |

# शुद्धिपत्रिका

| मुद्रितं | पठनीयम् | पृ.सं | पंक्तिः |
|---|---|---|---|
| शेषपैलाभ्या | शेषपैलाभ्यां | 4 | 11 ता.प्र |
| सदाचारस्मृतेः | सदाचारस्मृतेः | 5 | 1 टि. |
| ब्रह्य | ब्रह्म | 8 | 12 ता.प्र |
| उ–तरः | उत्तरः | 11 | 4 ता.प्र. |
| गायत्रीश्रुतेश्र | गायत्रीश्रुतेश्च | 18 | 9 ता.प्र |
| ब्र शब्दस्य | ब्रह्मशब्दस्य | 27 | 4 ता.प्र |
| ब्रह्म''ति | ब्रह्म'' इति | 45 | 9 ता.प्र |
| इत्यर्थ | इत्यर्थः | 52 | 7 पा |
| विरुद्धवात् | विरुद्धत्वात् | 60 | 3 मू |
| विरुद्धत्वत् | विरुद्धत्वात् | 60 | 7 ता.प्र |
| निपेद्धु | निपेध्दुं | 63 | 1 मू. |
| अनादिनिधता | अनादिनिधना | 63 | 4 ता.प्र |
| श्रुतिः | स्मृतिः | 63 | 2 टि. |
| ............ | छा० उप. ६-२-१ | 65 | 1 टि. |
| सृष्ट्यर्थ | सृष्ट्यर्थं | 67 | 8 ता.प्र. |
| कथ | कथं | 68 | 5 ता.प्र. |
| निरश्विर | निरीश्वर | 75 | 13 ता.प्र. |
| उत्तरोत्पत्ति | उत्तरोत्तरोत्पत्ति | 77 | 10 ता.प्र. |
| २–२–४ | २–२–५ | 79 | 2 ता.प्र. |
| श्रतौ | श्रुतौ | 84 | 14 ता.प्र. |
| भ्रान्ती | भ्रान्ति | 86 | 9 ता.प्र. |
| घमिर्णं | धर्मिणं | 103 | 13 ता.प्र. |

| मुद्रितं | पठनीयम् | पृ.सं | पंक्तिः |
|---|---|---|---|
| खल्वय | खल्वयं | 110 | 4 ता.प्र. |
| तिश्रु | श्रुति | 117 | 13 ता.प्र. |
| रहङ्कर | रहङ्कारा | 122 | 5 ता.प्र. |
| धृत | धृतं | 125 | 3 ता.प्र. |
| गन्तृ अमा | गन्त्रमा | 137 | 7 ता.प्र. |
| अनुष्ठेयं, | अनुष्ठेयं | 141 | 3 ता.प्र. |
| २ छान्दोग्योपनिषत् | २ भगवद्गीता | 144 | 2,3 टि. |
| ३ भगवद्गीता | ३ छान्दोग्योपनिषत् | 144 | 2,3 टि. |
| शैरवो | रौरवो | 147 | 5 ता.प्र. |
| गत्यादिकाले | गत्यादिफले | 149 | 1 ता.प्र. |
| विद्या र्म | विद्याकर्म | 149 | 10 ता.प्र. |
| दैवतैकयं | दैवतैक्यं | 152 | 4 ता.प्र. |
| तदैकयं | तदैक्यं | 152 | 8 ता.प्र. |
| धूमदि | धूमादि. | 152 | 10 ता.प्र. |
| योजन | योजना | 173 | 4 ता.प्र. |
| भ कृत्व | भाकृत्वं | 183 | 5 ता.प्र. |
| वेदेश्चेति | वेदैश्चेति | 188 | 7 ता.प्र. |
| उपसना | उपासना | 189 | 11 ता.प्र. |
| तिपय | कतिपय | 194 | 6 ता.प्र. |
| सर्वैरूपा | सर्वैरुपा | 196 | 14 ता.प्र. |
| उपासन | उपासनं | 199 | 3 ता.प्र. |
| सर्वोपास्याम् | सर्वोपास्यम् | 203 | 8 ता.प्र. |
| रनाधि | रनधि | 203 | 9 ता.प्र. |
| तूपायशब्द | तूपायनशब्द | 204 | 3 ता.प्र. |

| मुद्रितं | पठनीयम् | पृ.सं | पंक्तिः |
|---|---|---|---|
| छन्द | च्छन्द | 204 | 3 ता.प्र. |
| त्यपगान | त्युपगान | 204 | 4 ता.प्र. |
| तम्येक | तम्यैक | 207 | 17 ता.प्र. |
| सत्य | सत्यं | 210 | 14 ता.प्र. |
| ध्यानेनैव | ध्यानेनैव | 215 | 5 ता.प्र. |
| आचार्याद्र ध्रूव | आचार्याद्धयेव | 217 | 13 ता.प्र. |
| बहकर्म | बहुकर्म | 221 | 14 ता.प्र. |
| ब्रिम्बोपासन | बिम्बोपासना | 225 | 16 ता.प्र. |
| योग्मेन | योग्येन | 226 | 4 ता.प्र. |
| नेकेधा | नेकधा | 231 | 10 ता.प्र. |
| तदेवो | तद्देवो | 235 | 6 ता.प्र. |
| अपरोक्षाज्ञने | अपरोक्षज्ञाने | 241 | 2 ता.प्र. |
| तदकांक्षा | तदाकांक्षा | 245 | 3 ता.प्र. |
| वरुण | वरुणं | 254 | 7 ता.प्र. |
| भ्यासदि | भ्यासादि | 254 | 13 ता.प्र. |
| तद्येशीका | तद्यथैषीका | 263 | 1 ता.प्र. |
| प्रायश्रित्त | प्रायश्चित्त | 263 | 11 ता.प्र. |
| तस्यानन्दा | तस्यानन्या | 270 | 6 ता.प्र. |
| विलीयन्स्त | विलीयन्ते | 272 | 2 ता.प्र. |
| स्कन्द: | स्कन्धः | 274 | 2 टि. |
| प्राप्तौ | प्राप्ते | 279 | 7 ता.प्र. |
| अर्चिरदि | अर्चिरादि | 281 | 3 मू. |
| प्राप्यत्व | प्राप्यत्वं | 282 | 12 ता.प्र. |
| तत्र | नात्र | 283 | 2 ता.प्र. |

| मुद्रितं | पठनीयम् | पृ.सं | पंक्तिः |
|---|---|---|---|
| वरुण गच्छति | वरुणं गच्छति | 284 | 8 ता.प्र. |
| बाधक | बाधकं | 285 | 1 ता.प्र. |
| बदरि | बादरि | 287 | 10 ता.प्र. |
| हायव | हायैव | 292 | 6 ता.प्र. |
| सेतु | सेतुं | 293 | 4 ता.प्र. |
| वानुभति | वानुभवति | 295 | 1 ता.प्र. |
| भगद्भुक्त | भगवद्भुक्त | 297 | 1 ता.प्र. |
| हरिद्दवष्ट्यै | हरिद्दष्ट्यै | 299 | 3 ता.प्र. |
| मुक्ताना | मुक्तानां | 303 | 3 ता.प्र. |
| न मुक्त | न मुक्तः | 306 | 5 ता.प्र. |
| माहिषस्य | महिषस्य | 308 | 1 ता.प्र. |

## शुद्धिपत्रिकास्थसंज्ञाक्षरविवरणम्

मू = मूलम्

ता प्र. = तात्पर्यप्रकाशिका

टि = टिप्पणी

पा = पाठान्तरम्

